VEDA MIMAMSA RESEARCH CENTRE SERIES NO. 1

# VYASA SIKSHA

*Alongwith Vedataijas Commentary of*
**Sri Surya Narain Suravadhani**

&

*Sarva Lakshanmanjari Sangraha of*
**Sri Raja Ghanpathi**

*Foreword By*
**Dr. M. CHANNA REDDY**
Governor, Utter Pradesh

*Edited By*
**Acharya Sri P. N. Pattabhirama Sastri**

VEDA MIMAMSA RESEARCH CENTRE
4/7 HANUMAN GHAT, VARANASI

वेदमीमांसानुसन्धानकेन्द्रम्
Veda Mimamsa Research Centre

# व्यासशिक्षा

श्रीसूर्यनारायणसूरावधानिविरचितवेदतैजसाख्यया
व्याख्यया
श्रीराजाघनपाठिविरचितसर्वलक्षणमञ्जर्यास्सङ्ग्रहेण च
समेता

आचार्य श्रीपट्टाभिरामशास्त्रिणा
भूमिकादिभिस्संयोज्य
सम्पादिता

वेदमीमांसानुसन्धानकेन्द्रेण प्रकाशिता
१९७६

॥ श्रीः ॥

श्री
चन्द्रमौलीश्वरा

श्रीमत्परमहंस परिव्राजकाचार्यवर्य
श्रीमच्छङ्कर भगवत्पादप्रतिष्ठित
श्रीकाञ्ची कामकोटि पीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्र सरस्वती श्रीपादादेशानुसारेण
श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः
शास्त्ररत्नाकर ब्रह्मश्री पट्टाभिरामशास्त्रिविषये
क्रियते नारायण स्मृतिः

'सा हि श्रीरमृता सताम्' इति महीयमानायाः श्रुत्याः घ्राणेन्द्रियतया रूपितासु शिक्षासु व्यासशिक्षाभिधानो ग्रन्थः कृष्णयजुर्वेदतैत्तिरीयशाखासम्बन्धी वरीवर्ति। एष ग्रन्थो वेदाध्येतॄणामत्यावश्यकोऽष्टषष्टिवर्षेभ्यः पूर्वं ग्रन्थलिप्यां दक्षिण भारते वेदतैजसव्याख्यया सर्वलक्षणमञ्जरीसङ्ग्रहेण च सहितः प्रकाशितः।

अधुनास्य ग्रन्थस्य दुर्लभत्वम् अस्य सर्वत्र भारते प्रचारणावश्यकताञ्च परिचिन्त्य भवता वाराणस्यां 'वेदमीमांसानुसन्धानकेन्द्र' द्वारा नागरलिप्यामयं प्रकाश्यत इति विदित्वा मोदामहे।

सस्वरवर्णोच्चारणनियामकोऽयं ग्रन्थो वेदाध्येतॄणां विद्यार्थिनां यथानियमं वर्णोच्चारणे उपकारको भूत्वा, तत्तत्कर्मणा समवेतमन्त्रसम्यगुच्चारणद्वारा यथोक्तफलसाधनतां सम्पादयेदित्याशास्महे।

श्रीकाञ्ची क्षेत्रम्
अनलाश्विन शुद्ध
( विजया ) दशमी

नारायणस्मृतिः

## व्यासशिक्षाप्रकरणसूची





श्रीः

# भूमिका

प्राक्तना महर्षयो वेदानां शब्दतोऽर्थतश्च संरक्षणाय राजसदनस्य नैकविधानि दुस्तराणि दुर्गाणीव षडङ्गानि निरमासत । दुर्गाणीमानि सुपरिशील्य तत्र प्रवेशमवाप्य वेदसदनं प्रवेष्टव्यं भवति राजसदनमिव । वेदस्तु कल्पतरुरिव समेषां पुरुषाभिलषितानामर्थानां संसाधनाय परमं साधनम् । अतः केवलं शब्दसमूह एव वेद इति न भ्रमितव्यम् । तत्र विविधा अर्था अपि उच्चावचास्सन्ति । तद्गतशब्दानर्थांश्च व्यवस्थया परिरक्षितुं त्रीणि त्रीण्यङ्गानि, उपाङ्गानि च न्यायमीमांसापुराणादीनि । षट्स्वङ्गेषु शिक्षापि मुख्यं स्थानमावहति । वेदानां संरक्षणे प्रथमं साधनम् वेदाध्ययनम् । अध्ययनञ्च गुरुमुखोच्चारणानूच्चारणम्, न तु पठनमात्रम् । भारतस्य पुरातनं गौरवं यदि सत्यं वयं संरक्षितुकामास्स्मः, तर्हि तद्रक्षणाय गुरुमुखोच्चारणानूच्चारणरूपं मुख्यं साधनमस्माभिरवश्यमवलम्बनीयम् । आधुनिकदृष्ट्या ग्रन्थप्रकाशनध्वनिग्रहणयोः दुर्भाग्यवशेनावश्यकता समापतिता, किन्तु नैताभ्यां भारतस्य पुरातनं तद्गौरवं संरक्षितं भवेदिति तर्कयामि । प्राक्तनानामध्ययनपरिपाट्यां विचिन्त्यमानायां कियान् प्रयासस्तैरवलम्बित इति परिलक्ष्येत । अध्ययनञ्च तैस्त्रिधा विभक्तम्—ग्रहणम्, धारणम्, ब्रह्मयज्ञश्चेति । तत्र ग्रहणधारणाध्ययने संहिताब्राह्मणयोः नियमेन भवतः । ब्रह्मयज्ञाध्ययनन्तु गृहीतस्य धारितस्य च वेदभागस्य प्रत्यहमंशतो नियमेन मध्याह्नकाले पारायणात्मकम् । अधिपूर्वकस्य इङ्धातोरत्रैव प्रयोगः, न तु पठने वाचने वेति मीमांसकसम्प्रदायः । याज्ञिकानां मीमांसकानाञ्च अधीतिप्रयोगो वेदस्यैव, न तु काव्यादेः । अत एव अधिपूर्वकस्य इङ्धातोः गुरुमुखोच्चारणानूच्चारणमर्थ इति ते व्यवहरन्ति । मन्त्राणां जपः पारायणमिति व्यवहारः । अत्र गुरुमुखोच्चारणानूच्चारणाभावेनाधीतिप्रयोगो गौणः । तत्तद्वेदानुसारेण काण्डम् प्रश्नः ( प्रपाठकः ) अनुवाकः पञ्चाशत्पदपरिमितो भागः, मण्डलम्, अष्टकम्, वर्गः, सूक्तम्,

मन्त्रः, अध्यायः, कण्डिका इत्यादयो विभागाः, तेषामनुभागाश्च न केवलम् अध्यापनसौकर्यायैव, किन्तु तेषु तेषु यज्ञेषु विनियोगायापि । एवं प्रकल्पितेषु छात्राणां सामर्थ्यमवधार्याचार्यः प्रथमत आरभ्य कञ्चन भागं निर्धार्याध्यापयितुमारभते । तदत्र कञ्चन मन्त्रमादायाध्ययनाध्यापनप्रकारं पुरातनैः परिचालितं प्रदर्शयामः । तत्र च शिक्षाग्रन्थस्य कीदृश उपकार इति विवेचयामः ।

अध्ययनारम्भे गुरुर्हरिपदसहितमोङ्कारं प्रथमं शिक्षयेत्, एवमध्ययनान्तेऽपि तादृशमोङ्कारं शिक्षयेत् । आदौ "हरिः ओम्" इति सर्वोदात्तत्वेन, अध्ययनावसाने च "हरिः ओम्" इति च शिक्षणम् । इदं नित्यमङ्गम् । एवं कर्तव्यत्वेन शिक्षाग्रन्थश्शिक्षयति । यथा—

'आद्यन्तप्रणवौ नित्यौ यथा हरिपदं तथा ।
सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते ॥
हरिपदे विसर्गस्य न सन्धिः प्रणवोत्तरे ।
विसर्गस्यार्धमात्रात्वं विरामो मात्रिकस्स्मृतः ॥
आदौ हरिपदं सर्वमुदात्तञ्चेष्यते बुधैः ।
अन्ते रिशब्दस्स्वारः स्याद्विसर्गः प्रचयः स्मृतः ॥
ओमो नित्यानुदात्तत्वं सर्वत्र प्रोच्यते तथा ।
प्रमाणं लक्षणं यद्वच्छिष्टपाठस्तथैव च' ॥ इति ।

'अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति' । इति मन्त्रः ।

अत्रैकादश पदानि सन्ति । सकृदेतेषां समेषां पदानामाचार्योच्चारणं निशम्य तानि पदानि छात्रा अनूच्चारयेयुरिति तु न सम्भवत्येव । अत आचार्यः पदद्वयं त्रयं वा संहितातः पृथक्कृत्योच्चारयेत् । तदुच्चारणञ्च सावधानेन मनसा छात्रा द्विरुच्चारयेयुः । एवं निर्धारितभागपर्यन्तं प्रथमदिनेऽध्यापनम् । इदमध्ययनं दशदिनव्यापि भवति । अर्थात् द्वितीयां तिथिमारभ्य द्वादशीतिथिपर्यन्तम् । आचार्यः छात्राणां कौशलमुच्चारणपाटवञ्च संवीक्ष्य क्रमशः पदानि संवर्ध्याध्यापयेत्, छात्राश्च द्विरुच्चरयेयुः । एवमष्टौ दिनान्यध्याप्य नवमदशमदिनयोः समग्रं पञ्चाशत्पदपरिमितं भागम्, अनुवाकम्, सूक्तं कण्डिकादिकं वाऽध्यापयति, छात्राश्च द्विर्द्विस्तदुच्चारयन्ति । इदं ग्रहणाध्ययनं कथ्यते । तत्र निर्दिष्टभागान्तर्गतस्यैकैकं पदं दशसु दिनेष्वेकैकः छात्रो विंशतिवारमुच्चारयतीति सिध्यति । इदं ग्रहणाध्ययनम् । तदनन्तरं धारणाध्ययनं छात्रैरध्यापकसन्निधावनध्यायदिनानि विहाय दश द्वादश दिनानि कर्तव्यं भवति । पूर्वस्मिन् पक्षे गृहीताद् भागात् पञ्चाशत्पदभागं यथायोग्यमन्येषु वेदेषु भागं वा पृथक्कृत्य दश दशवारमावर्तयेयुः । अस्मिन् धारणाध्ययने एकैकश्छात्र एकैकं पदं दशसु

दिनेषु शतवारमावर्तयतीति सिध्यति । पूर्वं कृतद्विरुच्चारणेन सह विंशत्युत्तरशतवारमावर्तनं प्रतिपदस्य सम्पन्नं भवति । द्वितीयपक्षे नूतनो निर्दिष्टो भागः । एवमुत्तरभागस्याध्ययनम् । यावान् भागो वाचो विधेयो जातस्तावतः प्रत्यहं नियमेन भागशः आवर्तनम् । इदं ब्रह्मयज्ञाध्ययनम् । एवं यथावकाशमनेकाः श्रेण्यो भवेयुः । सर्वत्राचार्यस्य दृष्टिर्भवति । क्वापि मात्रयाप्यशुद्धिर्यथा न भवेत्तथाचार्यः परिपालयेत् । इयं रीतिरेकस्य संहिताब्राह्मणात्मकस्य वेदस्य ।

इतोऽपि विस्मयजनकमाचार्यैरध्यापनमक्रियत । तच्च मनसापीदानीं चिन्तयितुं न शक्यते । नाम्नैव केवलमिदानीं त्रिवेदिनः । त्रिवेदित्वं ते पुराध्यापनेनात्मनः प्राकाशयन् । न खलु पृथक्पृथक् त्रयाणामध्यापनेन, किन्त्वेकदैव एकत्रैव नियते स्थाने तत्तद्वेदीयान् पृथक्पृथक् छात्रानुपवेश्याध्यापयामासुः । अध्यापनसमये यस्मिन्नेव वेदे य एव छात्रो मात्रयाप्यक्षरे स्वरे वा स्खलति तं विज्ञाय साधूच्चारणं संशिक्ष्य तत्तद्वेदीयोपरितनवाक्यान्यध्यापयाम्बभूवुः । अहो कियती स्मरणशक्तिः ? कियद्वा सहनशीलता, विभिन्नवेदानां शब्दघोषसंकुलेऽपि श्रोत्रेन्द्रिये कियती दोषग्रहणपटुता ? तत्रापि विशिष्य तस्यैव ग्रहणं यश्च स्खलति । नायमतिचिरन्तनोदन्तः, इतः पञ्चाशद्वर्षेभ्यः पूर्वमप्यासन् ब्रह्मश्रीविश्वेश्वरश्रौतिनः, अन्येऽपि महात्मानः । अनितरसाधारणी चित्तैकाग्रतैतेषाम् । एषां स्थितिं पर्यवेक्ष्याधीतिनोऽपि तथैवासन् । आचार्याः स्वयं शब्दान् यथावदुच्चारयन्तः शिष्याणामपि बहूनामुच्चारणावसरे साधुत्वासाधुत्वयोर्ध्यानं दद्युः । तदिदं शिक्षाकारः प्रथमं शिक्षयति—

"व्याघ्री यथा हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥" इति ।

( शम्भुशिक्षा )

एवमेव—

"सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः ।
एतद्युक्तः पठेद्वेदं स वेदफलमश्नुते ॥ इति ॥

( व्या० शि० ५०३ )

अत्र सुव्यक्तपदेन स्थानकरणादिनियमपालनम् । सुस्वरपदेनोदात्तानुदात्तादीनां नासादिदोषराहित्यम् । धैर्यपदेनाव्यग्रता, तच्चित्तत्वपदेन च तत्रैव लीनत्वमभिप्रेयते । अध्यापनावसरे छात्र एवंगुणसम्पन्नोऽस्ति न वेत्यत्र जागरूको भवेदाचार्यः । सङ्घशोऽधीयमानेषु छात्रेषु के वा

GOVERNOR




UTTAR PRADESH

**RAJ BHAVAN, NAINITAL**
*July 2, 1976*

# FOREWORD

I deem it a privilege indeed to have been given the opportunity to write the Foreword to this learned work edited by a renowned and eminent scholar, Pandit P. N. Pattabhirama Sastri. A tireless reseacher and erudite scholar of Sanskrit Literature, Mimamsa Philosophy and Vedic Learning, he has contributed to several publications on the subject. He is a savant by his own right and is competent enough to comment on such an abstruse and a highly technical subject as 'Siksha'. His valuable services to the cause of Sanskrit were duly recognised in 1973, when he was given the Presidential Award to Oriental Scholars.

The spoken language consists of different phenomena, and the foremost among them may be referred to as phonetic peculiarity. The ancient seers must have realised the basic fact that the accuracy of pronunciation and the purity of spoken words must be given a prominent place in the hierarchy of all learning. They pursued, with deep interest, the study of phonetics, under the banner 'Siksha' which has no parallel in entire antiquity. The Sikshasastra, or the science of phonetics, which teaches the proper pronunciation and the manner of

reciting the Vedas, was regarded as one of the six Vedangas. It has been rightly regarded as the preserver of the Vedas. There are four stages in the development of the scope of Siksha, viz., the instruction in pronunciation, general phonetics, minute observation in phonetic phenomena and identification with treatises on applied phonetics. It is really surprising that such a remarkably important discipline has not attracted the desired level of attention of researchers which is evident by the relative lack of editions of Sikshasastras.

It was by the pioneering inspirational endeavours of late Prof. Griffith and Prof. Thibaut that Prof: Yugal Kishore Vyas edited several of the Sikshasastras alongwith commentaries on some of them in the year 1893. Though this collection contained Sikshas of all the four Vedas, several important ones were not included therein, and it is really surprising that very little serious effort has been made since then to make all of them available in print.

The present Siksha, the Vyas Siksha, belongs to the Taittiriya Sakha of the Krishna Yajvrveda. There are nine primary and six secondary Sikshas enlisted under Taittiriya Sakha and the Vyasa Siksha occupies a prominent position amongst the primary ones. The monumental efforts of Lueders, during the last century, who edited Vyasa Siksha in original only, was followed by its edition alongwith the Vedataijasam Vyakhya of Pt. Surya Narayana Suravadhani who belonged to Andhra Pradesh and Sarvalakshanamanjari by Brahmashri Raja Ghanpathi in the first decade of the present century. However, both these are now out of print and serious and conscientious researchers have been put to much inconvenience owing to their non-availability.

The Vyasa Siksha spreads over twentyeight chapters, ranging from pronunciation to the result thereof, encompassing in between all the matters related with the phonetics of Krishna Yajurveda It consists of counting of Varnas, their names and definitions. It also contains detailed description of each of the Varna, such as, the tone, the found, the articulation, the deity, the group to which that Varna belongs, and the proper method of pronouncing the same. It also discusses scientifically the matter of doubling the quantity and its position is unique among other Sikshas. in the sense that it mentions three parts of the mouth passage - the beginning, the middle and the end in articula-

tion of the sound, instead of referring to the head and uvula, as usual. While describing the results of pronunciation, it also provides some points of practical importance which are relevant even today. During olden times, and in Andhra Pradesh even hardly sixty years ago, the Vedic enchanters used to invoke, arouse, please and offer to Vayu, Agni, Bhumi, Chandra and Surya, so as to attain their blessings as also the safety against epidemics, etc. That is a pointer towards sincere concern with the natural belongings and bowing before them is always helpful.

I heartily congratulate Pt. Pattabhirama Sastri who has, by his deep devotion and untiring spirit, made this substantial contribution to the printed literature available in Sanskrit, concerning the traditional exposition of the method of pronunciation etc. by bringing out a very carefully prepared edition of this distinguished work, keeping in view all the available manuscripts. In a very scholarly Introduction, the editor has expounded, critically evaluated and compared the Vedic phonetics with some of the concepts of modern linguistics and has answered several related issues about which there has been much confusion so far. I sincerely wish Pt. Pattabhirama Sastri to continue his invaluable efforts towards unveiling wider horizons of oriental learning and 'Dev-Vani' by bringing out similar editions of other 'Sikshas' too.

M. CHANNA REDDY

श्रीः

# भूमिका

प्राक्तना महर्षयो वेदानां शब्दतोऽर्थतश्च संरक्षणाय राजसदनस्य नैकविधानि दुस्तराणि दुर्गाणीव षडङ्गानि निरमासत । दुर्गाणीमानि सुपरिशील्य तत्र प्रवेशमवाप्य वेदसदनं प्रवेष्टव्यं भवति राजसदनमिव । वेदस्तु कल्पतरुरिव समेषां पुरुषाभिलषितानामर्थानां संसाधनाय परमं साधनम् । अतः केवलं शब्दसमूह एव वेद इति न भ्रमितव्यम् । तत्र विविधा अर्था अपि उच्चावचास्सन्ति । तद्गतशब्दानर्थांश्च व्यवस्थया परिरक्षितुं त्रीणि त्रीण्यङ्गानि, उपाङ्गानि च न्यायमीमांसापुराणादीनि । षट्स्वङ्गेषु शिक्षापि मुख्यं स्थानमावहति । वेदानां संरक्षणे प्रथमं साधनम् वेदाध्ययनम् । अध्ययनञ्च गुरुमुखोच्चारणानूच्चारणम्, न तु पठनमात्रम् । भारतस्य पुरातनं गौरवं यदि सत्यं वयं संरक्षितुकामास्स्मः, तर्हि तद्रक्षणाय गुरुमुखोच्चारणानूच्चारणरूपं मुख्यं साधनमस्माभिरवश्यमवलम्बनीयम् । आधुनिकदृष्ट्या ग्रन्थप्रकाशनध्वनिग्रहणयोः दुर्भाग्यवशेनावश्यकता समापतिता, किन्तु नैताभ्यां भारतस्य पुरातनं तद्गौरवं संरक्षितं भवेदिति तर्कयामि । प्राक्तनानामध्ययनपरिपाट्यां विचिन्त्यमानायां कियान् प्रयासस्तैरवलम्बित इति परिलक्ष्येत । अध्ययनञ्च तैस्त्रिधा विभक्तम्—ग्रहणम्, धारणम्, ब्रह्मयज्ञश्चेति । तत्र ग्रहणधारणाध्ययने संहिताब्राह्मणयोः नियमेन भवतः । ब्रह्मयज्ञाध्ययनन्तु गृहीतस्य धारितस्य च वेदभागस्य प्रत्यहमंशतो नियमेन मध्याह्नकाले पारायणात्मकम् । अधिपूर्वकस्य इङ्धातोरत्रैव प्रयोगः, न तु पठने वाचने वेति मीमांसकसम्प्रदायः । याज्ञिकानां मीमांसकानाञ्च अधीतिप्रयोगो वेदस्यैव, न तु काव्यादेः । अत एव अधिपूर्वकस्य इङ्धातोः गुरुमुखोच्चारणानूच्चारणमर्थ इति ते व्यवहरन्ति । मन्त्राणां जपः पारायणमिति व्यवहारः । अत्र गुरुमुखोच्चारणानूच्चारणाभावेनाधीतिप्रयोगो गौणः । तत्तद्वेदानुसारेण काण्डम् प्रश्नः ( प्रपाठकः ) अनुवाकः पञ्चाशत्पदपरिमितो भागः, मण्डलम्, अष्टकम्, वर्गः, सूक्तम्,

मन्त्रः, अध्यायः, कण्डिका इत्यादयो विभागाः, तेषामनुभागाश्च न केवलम् अध्यापनसौकर्यार्थमेव, किन्तु तेषु तेषु यज्ञेषु विनियोगायापि । एवं प्रकल्पितेषु छात्राणां सामर्थ्यमवधार्याचार्यः प्रथमत आरभ्य कञ्चन भागं निर्धार्याध्यापयितुमारभते । तदत्र कञ्चन मन्त्रमादायाध्ययनाध्यापनप्रकारं पुरातनैः परिचालितं प्रदर्शयामः । तत्र च शिक्षाग्रन्थस्य कीदृश उपकार इति विवेचयामः ।

अध्ययनारम्भे गुरुर्हरिपदसहितमोङ्कारं प्रथमं शिक्षयेत्, एवमध्ययनान्तेऽपि तादृशमोङ्कारं शिक्षयेत् । आदौ "हरिः ओम्" इति सर्वोदात्तत्वेन, अध्ययनावसाने च "हरिः ओम्" इति च शिक्षणम् । इदं नित्यमङ्गम् । एवं कर्तव्यत्वेन शिक्षाग्रन्थश्शिक्षयति । यथा—

'आद्यन्तप्रणवौ नित्यौ यथा हरिपदं तथा ।
सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते ॥
हरिपदे विसर्गस्य न सन्धिः प्रणवोत्तरे ।
विसर्गस्यार्धमात्रात्वं विरामो मात्रिकस्स्मृतः ॥
आदौ हरिपदं सर्वमुदात्तञ्चोच्यते बुधैः ।
अन्ते रिशब्दस्स्वारः स्याद्विसर्गः प्रचयः स्मृतः ॥
ओमो नित्यानुदात्तत्वं सर्वत्र प्रोच्यते तथा ।
प्रमाणं लक्षणं यद्वच्छिष्टपाठस्तथैव च' ॥ इति ।

'अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति' । इति मन्त्रः ।

अत्रैकादश पदानि सन्ति । सकृदेतेषां समेषां पदानामाचार्योच्चारणं निशम्य तानि पदानि छात्रा अनूच्चारयेयुरिति तु न सम्भवत्येव । अत आचार्यः पदद्वयं त्रयं वा संहितातः पृथक्कृत्योच्चारयेत् । तदुच्चारणञ्च सावधानेन मनसा छात्रा द्विरुच्चारयेयुः । एवं निर्धारितभागपर्यन्तं प्रथमदिनेऽध्यापनम् । इदमध्ययनं दशदिनव्यापि भवति । अर्थात् द्वितीया तिथिमारभ्य द्वादशीतिथिपर्यन्तम् । आचार्यः छात्राणां कौशलमुच्चारणपाटवञ्च संवीक्ष्य क्रमशः पदानि संवर्ध्याध्यापयेत्, छात्राश्च द्विरुच्चरयेयुः । एवमष्टौ दिनान्यध्याप्य नवमदशमदिनयोः समग्रं पञ्चाशत्पदपरिमितं भागम्, अनुवाकम्, सूक्तं कण्डिकादिकं वाऽध्यापयति, छात्राश्च द्विर्द्विस्तदुच्चारयन्ति । इदं ग्रहणाध्ययनं कथ्यते । तत्र निर्दिष्टभागान्तर्गतस्यैकैकं पदं दशसु दिनेष्वेकैकः छात्रो विंशतिवारमुच्चारयतीति सिध्यति । इदं ग्रहणाध्ययनम् । तदनन्तरं धारणाध्ययनं छात्रैरध्यापकसन्निधावनध्यायदिनानि विहाय दश द्वादश दिनानि कर्तव्यं भवति । पूर्वस्मिन् पक्षे गृहीताद् भागात् पञ्चाशत्पदभागं यथायोग्यमन्येषु वेदेषु भागं वा पृथक्कृत्य दश दशवारमावर्तयेयुः । अस्मिन् धारणाध्ययने एकैकश्छात्र एकैकं पदं दशसु

दिनेषु शतवारमावर्तयतीति सिध्यति । पूर्वं कृतद्विरुच्चारणेन सह विंशत्युत्तरशतवारमावर्तनं प्रतिपदस्य सम्पन्नं भवति । द्वितीयपक्षे नूतनो निर्दिष्टो भागः । एवमुत्तरभागस्याध्ययनम् । यावान् भागो वाचो विधेयो जातस्तावतः प्रत्यहं नियमेन भागश आवर्तनम् । इदं ब्रह्मयज्ञाध्ययनम् । एवं यथावकाशमनेकाः श्रेण्यो भवेयुः । सर्वत्राचार्यस्य दृष्टिर्भवति । क्वापि मात्रयाप्यशुद्धिर्यथा न भवेत्तथाचार्यः परिपालयेत् । इयं रीतिरेकस्य संहिताब्राह्मणात्मकस्य वेदस्य ।

इतोऽपि विस्मयजनकमाचार्यैरध्यापनमक्रियत । तच्च मनसापीदानीं चिन्तयितुं न शक्यते । नाम्नैव केवलमिदानीं त्रिवेदिनः । त्रिवेदित्वं ते पुराध्यापनेनात्मनः प्राकाशयन् । न खलु पृथक्पृथक् त्रयाणामध्यापनेन, किन्त्वेकदैव एकत्रैव नियते स्थाने तत्तद्वेदीयान् पृथक्पृथक् छात्रानुपवेश्याध्यापयामासुः । अध्यापनसमये यस्मिन्नेव वेदे य एव छात्रो मात्रयाप्यक्षरे स्वरे वा स्खलति तं विज्ञाय साधूच्चारणं संशिक्ष्य तत्तद्वेदीयोपरितनवाक्यान्यध्यापयाम्बभूवुः । अहो कियती स्मरणशक्तिः ? कियद्वा सहनशीलता, विभिन्नवेदानां शब्दघोषसंकुलेऽपि श्रोत्रेन्द्रिये कियती दोषग्रहणपटुता ? तत्रापि विशिष्य तस्यैव ग्रहणं यश्च स्खलति । नायमतिचिरन्तनोदन्तः, इतः पञ्चाशद्वर्षेभ्यः पूर्वमप्यासन् ब्रह्मश्रीविश्वेश्वर श्रौतिनः, अन्येऽपि महात्मानः । अनितरसाधारणी चित्तैकाग्रतैतेषाम् । एषां स्थितिं पर्यवेक्ष्याधीतिनोऽपि तथैवासन् । आचार्याः स्वयं शब्दान् यथावदुच्चारयन्तः शिष्याणामपि बहूनामुच्चारणावसरे साधुत्वासाधुत्वयोर्ध्यानं दद्युः । तदिदं शिक्षाकारः प्रथमं शिक्षयति—

"व्याघ्री यथा हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ।।" इति ।

( शम्भुशिक्षा )

एवमेव—

"सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः ।
एतद्युक्तः पठेद्वेदं स वेदफलमश्नुते ।। इति ।।

( व्या० शि० ५०३ )

अत्र सुव्यक्तपदेन स्थानकरणादिनियमपालनम् । सुस्वरपदेनोदात्तानुदात्तादीनां नासादिदोषराहित्यम् । धैर्यपदेनाव्यग्रता, तच्चित्तत्वपदेन च तत्रैव लीनत्वमभिप्रेयते । अध्यापनावसरे छात्र एवंगुणसम्पन्नोऽस्ति न वेत्यत्र जागरूको भवेदाचार्यः । सङ्घशोऽधीयमानेषु छात्रेषु के वा

एतद्गुणविहीना इत्यवगतिराचार्याणामनिर्वर्णनीयैव कुशलतेति स्वीकर्तव्यम् । आचार्याध्यापनावसरे सर्वेऽपि छात्रा आचार्योन्मुखा एव भवेयुः । य एवैवं न भवेत्सोऽवश्यं स्खलेदेव । स्खलनं कस्मान्निर्गतमित्याचार्यस्य विना प्रणिधानेन छात्रस्खलनं कथं परिज्ञातं स्यात् । अत एव 'स्वाध्यायस्तपः' इति माता श्रुतिरुद्घोषयति । तपसि च चित्तैकाग्र्यं मनसः प्रणिधानञ्च मुख्यमङ्गम् । चित्तैकाग्र्यं मनसः प्रणिधानञ्च वर्णानां तद्गतस्वराणाञ्च श्रवणे । एतेषां वर्णानां नित्यत्वं सर्वगतत्वञ्चास्थिषत मीमांसकाः । शिक्षाकाराश्च प्रतिवर्णं देवतां जातिं स्थानं करणं यत्नञ्च सविशेषमुपवर्णयन्ति । तदिदमग्रे विशदयामः ।

एवमाचार्यः संहितां ब्राह्मणञ्चाध्याप्य पदक्रमजटाघनादिविकृतिपाठमध्यापयति । अस्यामवस्थायां विकृतिपाठाध्येतारश्छात्राः पृथग्भवन्ति, नूतनांश्च संहिताब्राह्मणाध्येतॄन् गृह्णात्याचार्यस्सुपरीक्ष्य । तत्र पदाध्यापनावसरे पदानां पृथक्पृथक्सतां स्वरा भिन्ना भवन्ति । पदानां विभागं तेषां संहितां च यथावद्विज्ञायाचार्यः संहितां ब्राह्मणञ्चाध्याप्यानन्तरं पदपाठं यथायथमध्यापयति । तत्रापि छात्राणां द्विरुच्चारणात्मकमध्ययनं ग्रहणधारणरूपं भवति । पदपाठं समस्तं समाप्य क्रमपाठाध्ययनम् । क्रमपाठे प्रतिपदस्य द्विर्ग्रहणम्—'अग्ने यं, यं यज्ञम्, यज्ञमध्वरम्, अध्वरं विश्वतः, विश्वतः परि भूः, परिभूरसि असीत्यसि । स इत्, इद्दे वेषु, देवेषु गच्छति, गच्छतीति गच्छति' इति । अत्र द्वितीयादिपदानां वारद्वयमुच्चारणम् । संहिताध्ययने एकैकस्य पदस्य ग्रहणधारणाध्ययनयोर्विंशत्युत्तरशतवारम्, पदाध्ययने तद्धारणे च विंश्यत्युत्तरशतवारं, क्रमाध्ययने च ग्रहणावसरे चत्वारिंशद्वारमेकैकस्य पदस्योच्चारणम्, धारणावसरे च यावद्दृढं धारणं भवति तावद्वारमुच्चारणम्, एतद्विहाय नित्यब्रह्मयज्ञाध्ययने उच्चारणानि, एवमनन्तान्युच्चारणानि भवन्ति ।

एवं विकृतीनामध्ययनं ग्रहणधारणरूपमाचार्यः कारयति । क्रमाध्ययनपर्यन्तमनुलोमरूपमासीत् । अन्यासु विकृतिषु विलोमानुलोमौ भवतः । अस्मिन्नेव मन्त्रे यथा—

'अग्ने यं यमग्न अग्ने यं, यं यज्ञं यज्ञं यं यं यज्ञम्, यज्ञमध्वरम्, अध्वरं विश्वतो विश्वतोऽध्वरमध्वरं विश्वतः, विश्वतः परि भूः, परिभूर्विश्वतो विश्वतः परिभूः, परि भूरिति परि भूः, परिभूरस्यसि परिभूः परिभूरसि, असीत्यसि । स इदित्स स इत्, इद्देवेषु देवेषु गच्छति गच्छति देवेषु देवेषु गच्छति, गच्छतीति गच्छति, एवमनुलोमविलोमाभ्यां तेषामेव पदानां कियत्य आवृत्तयो भवन्तीति प्रत्यक्षमिदम् । अनेन प्रकारेण समग्रस्य वेदस्यावृत्तौ क्रियमाणायां छात्रेषु आचार्येषु च मन्त्रावृत्तिजनिता शक्तिः कियती विवर्धत इति प्राक्तना अन्वभवन् । शक्तिर्नाम तदेकध्यानातिशयेन जायमानः पदार्थः । 'सामर्थ्यं सर्वभावानां शक्ति-

रित्यभिधीयते' इति वदन्तो भट्टपादाः शक्तेरतिरिक्तपदार्थत्वमङ्गीकुर्वन्ति। अत एव शब्द-समूहात्मके ब्रह्मणि वेदे इयान् श्रद्धातिशयो याज्ञिकमीमांसकानां मीमांसकानाञ्च। यथा हि पराम्बा शक्तिस्वरूपिणी तथैव वर्णसमूहश्शब्दराशिर्वेदानामपि शक्तिस्वरूपः। पराम्बाया-श्शक्तिस्वरूपत्वमप्यकारादिक्षान्ताक्षरैरेवेति कथनं नानुचितम्। वेदे च प्रत्यक्षरं देवतात्मकमिति शिक्षाकारा उपदिशन्ति। यथोपदेशञ्च याज्ञिकास्तानि तान्यक्षराण्युच्चारयन्तः स्मरन्ति। याज्ञिका मीमांसकाश्च तास्ता देवताश्शब्दरूपा अभ्युपगच्छन्ति। एवञ्च सर्वो वेदो ब्रह्ममयः। अतः 'ब्रह्मयज्ञः 'ब्रह्मचारी' 'ब्रह्मोपदेशः' इत्यादीनि नामानि वेदसम्बन्धीनि प्रसृतानि। तत्र शिक्षाकारस्य व्यासस्य सूत्राणि परिशीलयामः—

## अक्षराणां विभागः

अक्षराणां देवतावगमात्पूर्वमक्षराणि कतीति निश्चिनोति व्यासाचार्यः—

अवर्णोवर्णोकोवर्णो ऋवर्णौ लृत्वमेत्वमैत्।
ओदौद्रङ्गौ क्रमादोम्योस्स्वरास्स्युर्व्यञ्जनान्यथ॥

अ इ उ इमे ह्रस्वदीर्घप्लुतरूपेण प्रत्येकं त्रिविधाः 'आख्यानेकस्य वर्णोर्ध्व' (सू० १७) इत्यनुशासनेन भवन्ति। तथा च नव वर्णाः। 'ऋवर्णौ' इति द्विवचनेन ह्रस्वदीर्घौ द्वौ वर्णौ भवेताम्, अनयोस्सङ्कलनेनैकादश वर्णा जाताः। लृकारो ह्रस्वः, द्वादश जायन्ते। ए ऐ ओ औ दीर्घा एव। सङ्कलनेन षोडश वर्णाः।[1] रङ्गौ इति द्विवचनेन दीर्घरङ्गः प्लुतरङ्गश्चेति द्वौ। ओमिति प्रणवे ओकारश्चेति एकोनविंशति स्वरा भवन्ति। प्रणवगतौकारस्य पृथग्ग्रहणे रङ्गयोश्च पृथग्ग्रहणे प्रयोजनं वक्ष्यामः। स्वरा एकोनविंशतिसंख्याकाः। व्यञ्जनानि च सप्तचत्वारिंशत्। आहत्य षट्षष्टिसंख्याकाः। तत्र स्वराणामक्षराणीति संज्ञा। व्यञ्जनानाञ्च वर्णा इति व्यवहारः। व्यञ्जनेषु सप्तचत्वा-

---

१. याज्ञवल्क्यशिक्षायां रङ्गमधिकृत्येमे कारिके स्तः—

"रङ्गे चैव समुत्पन्ने न ग्राह्यं पूर्वमक्षरम्।
स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत्॥
यथा सौराष्ट्रिका नारी अराँऽइत्यभिभाषते।
एवं रङ्गः प्रयोक्तव्यो ङ्कारेण विवर्जितः"॥ इति॥

(या० शि० १८९, १९०)

रिंशत्संख्याया उपपत्तिरीदृशी—कादिमान्ताः पञ्चविंशतिः, यादिवान्ताश्चत्वारः जिह्वामूलीयादिहान्ताष्षट्, ळ्₂कारः, केवलानुस्वारः गकारसंयुक्तश्च सः, विसर्गः, स्वरभक्तयश्चतस्रः [1]यमाश्चत्वार इति सप्तचत्वारिंशत् । एकोनविंशतिस्वरैस्सङ्कलनेन षट्षष्टिवर्णा जायन्ते । वर्णानामस्यां शिक्षायां प्रत्येकं कार्यविधानादेतावन्तो वर्णाः परिगण्यन्ते । क्वचन शिक्षायां कालं प्रधानीकृत्य कार्यविधाने त्रिसप्ततिः, क्वचन करणप्रधानतया पञ्चषष्टिः, क्वचन सर्वकारणकत्वेनाष्टोत्तरशतं वर्णा जायन्ते । अनुस्वारविसर्गयोरक्षरेषु वर्णेषु च परिगणना कृता शिक्षाकारेण स्वरविधानाय । स्वरसन्धिस्थले तत्प्रदर्शयामः । इमान्येव चाक्षराणि इम एव च वर्णाः शौनकस्याप्यभिप्रेताः । तत्र कियान् विशेषोऽपि परिदृश्यते । शौनकः ऌकारस्य दीर्घत्वमपि स्वीकरोति । चतुरो मूलयमान् बहुधा विभजते । उभयत्रापि कालस्थानकरणानि समानान्येव । तदिदं कालादिनिर्णये व्यक्तीभविष्यति ।

संहितायामानुपूर्व्या ये वर्णा अक्षराणि वा परिपठितानि तेषां मिथोऽङ्गाङ्गिभावनियमाः, कालनियमाः, कारणप्रयत्ननियमाः जातिभेदाः, देवताभेदाश्च शिक्षाकारेणोपदिष्टाः । एतान्नियमान् सुविज्ञाय योऽध्यापयति स एवाचार्यः ।

ध्वनिस्स्थानञ्च करणं प्रयत्नः कालता स्वरः ।
देवताजातिरेतैश्च वर्णा ज्ञेया विचक्षणैः ॥
पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविभाज्ञो गच्छेदाचार्यसम्पदम् ॥ इति ॥

सविशेषमिदं सर्वं विज्ञायाचार्यो वेदान् ग्राहयेत् ।

## वर्णानां देवता जातयश्च

तत्र प्रथमं वर्णानां कास्का देवता इति निरूपयामः । पूर्वं षट्षष्टिसंख्याका वर्णाः प्रदर्शिताः । तेषु प्लुतवर्णान् विसर्गं ओङ्कारं जिह्वामूलीयोपध्मानीयौ शुद्धानुस्वारं गकार-

---

१. "अपञ्चमैश्चैकपदे संयुक्तं पञ्चमात्परम् ।
उत्पद्यते यमस्तत्र सोऽङ्गं पूर्वाक्षरस्य हि ॥
पञ्चमाश्शषरैर्युक्ता अन्तस्थैर्वापि संयुताः ।
यमास्तत्र निवर्तन्ते श्मशानादिव बान्धवाः ॥

(या० शि० २१३, २१४)

संयुक्तमनुस्वारं चतस्रस्स्वरभक्तीः रङ्गौ चतुरो यमांश्च विहायावशिष्टा अष्टाचत्वारिंशद्वर्णाः पञ्चसु राशिषु विभक्तव्याः। तेषु क्रमशः वाय्वग्निभूमीन्द्वर्काः पञ्च देवताः । तत्र वायुदेवताकाः— अ आ ए क च ट त प य षाः; अग्निदेवताकाः—इ ई ऐ ख छ ठ थ फ र साः; भू देवताकाः—उ ऊ ओ ग ज ड ब द ल हाः, इन्दुदेवताकाः—ऋ ॠ औ घ झ ढ ध भ व ळाः, अर्कदेवताकाः—ऌ ङ ञ ण न म क्ष शाः; तदिदमुक्तं व्यासाचार्येण—

'अदादेत्प्रथमयषा ऌनासिक्यक्षशोत्तराः।

क्वचिच्च— अदादेत्प्रथमायशा ऌनासिक्याश्च लोत्तराः। इति पाठः

अनिलाग्निमहीन्द्वर्काः पञ्चानां त्वधिदेवताः' ॥ इति ॥

( व्या० सू० ४८९,४९० )

अत्र प्रथमपादेन प्रथमो राशिः, द्वितीयपादेन पञ्चमो राशिः प्रदर्शितः। ऌनासिक्य-क्षशा उत्तरा येभ्यस्ते इति यच्छब्देन मध्यमास्त्रयो राशय इति सिध्यन्ति। ते चोपरि प्रदर्शिताः। एवं प्रतिवर्णं देवतास्वरूपेऽवगते वर्णेषु जातयोऽवगन्तव्याः। जातयश्च द्विप्रकाराः—उदात्तादि-स्वरचतुष्टयगताः, अकारादिक्षकारान्तवर्णगताश्चेति। तत्र[1] उदात्तो ब्रह्मजातिः, क्षत्रजाति-रनुदात्तः, स्वरितो वैश्यजातिः, शूद्रजातिस्तु प्रचयः। सर्वे स्वराः, वर्गप्रथमद्वितीयवर्णाश्च ब्रह्मजातयः, वर्गतृतीयचतुर्थवर्णाः क्षत्रजातयः, वर्गोत्तमा अन्तस्थाश्च वैश्यजातयः, अनुस्वारविसर्गोष्माणोऽवरजातय इति व्यवस्था। उदात्तादिस्वराणां व्यञ्जनानाञ्च या या जातयो निश्चिताः तासामुच्चारणावसरे व्यतिक्रमे तत्तत्संहारकत्वदोषः प्रदर्शितः, तत्तज्जात्यु-च्चारणे तत्तज्जातिपरिरक्षणञ्च भवति।

एवम्— 'नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदीरयेत्।

पयः पूर्णमिवामत्रं हरेद् धीरो यथामति ॥ (प्राति २.५'८)

इति प्रमाणेन वर्णोच्चारणप्रकार उपवर्णितः।

अत्रैवमुदाहरणं पश्यामः—'वीरवत्तमम्' इति पदम् । वीरोऽस्यास्तीति वीरवान् मतुप्, अतिशयेन वीरवान् वीरवत्तमः तमप्। अत्र वीरशब्दस्य फिट्स्वरः, अर्थात्प्रातिपदिकान्तो दात्तः। 'अनुदात्तं पदम्' इत्यादिना प्रथमवर्णस्यानुदात्तस्वरे स्थिते तदुपरि मतुप्तमपोः पित्त्वात्

---

१. ब्रह्मजातिर्भवेदुच्चः क्षत्रजातिस्तु नीचकः।
वैश्यजातिर्भवेत्स्वारः शूद्रस्तु प्रचयस्स्मृतः ॥ ( व्या० शि० ४९२ )

'अनुदात्तौ सुप्पितौ' इत्यनुदात्ते प्राप्ते 'वी र व त मं' इति जाते 'उदात्तादनुदात्तस्य स्वरितः' 'स्वरितादनुदात्तानां प्रचयः' इत्यनुशासनाभ्यां 'वीरवत्तमम्' इति स्वरास्सिध्यन्ति। अत्रोदात्तादीनां चतुर्णां स्वराणां चतस्रो जातयः। एवं वकाररेफयोरन्तस्थत्वात् मकारस्य वर्गोत्तमत्वाच्च त्रयाणां वैश्यजातित्वम्। तकारस्य वर्गप्रथमत्वेन ब्रह्मजातित्वम्। अनुस्वारस्य शूद्रजातित्वम्। एवञ्च स्वरेषु चतस्रो जातयः, वर्णेषु च तिस्रो जातयस्समवेतास्सन्ति। 'अध्यतिष्ठत्' इत्यादिषु वर्णेषु चतस्रोऽपि जातयः। अत्र स्वरेषु वर्णेषु वोच्चनीचभावो न परिगण्यते तत्तद्भिन्नजातिसम्बन्धेन। काममिमे वर्णाः स्वराश्च ध्वनि-स्थान-करण-प्रयत्नकाल-स्वरैश्च भिन्नाः। एवं मिथस्सत्यपि भेदे एकत्रेमा यथाधिकारं जातयस्समवेता भवन्ति। न केवलमिदमेव—

'यद्यन्यजातिरुच्येत तत्तत्संहारको भवेत्।
यज्जात्युच्चारणे तेषां तज्जातिपरिरक्षणम्॥' ( व्या० सू० ४९९-५०० )

इति सूत्रकारोऽनुशास्ति, यत्-येषां या जातिः, तज्जात्युच्चारणे सति तेषां वर्णानां तद्गतोदात्तादिस्वराणां तद्युक्तजातीनाञ्च परिरक्षणं भवतीति। एवञ्चैकस्मिन् पदे सर्वा देवताः सर्वाश्च जातयो मिथो भिन्ना अपि सम्भूयैकमर्थज्ञानरूपं कार्यं जनयन्तीति सिद्ध्यति।

विषयोऽयं विमर्शयोग्यः —

स्वमनोगतान् विषयान् परान् प्रत्याययितुं प्रयुज्यमाना वाचो भाषापदवाच्याः। गृहीतपदपदार्थसङ्गतिकः परप्रयुक्तवाक्येभ्यः तदीयमाशयमधिगच्छति। तदनुसारेण स्वयं व्यवहरति। इमं लोकव्यवहारं वयमिदानीं शिक्षिताः प्रत्यक्षमनुभवामः। शैशवावस्थातोऽपत्यानि च शिक्षयामः। तेऽपि शिक्षिता अपरान् शिक्षयन्तीति क्रमः। अत्रैवं प्रश्न उत्तिष्ठते— स कोऽयं प्रथमशिक्षक इति। जगत्स्रष्टा परमेश्वर इति केचन, न ह्यत्र कालस्येयत्ता निश्चेतुं शक्यते, किन्त्वनादितो वृद्धव्यवहार एवेत्यपरे, अन्ये च कृमि-कीट-सरीसृप पतङ्ग-वानरादिक्रमेण मानवा जाताः, ध्वनिचेष्टाद्युपायेन यथा तथा वा व्यवहरन्तः क्रमेण विकासमवाप्नुवानास्तास्ता भाषाः प्रवर्तयाम्बभूवुरिति। सम्प्रतितनकालेऽयं प्रवाहः कश्चन भारते प्रवहति यद् य एव किञ्चिन्नूतनं वस्त्वाविष्करोति, य एव च किञ्चिन्नूतनं सम्बद्धमसम्बद्धं वा लिखति, य एव किञ्चिद्विचित्रमिव भाषते, सर्वत्रात्र 'विज्ञान' पदप्रयोगः। तेषु 'भाषाविज्ञानम्' इत्येकम्। वैज्ञानिकः खल्वयं युगः। विज्ञानशब्दोऽयं नाधुनिकः, वेदेष्वपि प्रचलितः। संज्ञानम्, विज्ञानम्, प्रज्ञानम्, इति सोपसर्गा वेदेषु शब्दाः श्रूयन्ते, निरुपसर्गो ज्ञानशब्दश्च वर्तत एव। तत्र भाषाविज्ञानस्य मूलभित्तिर्विकासवादः। कृशब्दः

कस्मादागतः ? कदागतः ? कथमागतः ? 'अखबार' इत्ययं शब्दः संस्कृतप्रकृतिप्रत्ययाभ्यां कथं साधनीयः ? इत्येवं नूतनमन्वेषणं भाषाविज्ञानकार्येष्वेकम् । अन्विष्टानां विरचनम्, तस्य पाठ्यक्रमे समावेशनम्, विद्यालयेषु विश्वविद्यालयेषु चाध्यापनमित्यादीन्यपि बहूनि कार्याणि तद्विज्ञानान्तर्गतान्यधुना प्रचलितानि । एवं विधेषु कार्येषु नूनं बुद्धेर्विकास इव परिलक्ष्येत । यथा हि विकसितः अविकसितः विकासशीलश्चेति देशाः परिगण्यन्ते, तथा भाषास्वपि काश्चन विकसिताः अविकसिताः विकासशीलाश्चेति प्रविभागः कर्तुं शक्यते । तत्र विकासशीलाया भाषायाः कलेवरमुपबृंहयितुं भाषाविज्ञानिन आधुनिकास्सचेष्टा भवन्ति । यतः कुतश्चिदुत्प्लुत्य स्वप्रान्ते समागतान् शब्दान् स्वस्वकोशे समावेश्यायमस्मद्भाषागतश्शब्दः, अन्यत्र गत आसीत् सम्प्रति समागत इत्युपपत्तये कालादिकं निर्णीय स्वस्वकोशं संवर्धयन्तो ब्रुवते पूर्वमस्माकमियं भाषा दुर्बलासीत्, सम्प्रति सम्पुष्टा जायमाना वर्तते, अग्रिमपञ्चवार्षिकयोजनाप्रपूर्तौ सम्पुष्टा भविष्यतीति । भाषान्तरेषु प्रयुज्यमानानि पदानि स्वस्वभाषायां प्रचलिताः, अत एवास्मत्कोशे समावेशार्हा इति च । एवं स्वस्वशब्दकोशोपबृंहणं भाषाविज्ञानिनां व्यापारः । पदार्थोत्पादनेन तेषां व्यापारेण क्रयविक्रयरूपेण यथा देशस्समृद्धो भवति तथैव भाषान्तरशब्दानां ततस्तत उत्प्लुत्य समागतानां संयोजनेन, स्वस्वभाषामध्ये ज्ञानतोऽज्ञानतो वा भाषान्तरशब्दप्रयोगेण वा व्यापारेण भाषा स्वकीया न केवलं सम्पुष्टा भवति, किन्तु प्रपुष्टा सती आत्मनिर्भरतामवाप्स्यति । इमां रीतिमवलम्बमानाः केचन संस्कृतमहापण्डिता अपि स्त्रीपुरुषसंयोगेनेवापत्यानि संस्कृतप्रकृतिप्रत्ययसंयोगेन 'अखबार' प्रभृतीनि पदानि संस्कृतपदानीति भाषमाणा भाषाविज्ञानिनां मध्ये प्रतिष्ठां लभन्ते । नूतनाविष्करणमेव खलु विज्ञानित्वप्रयोजकम् । 'अस्मद्भाषा' 'अस्मद्भाषा' इति व्यवहारे विद्यमानोऽस्मच्छब्दः तत्तत्प्रान्तस्यैव वाची, न तु समग्रस्य भारतस्य । देशान्तरेषु समुत्पन्नानां पदार्थानामायातोऽस्माभिः क्रियते, एवमस्मद्देश आविष्कृतानां देशान्तरेषु निर्यातश्च क्रियते, न तथा शब्दानामायातनिर्यातौ भवतः । न हि शब्दा नौकादिसाधनैर्निर्यातयितुं शक्यन्ते, न वा आयातयितुम् । किन्तु तत्तत्प्रान्तदेशनिवासिषु भूयस्सु देशान्तरमागतेषु तत्प्रान्तीयैः तद्देशीयैर्वा शब्दाः संगृह्यन्ते । तान् शब्दान् स्वभाषायां समावेश्य व्यवहरन्त इमे शब्दाः प्रचलिता अस्मिन्नर्थ इति न केवलं वदन्ति शब्दकोशेऽपि समावेशयन्ति । तदिदं विलोक्य भाषाविज्ञानिनोऽनुसन्धातुमारभन्ते कस्या भाषाया इमे शब्दा इति । तत्रापि न मतैक्यमनुभवामः । सेयं भाषाविज्ञानशैली । इमां शैलीं प्रथमं पाश्चात्यशासनकाले पाश्चात्याः शिक्षाशास्त्रिण आरब्धवन्तः । इमामवलम्ब्य भारतीया अपि भाषाविज्ञानिनः शास्त्रलेखने प्रावर्तन्त । मूलन्त्वत्र पाश्चात्यभाषाविज्ञानशास्त्रम् । तेऽनुकार्या जाताः वयञ्चानुकर्तारोऽभवाम, अनुकार्यो रामः, अनुकर्ता च नट इति यथा । अत्र च रामवद्वर्तितव्यम्, न रावणादिवदित्युपदेशो लभ्यते,

तथैव पाश्चात्यानामनुकार्यत्वे तद्वदस्माभिर्वर्तितव्यमित्युपदेशस्स्यात्। किन्तु तच्छैलीमात्रानुकरणेन नाहं पश्यामि कञ्चन दोषम्। एतादृशभाषाशास्त्रशैली नाधुनिक्येव। महर्षिजैमिनेः कालादेवेयं दृश्यते। जैमिनिस्तु न केवलं धर्मस्वरूपमात्रविमर्शकः, पदानां पदार्थानाञ्च स्वरूपं सविशेषं विमृशति। यद्यपि वाक्यार्थविचारायैव जैमिनिर्मीमांसां सूत्रात्मना प्रणिनाय, तथापि वाक्यार्थज्ञानाय पदपदार्थतत्सम्बन्धानामावश्यकत्वेन सत्यवसरे इदं पदं कस्मिन्नर्थे प्रयोक्तव्यम्? अस्य पदस्य कोऽर्थः? वैदिकपदानां लौकिकपदानाञ्च मिथः किमन्यत्वम्? उतानन्यत्वम्? उभयेषां पदानामर्थः किं भिन्नः? उताभिन्नः? इत्यपि सुविचार्य सिद्धान्तयति। एतादृशविचारोऽपि धर्मोपयोगी।

तत्र यववराहाधिकरणे यवादिशब्दानुदाहृत्य लौकिकवैदिकभेदेन यवशब्दस्यार्थभेदं दीर्घशूकप्रियङ्गुरूपं संवीक्ष्य शब्दप्रयोगरूपाचारे लौकिकानां वैदिकानाञ्च समत्वात्तुल्यबलत्वं 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात्' इति सूत्रेण पूर्वपक्षयित्वा 'शास्त्रस्था वा तन्निमित्तत्वात्' इति सूत्रेण शास्त्रस्थानां वैदिकानामेव व्यवहारो ग्राह्यः, न लौकिकानामिति सिद्धान्तितवान् सूत्रकारः। शब्दव्यवहाररूपाचारो वैदिकानां यथाऽविप्लुतः, न तथा लौकिकानामित्यत्र वैदिकप्रयोगे वाक्यशेषस्य 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ते' इति वाक्यशेष आनुकूल्यमावहतीति श्रीशबरस्वामिनस्सिद्धान्तशैली। अत्र वार्तिककारः पीलुशब्दमुदाहृत्य विचारयति वर्णकान्तरेण। म्लेच्छाः पीलुशब्दं प्रयुञ्जते हस्तिनि, आर्यास्तु वृक्षे। शब्दव्यवहाररूपाचारे यथा वैदिकाः तथैव म्लेच्छा अपीत्युभयेषां तुल्यत्वादुभयोर्विकल्प एव। 'पीलवान्' इति हस्तिपे म्लेच्छेषु प्रयोगः प्रसिद्धः। 'पैलवो दण्डः' इति वैदिकानां वृक्षे प्रयोगः प्रसिद्धः। अतोऽनयोस्समानत्वाद्विकल्प इति पूर्वपक्षः। सिद्धान्तस्तु 'शास्त्रस्था वा तन्निमित्तत्वात्' इति सूत्रेण शास्त्रस्थानां यथा प्रयोगोऽविप्लुतो भवति, न तथा म्लेच्छानाम्। अतो वैदिकप्रयोग एव साधीयानिति। यथा हि—कार्षापणगतसाधुत्वासाधुत्वे परीक्षकैर्निर्णीयेते, तथा शास्त्रस्थैरेवाविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शब्दनिष्ठसाध्वसाधुत्वनिर्णयः क्रियते। गौणभ्रान्त्यादिप्रयोगनिमित्ता अपभ्रंशाश्चेति। तदिदमुक्तं भट्टपादैः—

'अतश्शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम्।
या मतिस्सैव धर्माङ्गशब्दार्थत्वप्रमा मता॥
अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्वतो भवेत्'॥ इति।

(तं० वा० पृ० २२० पूना सं)

एवं शब्दप्रयोगविषये शास्त्रस्थानामार्याणां प्राबल्यं व्यवस्थाप्य पिकनेमाधिकरणे पिकादिशब्दानामर्थविषयिणी चिन्ता प्रवर्तिता। आर्या यान् शब्दान् व्यवहारेषु क्वाप्यर्थे न प्रयुञ्जते अपि च वेदेषु तादृशशब्दोपलम्भे कथमर्थो निश्चेतव्यः ? किं निगमनिरुक्तव्याकरणादि-साधनैरर्थः परिकल्पनीयः ? उत म्लेच्छा यस्मिन्नर्थे प्रयुञ्जते तान् शब्दान्, स एवार्थो ग्राह्य इति सन्दिह्य 'चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन' इति सिद्धान्तमाह जैमिनिः। अर्थात् म्लेच्छप्रसिद्धिविषयीभूतार्थ एव ग्राह्यः, न निगमादिभिः परिकल्पनीय इति। अत्र वार्तिककाराः भाषाशस्त्रदृष्ट्या कांश्चन शब्दानुदाहृत्य विवेचयन्ति—

## पूर्वपक्षः

निगमनिरुक्तव्याकरणादिषु प्रकृतिप्रत्ययकल्पनाद्वारा शब्दानामर्थनिर्णायकेषु आर्यविरचितेषु सत्सु पिकादिशब्दानां म्लेच्छप्रसिद्धार्थो न ग्राह्यः। म्लेच्छा यस्मिन् कस्मिन्नप्यर्थे यं कमपि शब्दं प्रयुज्य व्यवहरेयुः, न ते धर्मभीरवः, आर्यास्तु न तथा।

'धर्मे चानादरस्तेषां भ्रश्येतार्थोऽपि शब्दवत्।
न चास्ति संस्कृतश्शब्दः कश्चिन्म्लेच्छाभिभाषणे॥
संस्कृतप्रतिरूपा हि तद्भाषार्थान्तरे स्थिता।
न चावाचकरूपाणां वाचकत्वं कथञ्चन॥
आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम्।
पदान्तराक्षरोपेतं कल्पयन्ति कदाचन॥
न्यूनाक्षरं कदाचिच्च प्रतिक्षिपन्त्यधिकाक्षरम्'॥ इति।

अत्रोदाहरणतया भट्टपादाः कांश्चन द्राविडादिभाषागतान् शब्दान् गृह्णन्ति। 'चोर्–अतर्–पाप्–माल्–वैर्' इति। द्राविडभाषायाम्–स्वरेषु अ आ इ ई उ ऊ ए $ए_2$ ऐ, ओ $ओ_2$ औ अक् ∴ इति, व्यञ्जनेषु प्रथमपञ्चमाः य र ल व ड $ल_2$ $र_2$ $न_2$, इति वर्णास्सन्ति। द्वौ लकारौ रेफौ, नकाराश्च त्रयः, विलक्षणः तालुरसनामध्यादुच्चार्यमाणः कश्चन वर्ण डकारस्थानीय इति तेषां वर्णमाला। तत्र 'चोर्' इति व्यञ्जनान्तं पदमोदनवाचि तेषां भाषायाम्। एवं 'पाप्' इति पदं सर्पवाची। 'वैर्' इति पदमुदरवाचि। 'माल्' इति पदं वस्तुवाचि भाषान्तरे। 'अतर्' इति पदं मार्गवाचि भाषान्तर इति स्थितिः। तत्र संस्कृते क्रमेण चोरः, पापी, वैरी, माला, अतरः, इति शब्दास्तेभ्यो निष्पन्नाः। अर्थाद्द्राविडादिभाषात इमे संस्कृतशब्दाः कल्पिता इति। एवमभिधायान्ते 'तद्यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा पारसी–बर्बर–यवन–रौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्त इति न विद्मः, इत्युक्त्वा पूर्वपक्षमुपसंहरन्ति—

'तस्मान्म्लेच्छप्रसिद्धं यत्पदमार्यैर्विकल्प्यते ।
न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः ॥
निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगण्यते ।
पिकनेमादिशब्दानां स एवार्थो भविष्यति' ॥

इति प्राप्तमिति । सिद्धान्तः

'एवं प्राप्ते वदामोऽत्र पदं निपुणदृष्टिभिः ।
विज्ञायेताविनष्टं यत्तत्तदर्थं भविष्यति' ॥

इत्यादिना सिद्धान्तितवन्तः । पिकादिशब्दानां म्लेच्छप्रसिद्धार्थ एव ग्राह्य इति । अनेन सन्दर्भेणेदं निर्गलितं भवति—यद्भाषाविषयिणी चर्चा जैमिनिपाणिनिप्रभृतीनां महर्षीणां कालत एवारभ्य प्रचलितेति । शैलीमिमामनुसरन्त आधुनिकाः केचनेदं कथयितुमारब्धवन्तः—यत्संस्कृतभाषा संस्कृता सती भाषान्तरेभ्यस्समुत्पन्नेति । अत्रैवं शास्त्रदृष्ट्या किञ्चिद्विमृशामः—कस्यापि कोऽपि संस्कारः 'भूतभाव्युपयोगि हि द्रव्यं संस्कारमर्हति' इति न्यायेन भूतोपयुक्ते भाव्युपयोक्ष्यमाणे वा द्रव्ये प्रवर्तते । शब्दमयी च भाषा भवति । शब्दश्च ध्वन्यात्मको वर्णात्मकश्चेति द्विविधः । ध्वनीनां संस्कारे ध्वनयोऽपि साधवो भवेयुः । तदा 'गोशब्द एव साधुः, न गाव्यादिः' इति व्यवस्था न सिध्येत् । शब्दविषये भाष्यकारः श्रीशबरस्वामी 'अथ गौरित्यत्र कश्शब्दः' इति पृच्छन् 'गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति पूर्वाचार्यप्रमाणप्रदर्शनपूर्वकं वर्णा एव शब्दा इति स्वीकरोति । तत्र वर्णानां संस्कार इत्यभ्युपगम्यमाने 'गावी' 'गोणी' इत्यादीनामपि वर्णात्मकत्वेन तद्गतवर्णेषु संस्कृतेषु तेऽपि शब्दास्साधवो भवेयुः । मीमांसकास्संस्कारं चतुर्विधं विभजन्ते-उत्पत्तिः, आप्तिः, विकृतिः, अपूर्वसाधनसामर्थ्याधान इति । तत्र शब्दत्ववर्णत्वव्यक्तीनां संस्कारे सर्वत्रातिप्रसङ्गः, असाधुष्वपि शब्दत्वादीनां सत्वात् । यदि शब्दत्वं संस्क्रियते तर्हि ध्वनीनामपि शब्दत्वात्तेऽपि संस्कृतास्साधवस्स्युः । वर्णव्यक्तीनामपि संस्कारो दुष्करः, वर्णसमूहत्वात्पदानाम् । ये शब्दसंस्कारमभ्युपयन्ति ते वर्णान् प्रध्वंसिन आहुः, संस्कारकाले संस्कार्या एव न सन्ति, प्रध्वंसित्वात्तेषाम् । यदि कथमपि वर्णास्संस्क्रियेरन्, तर्हि संस्कृतान् तान् केऽपि न पश्यन्ति । यथा हि 'सक्तून् जुहोति' इत्यत्र होमस्य संस्कारकत्वे स्वीक्रियमाणे हुतानां सक्तूनां भस्मीभूतत्वेन ते दृष्टिपथं न गच्छन्ति सक्तवः, तथैव वर्णा अपि । संस्कृतानाञ्च क्वचन विनियोग आवश्यकः, संस्कारानन्तरमेव तेषु नष्टेषु विनियोगः क्व भवेत्तेषाम् । एवञ्चोत्पत्तिलक्षणस्संस्कारो वर्णानां तदात्मकशब्दानां वा न भवितुमर्हतीति सिद्धे, विकृतिसंस्कारोऽपि निरस्तः, नित्यत्वाद्वर्णानाम् । आप्तिसंस्कारोऽपि दूरभ्रष्टः, नित्यत्वात्सर्वगतत्वाच्च । अपूर्वसाधनसामर्थ्याधानरूपस्संस्कारोऽपि

नोचितः, 'व्रीहीन् प्रोक्षति' इतिवद्विधेः कस्यचनावश्यकत्वात् । एवञ्च वर्णास्तदात्मकशब्दाश्च नित्यास्सर्वगताश्चेति मीमांसकसरणिः । अस्यां सरणौ सञ्चरन्तस्ते शब्दतत्त्वं विमृशन्ति । अत्र महर्षेः सूत्रकारस्य जैमिनेः 'शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्' इति ( १.३.२५. ) सूत्रम् । अस्यायं साधारणोऽर्थः—शब्देऽसाधुत्वेनाभिमते अपराधस्य अयथोच्चारणस्य भागित्वम्—भागो भजनं प्रवृत्तिः जनकतासम्बन्धेन तद्वान् भागी, तस्य भावस्तत्त्वमिति विग्रहे प्रवर्तकत्वमित्यर्थः पर्यवस्यति । असाधुशब्दोच्चारणमपराधजन्यमिति तात्पर्यम् । तत्र हेतुः—'प्रयत्ननिष्पत्तेः' इति । प्रयत्नविशेषेण शब्दस्वरूपस्याभिव्यक्तिर्भवति । प्रयत्ने यदि न्यूनता शैथिल्यं वा तत्रापराधो जायते । अत्रायं विशेषः—साधवोऽसाधवश्चेति शब्दाः द्विविधाः । साधुत्वञ्चानादित्वे सत्यर्थप्रत्यायकत्वम् । अर्थप्रत्यायनमसाधवोऽपि शब्दाः कुर्युः, किन्तु तेषां नानादित्वम् । कथमिदं ज्ञायताम्—साधवोऽनादयः, असाधवश्च तद्विपरीता इति । अपराध भगित्वं प्रति यो हेतुरुक्तस्सूत्रकारेण, स चासाधुशब्देष्वित्युच्यते, किन्तु साधवोऽपि बिना प्रयत्नेन न निष्पद्यन्ते, तत्रापि प्रयत्नानां सत्त्वात् । तेन साधव एवानादय इति कुतः ? इति प्रश्ने जाते तत्र भट्टपादा अकारप्रश्लेषेण सूत्रं व्याचख्युः—शब्देऽप्रयत्ननिष्पत्तेः इति । यद्यपि तत्रापि प्रयत्नास्सन्त्येव, किन्तु करणानामपाटवेन, यथाकथञ्चिदर्थावबोधेच्छयोच्चारणेन वा शब्दा यैः प्रयुज्यन्ते तत्रापराधभागित्वं न विहितप्रयत्ननिष्पन्नमिति न दोषः । अर्थाद्येऽस्खलितप्रयत्नाः शब्दान् प्रयुञ्जते तत्र शब्देषु परम्परागतत्वम्, ये च स्खलितप्रयत्नास्शब्दानुच्चारयन्ति तत्र शब्देष्वपराधजनितरूपान्तरत्वमिति तात्पर्यम् । तदिदमुक्तम्—

अतश्चानपराधेन व्यज्यमानेषु साधुता ।
सापराधेष्वसाधुत्वं व्यवस्थैवञ्च तत्कृता ॥ इति ।

अतश्च अनादित्वे सत्यस्खलप्रयत्नोच्चरितत्वे च सति वाचकत्वं साधुत्वम् तद्विपरीतमसाधुत्वमिति साधुत्वासाधुत्वयोस्स्वरूपं सिध्यति । अथवा—'सत्यं वदेत्', 'नानृतं वदेत्' इति विधिनिषेधाभ्यां सत्यत्वासत्यत्वमेव साधुत्वासाधुत्वयोस्स्वरूपं भवितुमर्हति, सत्यत्वं यथा अर्थे तथा शब्देऽपि । यथार्थानृतं वर्ज्यम्, तथा शब्दानृतमपि । यथा भक्ष्याभक्ष्यविधिनिषेधयोर्व्यवस्था, तथा शब्दप्रयोगेऽपि । भाषाशास्त्रन्तु विधिनिषेधानुसारि, भाषाविज्ञानन्त्वाधुनिकैर्यत्प्रवर्त्यते, तत्र न कोऽपि विधिः न वा निषेधः । मर्यादां पालयितुं विधिनिषेधयोर्भवत्यावश्यकता । इतस्ततश्शब्दानां संग्रहात्मके कार्ये मर्यादाया अभावान्न विधिनिषेधौ, विद्यमानस्य रक्षणाय भाषाशास्त्रम्, अविद्यमानानां योजनाय भाषाविज्ञानम् । षड्भावविकाराणां भाषाशास्त्रे न प्रवृत्तिः, भाषाविज्ञाने च तेषां प्रवृत्तिः । प्रत्यक्षमिदानीं वयमनुभवामः—यदापत्कालेऽनुशासने

वर्तनं न केवलं महते क्षेमायेति किन्तु रक्षणायापि । अप्राप्तस्य प्राप्तिम्, प्राप्तस्य च परिरक्षणं योगक्षेमशब्दौ वदतः । अप्राप्तस्य प्रापकं भवति शास्त्रम्, शास्त्रञ्चानुशासकम्, तदनुशासन-परिपालनेन च क्षेमः ।

अस्माकं प्राक्तना भाषाशास्त्रिणः पाणिन्यादयश्शब्दान् पूर्वमेव स्थितान् व्यवस्थितान् स्मारयन्तश्शिक्षाग्रन्थानपि प्रवर्तयाम्बभूवुः । चतुर्दशसु विद्यास्थानेषु शिक्षापि परिगण्यते । तत्र तैत्तरीयोपनिषदि—'शीक्षां व्याख्यास्यामः, वर्णः स्वरः मात्रा बलम्, साम सन्तानः इत्युक्तश्शीक्षाध्यायः' ( तै० उ० ७, २ ) इति श्रुतिवाक्यमवलम्ब्य शिक्षाग्रन्थाः प्रवृत्ताः । 'शिक्ष' विद्योपादाने इति धातोश्शिक्षाशब्दः शिक्ष्यन्ते वेदनीयत्वेनोपदिश्यन्ते स्वरादयो यत्र सा शिक्षा । शिक्षैव शीक्षा । तत्र षट् पदार्था निरूप्यन्ते—अकारादयो वर्णा, उदात्तानुदात्तस्वरित प्रचयास्स्वराः, ह्रस्वदीर्घप्लुता मात्राः, स्पृष्टेषत्पृष्टादिप्रयत्नो बलम्, अतिद्रुतत्वमतिविलम्बि-तत्वं परिहृत्य यथोपदेशमुच्चारणं साम, पूर्वस्य पदस्योत्तरेण सन्धानं सन्तानः संहितेत्यर्थः । एवं प्रकारेण शिक्षारूपोऽध्यायोऽध्येतव्यः–गुरुमुखोच्चारणानूच्चारणविधया प्राप्तव्य इति श्रुतेरर्थः । अध्ययनस्य पठनस्य च भेदः पूर्वं प्रदर्शितः । अध्ययनन्तु स्वाध्यायस्य स्वकुलपरम्परा-गतशाखायाः, न तु वेदस्य । वेदस्तु व्यापकः पदार्थः । तत्र भवन्ति बह्व्यश्शाखाः । तास्वेका या स्वपरम्परागता सा प्राप्तव्या । स्वशाखायामधीतायां वेदोऽधीत इति व्यवहारो नानुपपन्नः, वेदस्य व्यापकत्वात् । अतएव प्रतिशाखं पूर्वजाः शिक्षाग्रन्थान् प्रवर्तयाम्बभूवुः ।

इतस्त्र्यशीतिवर्षेभ्यः पूर्वं R. T. H. Griffith M. A. Dr. G, Thibaut इति महोदययोः प्रेरणया काशिकराजकीयविद्यालयाध्यापकेन पं० श्री युगलकिशोर व्यासेन शिक्षासंग्रहः कश्चन प्रकाशितः । तत्र महर्षि याज्ञवल्क्य—वसिष्ठ-कात्यायन-पराशर-माण्डव्य-पाणिनि-गौतम-लोमश-माण्डूक—नारदप्रभृतिभिः मल्लशर्मप्रभृतिभिराधुनिकैश्च याज्ञिक-प्रवरैर्विरचिताः शिक्षा, आसु काश्चन व्याख्याश्च प्रकाशपथं नीताः । प्रायश्चतुर्वेदीयशाखानां शिक्षा अत्र विद्यन्ते । अत्र पंचविंशतिसंख्याका माध्यन्दिनशाखासम्बन्धिन्यः, ऋग्वेदसम्बन्धिनी एका, नारदगौतमलोमशमहर्षिभिः प्रणीताः सामशाखासम्बन्धिन्यः, माण्डूकी शिक्षा चाथर्व शाखासम्बन्धिनी । अन्या अपि सन्ति नैकविधाश्शिक्षाः—लक्ष्मीकान्त आरण्य-शम्भु-कौहली-व्यास-कौण्डिन्य प्रभृतिभिर्विरचिताः । तत्र व्यासशिक्षाव्याख्यातृभिः ब्रह्मश्रीयुतराजाघनपाठि-भिस्सर्वलक्षणमञ्जरीकारैस्सङ्गृहीतानीमानि पद्यानि—

प्रथमा व्यासशिक्षा च लक्ष्मीशिक्षा द्वितीयिका ।
भारद्वाजी तृतीया च शिक्षारण्या तुरीयिका ॥

पञ्चमी शम्भुशिक्षा च षष्ठी चापिशली तथा ।
सप्तमी पाणिनिशिक्षा चाष्टमी कौहली तथा ॥
वासिष्ठी नवमी चैवं नव शिक्षाः प्रकीर्तिताः ।
यो जानाति भरद्वाजशिक्षामर्थसमन्विताम् ।
स ब्रह्मस्थानमाप्नोति गृहमेधी गृहं यथा' ॥ इति ।

एकं रामायणं भारतं वावलोक्य संख्यातीताः कविशिरोमणयः काव्यानि नाटकानि च यथा प्रणीतवन्तः, तथैकामेव वेदशाखामवलम्ब्य महर्षयश्शिक्षा न लिखितवन्तस्स्युः । यद्येक-शाखागता अनेकाः शिक्षा भवेयुस्तर्हि, तत्रान्यैः परित्यक्तानां विषयाणां निरूपणं स्यात् । काव्य-नाटकानां विरचने यशोऽर्थप्रभृतीनि फलानि प्रयोजकानि, न तानि शिक्षाग्रन्थानां प्रवर्तकानि भवेयुः । अधीतानां छन्दसां संरक्षण एव तेषां दृष्टिः, यावदध्ययनाध्यपानतन्तुरविच्छिन्नः प्रचलति स्म तावदेतेषां ग्रन्थरचनक्रियायां प्रवृत्तिरेव नाभवदिति सुनिश्चितं वक्तुं शक्यते। यदा हि ते वेदाध्ययनाध्यापनतन्तोः किञ्चिदिव विच्छेदमन्वभवन् तदैव ते जागरूका अभवन् । यथेदानी-मस्मदपत्यानि वर्णमालादिक्रमेणोपदिशामः, पाठयामश्च, तथैव ते स्वस्वशाखागतवर्णमालात आरभ्य शिक्षयितुं समारब्धवन्तः । शिक्षणमपि वाचोविधेयरूपमेव, लेखनसाधनानामभाव-कालस्सः । विषयाणां विवेचनञ्च गोष्ठीरूपेणैव ते चक्रुरित्यत्र सन्ति सुलभानि प्रमाणानि । अनेन स्मृतिशक्तिः तेषां महीयस्यासीत् । शब्दतोऽर्थतश्च तेषां ज्ञानं स्मृत्यारूढमेवासीत् । अध्ययनक्रम एव तादृशः, येन स्मृतिशक्तेर्विवृद्धिरभवत् । छात्रस्य ब्रह्मचर्यपालनम्, अध्याया-नध्यायादिपर्यालोचनम्, अध्ययननियमानामनुसरणे बद्धादरता इत्यादिष्वाचार्यः जागरूकोऽ-भवत् । अध्ययनावसरे छात्राणामुपवेशनप्रभृत्युत्थानपर्यन्तं सन्ति बहवो नियमाः । यथायथं नित्य-नैमित्तिककर्माचरणम् उपनयनावसरे आचार्येणोपदिष्टस्य सावित्रमन्त्रस्य यथानियमं जप इत्यादिकं स्मृतिशक्त्युपष्टम्भकम् । अयं शिक्षाग्रन्थसमूह इदमवद्योतयति, यत्तदानीन्तने काले शिक्षाक्रमः कीदृश आसीदिति ।

यथा अनेकाश्शाखा अध्ययनाध्यापनपरम्परातो लुप्ताः, तथैव शिक्षा अपि लुप्ताः । स्मृतीनां मूलभूतवेदानुमानावसरे भाष्यकारः श्रीशबरस्वामी 'अस्या एव स्मृतेर्दृढिम्नः कारणमनु-मास्यामहे । तत्तु नानुभवनम्, अनुपपत्त्या । न हि मनुष्या इहैव जन्मन्येवञ्जातीयकमर्थमनुभवितुं शक्नुवन्ति, जन्मान्तरानुभूतञ्च न स्मर्यते । ग्रन्थस्त्वनुमीयेत, कर्तृसामान्यात्स्मृतिवैदिक-पदार्थयोः' इत्यादि वदन् ग्रन्थस्यैवानुमानमभिप्रैति । अनुमीयमानो 'ग्रन्थः' शास्त्रम्, न तु केवलं पुस्तकम् । शिष्यतेऽनेनेति शास्त्रम् । तच्च वेदशाखारूपमेव । तस्यास्तस्याश्शाखायास्सं-

रक्षणाय तैस्तैर्महर्षिभिः पृथक्पृथक् शिक्षाग्रन्थाः प्रणीताः। अत्रेमानि भट्टपादवाक्यानि ध्यानमर्हन्ति—

> 'शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि, वेदसमाम्नायविनाशभयात् स्वरूपेणानुपन्यस्यार्थोपनिबन्धनद्वारलभ्यानि, विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते। तत्र यथैवासप्रत्ययादिदमिह पठ्यत इति कथितमुच्चारितमनुच्चारितं वा शिष्याः प्रतिपद्यन्ते, तथैवसूत्रकारवचनान्यध्यापकवचनस्थानीयानि स्वानुरूपवेदवाक्यसमर्पणमात्रं कृत्वा निवृत्तव्यापाराणीति न ताल्वादिध्वनिप्रेरणावत्पौरुषेयत्वेन परिभवितव्यानि'। इति।

वार्तिकसन्दर्भस्यायमाशयः—यन्महर्षिभिः प्रवर्तितेषु स्मृतिग्रन्थेषु यदेव वाक्यं प्रत्यक्षश्रुतिविरुद्धं प्रतिभाति तस्यात्यन्तिकाप्रामाण्यं न साधनीयम्, यतश्च शाखान्तरेषु विप्रकीर्णवाक्येभ्यः पुरुषान्तरप्रत्यक्षेभ्योऽर्थानवगत्य तेभ्योऽर्थेभ्यो व्यज्यमानानि वाक्यानि पिण्डीकृत्य स्मृतिकर्तृभिस्स्मृतय उपनिबद्धास्स्युः। तेन प्रत्यक्षश्रुतिविरुद्धस्मृतयोऽपि तत्तदनुरूपवेदवाक्यसमर्पका इत्यङ्गीकृत्य यावत्तादृशानि वाक्यानि नोपलभ्यन्ते तावत्तेषां स्मृत्यर्थानामननुष्ठानमात्रम्, न तु तेषां सर्वथाप्रामाण्यमिति। स्मृतिग्रन्थेष्वेव शिक्षा अप्यन्तर्भवन्ति। व्याकरणादीनि षडङ्गानि गृह्यश्रौतसूत्राणि सर्वाण्यपि स्मृतय एव।

शिक्षाग्रन्थानां मूलं प्रत्यक्षश्रुतिः पूर्वं प्रदर्शिता। तामवलम्ब्य स्वस्वशाखागतवर्णस्वरादीनां विशेषेण विवरणं शिक्षासु दृश्यते। तत्र व्यासाचार्योऽपि तैत्तिरीयशाखायाः शिक्षां प्रणीतवान्। व्यासोक्तवर्णान् तद्देवता जातीश्च प्रादर्शयम्। अस्मिन् ग्रन्थे सन्ति सप्तविंशति प्रकरणानि। तत्र संज्ञाप्रकरणं प्रथमम्। यथा व्याकरणे संज्ञास्तथात्रापि विविधा संज्ञाः। भगवान् पाणिनिः संक्षिप्तैरेव शब्दैर्बह्वर्थान् बोधयन् सूत्रप्रणयनकर्मण्यग्रगण्यत्वेन प्रशस्यते, व्यासाचार्यस्तु स्वशिक्षासूत्राणि छन्दोबद्धानि कृतवान्। तत्र संक्षिप्तशब्दानां ग्रहणे कार्याणि न प्रचलन्ति, वेदगतानुपूर्वीमादाय कार्याणि विधातव्यानि भवन्ति। अतोऽल्पस्य कार्यस्य विधानाय बहूनां शब्दानामुपादानमावश्यकं भवति।

तेषु कार्यविधिषु संज्ञायामावश्यकतायां संज्ञाप्रकरणं प्रवृत्तम्। प्रायस्संज्ञा व्याकरणशास्त्रसमाना एव। क्वचित्तु तदपेक्षया किञ्चिद्वैलक्षण्यमनुभूयते। 'युङ्-असि' इत्यत्र ङकारस्य नाद इति संज्ञा। चवर्गपञ्चमं विहायान्येषां वर्गान्त्यानां नादसंज्ञा, 'ह्रस्वान्नादो द्विमात्रस्स्यादन्यत्राप्येकमात्रिकः' ( व्या० शि० ४९४ ) इति सूत्रेण नादसंज्ञकस्य द्विमात्रत्वं विधीयते। ह्रस्वातिरिक्तस्थले एकमात्रत्वमेव तेषाम्। एवमकारव्यहितकारशब्द ऊर्ध्वो यस्य स वर्णो हल् संज्ञकः। एवमनेकास्संज्ञास्स्वीकृताः। प्रग्रहा निरूपिता द्वितीयप्रकरणे। प्रगृह्य प्रग्रह इत्यनर्थान्तरम्। द्विवचनातिरिक्तस्थलेऽपि ईत् ऊत् एत् इत्येतेषाम् ओकारस्य च प्रग्रहा विहिताः। कण्ठोक्त्या केचन शब्दाः प्रग्रहत्वेन प्रदर्शिताः। तृतीये परिभाषाप्रकरणे द्वित्वागमलोपादिकार्यविधानाय नैकविधाः परिभाषा निरूपिताः। पदमुद्दिश्य यत्कार्यं विधीयते तत् पदैकदेशे न भवति, उदात्तवद्यस्स्वरः स प्रचय इति, सामान्यविशेषशास्त्रयोस्स्वरूपम् इत्यादयो निरूपिताः। चतुर्थप्रकरणादारभ्य आपञ्चदशप्रकरणं क्रमेण-दीर्घ-गम-लोप-विकार-षत्व-णत्व-रेफ-विसर्ग-यत्वाच्सन्धि-अनैक्य-ऐक्यविषया विवेचिताः। षोडशे स्वरधर्मविचारः। उदात्तानुदात्तस्वरितप्रचयाख्याश्चत्वारस्स्वराः, तेषां धर्मा अत्र प्रतिपादिताः। देहदैर्घ्यमुदात्तोच्चारणे, तत्सङ्कोचोऽनुदात्तस्य। अत एव 'उच्च' इति 'नीच' इति च तयोर्व्यवहारः। अनयोस्समाहारः समावेशस्स्वरित इत्युच्यते। स च—अभिनिहतः, क्षैप्रः, प्रश्लिष्टः, नित्यः, तैरोव्यञ्जन इति विभिन्नः। तैरोव्यञ्जनोऽपि नानाविधः। उदात्ततुल्यः प्रचयः। एवमादिस्वरधर्मलक्षणं प्रतिपादितम्। सप्तदशे स्वरसन्धि-लक्षणम्। स्वरसन्धावेव मृदुकिञ्चिद्दृढतर-दृढ-दृढतराल्परूपेण विविधाः प्रयत्नाः। न केवलं मुखमात्रेण स्वराणामुच्चारणम्, किन्तु करस्वरविन्यासोऽप्यष्टादशप्रकरणे निरूपितः। एकोनविंशे विंशे एकविंशे च द्वित्वपूर्वागम-द्वित्वनिषेधाश्च प्रतिपादिताः। सर्वेषु वेदेषु हस्तस्वरविन्यासस्यातिमहत्त्वं परिगण्यते—

'सुहस्तस्वर - विन्यासान्निर्मलाध्ययनं भवेत्।
तत्पूतो ब्राह्मणो यस्तु ब्रह्मणा सह मोदते'॥ ( व्या० शि० ३३५ )

इति फलश्रुतिः। याज्ञवल्क्योऽपि—

यथा वाणी तथा पाणी रिक्तन्तु परिवर्जयेत्।
यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति'॥ ( या० शि० ४६ )

इति ब्रुवन् वाक्त्वक्छ्रोत्रमनश्चक्षुषामकेतानत्वमध्ययनावसरेऽवबोधयति। कनिष्ठिकाया आदिरेखायामनुदात्तस्य, अनामिकाया अन्त्यरेखायां स्वरितस्य, मध्यमाया मध्यरेखायां प्रचयस्य,

तर्जन्या मध्यरेखायामुदात्तस्य चाङ्गुष्ठेन निर्देशो विहितः। निर्देशोऽयं गोकर्णसमानाकारे दक्षिणकरे कर्तव्यः। अत्र शिक्षान्तरवचनेन कियान् भेदोऽपि दृश्यते—

'उच्चं प्रदेशिन्युरुमध्यरेखां कनिष्ठिकायां निहतं पराग्रतः।
अनामिकान्त्यां स्वरितञ्च निर्दिशेत् सुमध्यमा मध्यगतां धृतं परे॥

इति तर्जन्या मध्यरेखायामुदात्तम् कनिष्ठिकाया अग्रेऽनुदात्तम्। अनामिकाया अन्त्यरेखायां स्वरितम्, मध्यमाया मध्यरेखायां प्रचयं निर्दिशेदित्यर्थः। पुरा एतादृशा अपि शूरा लक्षणान्ताध्यायिनो महाभागा आसन्, ये च कस्य चन मन्त्रभागस्य केवलं यथाशास्त्रं हस्तस्वरविन्यासमात्रं कुर्वतः स्वरानवगत्य मन्त्रभागं तं यथायथमुच्चारयन्ति स्म। उदात्तादयस्स्वराः स्वराणामेव, किन्तु यत्र व्यञ्जनानि स्वराङ्गत्वं भजन्ते, तत्राङ्गिनस्स्वरस्य धर्मं क्वचिद्व्यञ्जनान्यपि प्राप्नुवन्ति। एतदर्थमङ्गाङ्गिभावो निरूपणीयः। स च द्वाविंशे प्रकरणे निरूपितः। त्रयोविंशे रेफस्य लकारस्य च निमित्तमुखेन स्वरभावत्वं विवेचितम्। स्वरोध्वोष्मणि परे सति रेफस्य लकारस्य च स्वरभाक्त्वम्। अर्थात्स्वरव्यञ्जनात्मकवर्णत्वमिति। एवं रेफगर्भे ऋकारे सति तत्र स्वरभक्तिद्वयम्। स्वरभक्तिर्निमित्तभेदेन हारिणी हंसपदा हस्तिनी करेणुः हारिता कर्विणी स्वतन्त्रा चेति बहुविधा। तदिह सर्वमत्र विचारितम्। स्थानकरणप्रयत्नविचारश्चतुर्विंशे प्रकरणे। कस्मात्स्थानात्केन करणेन केन च प्रयत्नेन ध्वनिरुत्पद्यत इति, तेन कथं वर्णो व्यज्यत इत्यादिकं सविशेषं निरूपितम्। पञ्चविंशे प्लुतस्वरः, षड्विंशे ओष्ठ्यविचारः, सप्तविंशे कालनिर्णयः, उच्चारणफलश्रुतिरन्ते।

शिक्षाग्रन्थेषु परिशील्यमानेषु नूनमिमे ग्रन्था वेदाध्ययनसम्प्रदायात्समागतानि लक्ष्याणि विलोक्य तल्लक्षणं शिक्षाकारैः कृतमित्यभ्युपगन्तव्यं भवति। लक्षणनिर्माणानन्तरमिमानि लक्ष्याण्यजायन्तेति कल्पनं न केवलमनुचितम्, किन्त्वसाध्यमपि। शिक्षाग्रन्थेन वेदरक्षणं कथं भवतीत्यत्र द्वित्राण्युदाहरणानि पश्यामः। लक्षणग्रन्थानुसारेण वैदिकाः संहिताब्राह्मणाध्ययनानन्तरं पदपाठं क्रमपाठञ्च यथावदधीत्य विकृतिपाठांश्च जटाघनप्रभृतीन् सम्यगभ्यस्य तदनन्तरं शुद्धवर्णक्रमः, स्वरवर्णक्रमः मात्रावर्णक्रमः, अङ्गवर्णक्रमः, वर्णसारक्रमश्चेति पञ्चक्रमान् गुरुमुखेन गृह्णन्ति।

'[1]समिद्धो अञ्जन्'। ननु '[2]विष्णो हव्य ँ रक्षस्व' इतिवत् '[3]विष्णोस्स्थानम्' इत्यत्र किं न स्यादयं विधिः? उच्यते—सोऽपि '[4]विष्णोर्द्ध्रुवमसी' इत्यादिवत् षष्ठ्येकवचनत्वाद्विसर्गान्त इति परिहारः। अकारश्च व्यञ्जनञ्चाकारव्यञ्जने, ते उत्तरे यस्मात्स तथोक्तः॥

**स म ह द थ [5]पित्पूर्वो नित्योऽथेदेत् पतीश्रुतिः ॥ ४७ ॥**

[6]सान्निध्यादोकारो लभ्यते। पूर्वोक्तपरनिमित्ताभावेऽपि कार्यविधानार्थमोकारं विशिनष्टि। स-म-ह-द-थ पित् एवंपूर्वो नित्य ओकारोऽकारव्यञ्जनाभ्यामन्यपरोऽपि प्रग्रहस्स्यात्। यथा—'[7]सो एवैषैतस्य, '[8]मो एषां,' '[9]हो इत्याह,' '[10]इन्दो इत्याह,' '[11]तथो एवोत्तरे,' '[12]पितो आविशस्व'। '[13]तत्पूर्व इति किम्? '[14]शतक्रतवुद्ध ँ शमिव येमिरे'। नित्य इति किम्? '[15]प्र सो अग्ने'। अथेदेदिति। अथेत्ययमधिकारः। ईत्-ईकारः, एत्-एकारश्च प्रग्रहत्वेन विशिष्यत इत्येतदधिकृतं वेदितव्यम्। पतीश्रुतिः-पती इत्यस्य यत्र यत्र श्रुतिः-श्रवणमस्ति तत्र तत्र प्रग्रहत्वं विज्ञेयम्। यथा—'[16]शुभस्पती इदमहम्'। श्रुतिरिति किम्? '[17]दम्पती वामम्,' '[18]प्रियमिन्द्राबृहस्पती' इत्यादौ पदैकदेशोऽपि प्रग्रहत्वाय॥

**कार्ष्णी धी चक्षुषी मुष्टी देवता फल्गुनी अमी ॥ ४८ ॥**

**अह्नी श्रपणी हूती सुम्निनी सामनी हरी ॥ ४९ ॥**

**कल्पयन्ती तपसी नाभ्यैद्धव्यापृषती हुरी ॥ ५० ॥**

**रिष्यन्ती वाससी दर्वी नः पृथिवी व्यचस्वती ॥ ५१ ॥**

**जन्मनी वैष्णवी द्यावापृथिवी आहुती कृतौ ॥ ५२ ॥**

---

१. तै० सं० ५. १. ११. २. तै० सं० १. १. ३

३. तै० सं० १. १. १२. ४. तै० सं० १. २. १३.

५. 'पित्पूर्वश्चाथेदेतौ' 'पित्पूर्वो नित्योऽथेदेत्पतीश्रुचः' इति च पाठः।

६. अत्रापि चशब्देन स्थित ओकार इति पदद्वयमन्वादिश्यत इति सर्वलक्षणमञ्जरी।

७. तै० सं० २. २. ९. ८. तै० सं० ४. ५. १०. ९. तै० सं० २. ६. ७.

१०. तै० सं० ६. ५. ८. ११. तै० सं० ३. ४. ९. १२. तै० सं० ५. ७. २.

१३. पीति किमित्यर्थः। १४. तै० सं० १. ६. १२. १५. तै० सं० ३. २. ११.

१६. तै० सं० ३. २. १०. १७. तै० सं० ३. २. ८. १८. तै० सं० ३. ३. ११.

एतानि २७ प्रग्रहसंज्ञानि भवन्ति। यथा—'[१]कार्ष्णी उपानहौ' '[२]प्रधीता-वुक्थ्याः' '[३]चक्षुषी वा एते' '[४]मुष्टीकरोति' '[५]पितरो देवता फल्गुनी नक्षत्रम्'। देवतेति किम्? '[६]सा फल्गुनी यत्तृतीयम्'। '[७]अमी वा इदमभूवन्' '[८]अह्नी द्यौरिवासि' '[९]वपाश्रपणी प्रहरति' '[१०]स हूती वनतं गिरः, '[११]सुम्नाय सुम्निनी सुम्ने माधत्तम्' '[१२]सामनी प्रतिष्ठित्यै' '[१३]यो जान्विन्द्रते हरी' '[१४]कल्पयन्ती ऊर्ध्वं यज्ञं' '[१५]अप्सु दीक्षातपसी प्रावेशयन्' '[१६]रजतनाभी वैश्वदेवौ' '[१७]यदश्ववाला ऐक्षवी तिरश्ची' '[१८]युञ्जापृषती अभूताम्'। आ इति किम्? '[१९]पृषती स्थूलपृषती'। '[२०]सहुरी सपर्यात्' '[२१]अग्निमन्तर्भरिष्यन्ती' '[२२]वाससी नेष्टापोतृभ्यां' '[२३]दर्वी श्रीणीष आसनि' '[२४]द्यावा नः पृथिवी इमम्। न इति किम्? '[२५]मही द्यौः पृथिवी च नः।'[२६]व्यचस्वती संवसाथाम्' '[२७]उभे निपासि जन्मनी' '[२८]वलगहनौ वैष्णवी बृहन' '[२९]उद्‌द्यावापृथिवी भद्रम्'। द्यावेति किम्? '[३०]मही द्यौः पृथिवी च नः'। '[३१]अभितः पुरोडाशमाहुती जुहोति'। आ इति किम्? 'हुती तस्मा-देवा' इति शाखान्तरे। आभ्यां कृतौ पूर्वौ च प्रग्रहौ स्तः। यथा—'[३२]यावती द्यावा-पृथिवी महित्वा' '[३३]आविन्ने द्यावापृथिवी धृतव्रते' '[३४]पुरोडाशमेते आहुती'। आभ्यां कृताविति किम्? '[३५]यावती वै पृथिवी' '[३६]एते वा इडायै'॥

## रोदसी चोत्तरः पान्यपरो न्वती च ची प्र यत् ॥ ९३ ॥

---

१. तै० सं० ५. ६. ६.   २. तै० सं० ७. ४. ११.
३. तै० सं० २. ६. २.   ४. तै० सं० ५. २. १.   ५. तै० सं० ४. ४. १०.
६. तै० सं० २. १. २.   ७. तै० सं० ३. ३. ७.   ८. तै० सं० ४. १. ११.
९. तै० सं० ६. ३. ९.   १०. तै० सं० २. ३. १४.   ११. तै० सं० १. १. १३.
१२. तै० सं० ४. ४. २.   १३. तै० सं० १. ८. ५.   १४. तै० सं० १. २. १३.
१५. तै० सं० ६. १. १.   १६. तै० सं० ५. ५. २४.   १७. तै० सं० ६. २. १.
१८. तै० सं० ४. ६. ९.   १९. तै० सं० ५. ६. १२.   २०. तै० सं० ४. २. १२.
२१. तै० सं० ४. १. ३.   २२. तै० सं० १. ८. ११.   २३. तै० सं० २. २. १२.
२४. तै० सं० ४. १. ११.
२५. तै० सं० ३. ५. ११.   २६. तै० सं० ४. १. ३.   २७. तै० सं० १. ४. २२.
२८. तै० सं० १. ३. २.   २९. तै० सं० २. ६. ९.   ३०. तै० सं० ३. ५. ११.
३१. तै० सं० १. ५. ४.   ३१. तै० सं० ३. २. ६.   ३३. तै० सं० १. ८. १२.
३४. तै० सं० १. ५. २.   ३५. तै० सं० ५. २. ३.   ३६. तै० सं० १. ७. १.

रोदसीत्यत्रान्त्यस्स्वरः प्रग्रहस्स्यात्। यथा—'[1]रोदसी अपृणाज्जायमानः'। अस्मात्परश्च प्रग्रहस्स्यात्। यथा—'[2]अन्विन्द्र ॐ रोदसी वा वसाने'। पान्यपर इति। पकारादन्यवर्णपरो न्वतीशब्दः प्रग्रहस्स्यात्। यथा—'[3]ओमन्वती तेऽस्मिन् यज्ञे'। पान्य इति किम्? '[4]मूर्धन्वती पुरोनुवाक्या भवति'। ची प्र यदिति। प्र यत् एवं परः चीशब्दः प्रग्रहस्स्यात्। यथा—'[5]प्राची प्रेतमध्वरम्' '[6]तिरश्ची यदाश्ववालः'। एवं पर इति किम्? '[7]प्राची दिशाम्' '[8]प्राची पत्नी', '[9]घृताची यज्ञो देवाञ्जिगाति'। ची इति किम्? '[10]प्रजनने प्रजननम्' '[11]वज्र एकादशिनी यदग्नौ'॥

## न ह्यन्योद्धर्वौ समीची ग्नी घ्नी चक्रे पोद्धर्वे आन्मही ॥ ५४ ॥

न हि इत्येताभ्यामन्यवर्णपरौ क्रमात् समीची ग्नी इति शब्दौ प्रग्रहौ स्तः। यथा—'[12]पश्चात्समीची ताभिः'। '[13]इन्द्राग्नी च हि देवानाम्'। न ह्यन्योद्धर्व इति किम्? '[14]समीची नामासि'। '[15]ऐन्द्राग्नी हि बार्हस्पत्या'। एताविति किम्? '[16]ते यदेव किञ्च'। घ्नी चक्रे पोद्धर्व इति। घ्नी चक्रे इत्यनयोरन्त्यस्वरः पकारे परे सति प्रग्रहस्स्यात्। यथा—'[17]वार्त्रघ्नी पूर्णमासे,' '[18]चक्रे पृष्ठानि'। पपर इति किम्? '[19]वार्त्रघ्नी स्यात्' '[20]चक्रे अग्निर्जनुपा'। घ्नी चक्रे इति किम्? '[21]शकाभौमी पान्त्रः' '[22]ईशे पशुपतिः पशूनाम्'। आन् मही इति। आन् इत्येतत्पूर्वः महीशब्दः प्रग्रहस्स्यात्। यथा—'[23]महान्मही अस्तभायत्'। आन् इति किम्? '[24]एक इन्मही देवस्य'॥

## ऊद्धर्वे शाखे धृते शृङ्गे एने मेध्ये च देवते ॥ ५५ ॥

---

१. तै० सं० ४. २. २. २. तै० सं० १. ७. १३. ३. तै० सं० २. ६. ९.
४. तै० सं० २. ६. २. ५. तै० सं० १. २. १३. ६. तै० सं० ५. २. १.
७. तै० सं० ४. ३. ३. ८. तै० सं० ५. ३. ७. ९. तै० सं० २. ५. ७.
१०. तै० सं० १. ५. ९. ११. तै० सं० ५. ५. ७. १२. तै० सं० ५. २. ३.
१३. तै० सं० ५. ५. ६.
१४. तै० सं० ५. ५. १०. १५. तै० सं० ५. ५. ६. १६. तै० सं० ७. ३. १.
१७. तै० सं० २. ५. २. १८. तै० सं० ६. ६. ८. १९. तै० सं० ६. १. ६.
२०. तै० सं० १. ३. १४. २१. तै० सं० ५. ५. १८. २२. तै० सं० ३. १. ४.
२३. तै० सं० २. ३. १४. २४. तै० सं० ४. १. १.

पार्श्वे एवोत्तरे अक्ते तृण्णे तृद्ये कनीनिके ॥ ५६ ॥
शिप्रे रथन्तरे शस्त्रेऽहोरात्रे चोत्तमे उभे ॥ ५७ ॥
सामे सदोहविर्द्धाने [1]वजेऽधिषवणे शिवे ॥ ५८ ॥
विषुरस्य विरूपे च दृढे ध्वंसदने हुले ॥ ५९ ॥
अर्पिते रैवते पूर्ते भागधे च धृतव्रते ॥ ६० ॥
अच्छिद्रेऽनृते ग्रत्ते अस्मे त्वे इत्यनिङ्ख्यगम् ॥ ६१ ॥

[2]एष्वन्त्यस्वरः प्रग्रहस्स्यात्। यथा—'[3]ऊर्ध्वे समिधौ' '[4]विशाखे नक्षत्रम्' '[5]विधृते सर्वतः,' '[6]अन्तरा शृङ्गे तम्' '[7]एवैने लोकं गमयति,' '[8]प्रणेनेक्ति मेध्ये एवैने करोति,' '[9]द्वे ह्येते देवते समृध्यै' '[10]पार्श्वे परस्सामानः' '[11]तथो एवोत्तरे निर्वपेत्'। एवेति किम्? '[12]नैति षोडश्युत्तरे'। '[13]घृतेनाक्ते वृषणम्' '[14]असन्तृण्णे हि' '[15]सन्तृद्ये धृत्यै' '[16]बहिर्धा कनीनिके दध्युः' '[17]पीत्वा शिप्रे अवेपयः' '[18]यद्बृहद्रथन्तरे अन्वर्जेयुः' '[19] स्तुतशस्त्रे एवैतेन' '[20]अहोरात्रे गच्छ स्वाहा'। अहरिति किम्? '[21]अतिरात्रे पशुकामस्य'। '[22]विकर्णीश्चोत्तमे'। चेति किम्? '[23]सम्पाद्योत्तमे मासि'। '[24]उभे निपासि जन्मनी' '[25]ऋक्सामे वै' '[26]सदोहविर्धाने एव'। सद इति किम्? '[27]तस्माद्धविर्धाने चर्म्मन्'। ननु पदोक्ते

---

१. वंजेऽधिषवणे, जे अधिषवणे इति च पाठः।

२. ऊर्ध्वे इत्याद्यस्मे इत्यन्तेषु सप्तत्रिंशत्सङ्ख्याकेषु पदेष्वधिकृतवर्णः पदान्तः प्रग्रहो भवतीति सर्वलक्षणमञ्जरी।

३. तै० सं० २. ६. ६. ४. तै० सं० ४. ४. १०. ५. तै० सं० ६. ४. १०.
६. तै० सं ६. २. ८. ७. तै० सं० ६. २. ९.
८. तै० सं० ६. २. ९. ९. तै० सं० २. १. ९. १०. तै० सं० ७. ३. १०.
११. तै० सं० ३. ४. ९. १२. तै० सं० ७. १. ४. १३. तै० सं० १. ३. ७.
१४. तै० सं० ६. २. ११. १५. तै० सं० ६. २. ११. १६. तै० सं० ७. २. ९.
१७. तै० सं० १. ४. ३०. १८. तै० सं० ७. ५. ३३. १९. तै० सं० ५. ६. ८.
२०. तै० सं० ६. ४. १. २१. तै० सं० ६. ६. ११. २२. तै० सं० ५. ३. ७.
२३. तै० सं० ७. ५. ३. २४. तै० सं० १. ४. २२. २५. तै० सं० ६. १. ३.
२६. तै० सं० २. ५. ५. २७. तै० सं० ६. २. ११.

पदमिति सामर्थ्यात् हविर्धान इति पदस्यैव कार्यसिद्धेः सदःपदं व्यर्थम्। मैवम्; पदग्रहणस्य स्थलान्तरे भिन्नरूपत्वसम्भावनायां विशेषणं सार्थकम्। भिन्नरूपत्वाभावे तु चोद्यमेवैतत्। ननु तर्हि देवते इत्यस्य स्थलान्तरे 'सोमदेवते मतिविद' इत्यत्र भिन्नरूपत्वाद् विशेषणेन भवितव्यम्, तच्च नास्ति। उच्यते–देवते इत्यखण्डपदस्यैव कार्यविधानादत्र विशेषणं न युज्यते। अखण्डपदस्य विधानमिति कथं प्रतीयते? उच्यते—मध्योदात्तेऽखण्डपदे देवताशब्दे द्विवचनान्तस्य 'देवते' इति पदस्य ग्रहणादिति ब्रूमः। किञ्च 'ते' इति पदस्य '*ते तू पा हः' इत्यादिना पृथक्करणादिति च। नैवं हविर्धाने इत्यस्याखण्डद्योतकं किञ्चिदप्यस्ति। येन सदःपदं वैयर्थ्यमश्नुवीत। '[1]अग्रपूर्वजे पितरा' '[2]अधिषवणे जिह्वा'। अधि इति किम्? '[3]तृतीयसवने पशुकामस्य'। '[4]सोम्यासश्शिवे नः, '[5]विषुरूपे अहनी' '[6]संवत्सरस्य रूपे आप्नुवन्ति' '[7]विरूपे धापयेते'। विषु रस्य वि इति किम्? '[8]इश आ रूपे अन्नम्' '[9]दृढे येन सुवः' '[10]कृणुध्व ँ सदने ऋतस्य'। ध्वमिति किम्? '[11]समुद्रे सदने सीद' '[12]बहुले उभे,' '[13]भुवनेष्वर्पिते' '[14]शाक्वररैवते सामनी' '[15]इष्टापूर्ते स ँ सृजेथाम्', '[16]भागधे असाव'। भागेति किम्? '[17]अग्न उदधे याते' '[18]धृतव्रते आविन्ना देवी'। धृतेति किम्? '[19]यस्य व्रते पुष्टिपतिः'। '[20]वर्म च स्थो अच्छिद्रे,' '[21]सत्यानृते अवपश्यन्' '[22]प्रत्ते काममन्नाद्यम्,' '[23]अस्मे ते बन्धुः'। त्वे इत्यनिङ्ग्यगमिति। इङ्ग्यं गच्छतीतीङ्ग्यगम्, न इङ्ग्यगमनिङ्ग्यगम्। अनिङ्ग्यान्तमित्यर्थः। तथा भूतं त्वे इति पदं प्रग्रहसंज्ञं स्यात्। यथा—'[24]त्वे क्रतुमपि'। इति शब्दः पदग्रहणं द्योतयति।

---

* सू० ६८.    १. तै० सं० ४. १. ११.    २. तै० सं० ६. २. ११.

३. तै० सं० ६. ६. ११.    ४. तै० सं० ४. ६. ६.

५. तै० सं० ४. १. ११. विषु-रस्य-वि इत्येवं पूर्वे रूपे इति शब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति इति पाठः।

६. तै० सं० ७. ५. १.    ७. तै० सं० ४. १. १०.    ८. तै० सं० ४. ३. १३.

९. तै० सं० ४. १. ८.    १०. तै० सं० ४. १. ११.    ११. तै० सं० ४. ३. १.

१२. तै० सं० ४. १. ३.    १३. तै० सं० ४. ७. १३.    १४. तै० सं० १. ८. १३.

१५. तै० सं० ४. ७. १३.    १६. तै० सं० २. ५. ६.    १७. तै० सं० ५. ५. ९.

१८. तै० सं० १. ८. १२.    १९. तै० सं० ३. १. ११.    २०. तै० सं० ४. १. ३.

२१. तै० सं० ५. ६. १.    २२. तै० सं० ५. ४. ९.    २३. तै० सं० १. २. ७.

२४. तै० सं० ३. ५. १०.

पदमिति किम् ? '[१]क्रत्वे दक्षाय' । अनिङ्ग्यान्तमिति किम् ? '[२]अनागास्त्वे अदिति-त्वे तुरासः' ॥

एते वैसं हि तन्वेव यज्ञेष्टक् पत्परो द्वयोः ॥ ६२ ॥

वैसं, हि, तनु, एव, यज्ञ, इष्टक्, पत् इत्येवं पर एते इत्यस्मिन्नन्त्यस्वरः प्रग्रहस्स्यात् । यथा—'[३]एते वै संवत्सरस्य' । सम्मिति किम् ? '[४]एते वा इडायै' । '[५]एते हि देवानाम्' । '[६]तस्यैते तनुवौ घोरा' '[७]एते एव नमस्यन्' '[८]एते यज्ञस्य,' '[९]यदेते इष्टके,' '[१०]यज्ञस्य ह्येते पदे' । एवं पर इति किम् ? '[११]एते देवा इति' । एते इति किम् ? '[१२]पुष्करपर्णं ह्येतद्' '[१३]अग्ने यज्ञपतिम्' । परो द्वयोरिति । [१४]निमित्तिन एते इत्यस्योपरिवर्तमानयोः इष्टक् पत् इत्यनयोर्द्वयोरन्त्यस्वरः प्रग्रहस्स्यात् । यथा—'[१५]यदेते इष्टके उपदधाति' '[१६]यज्ञस्य ह्येते पदे' । निमित्तिनः परयोरिति किम् ? '[१७]देवीष्टके विधेम,' '[१८]सप्तमे पदे जुहोति' ॥

द्वे परश्चैकव्यवेतः कृष्णा वीड्द्वार्यदा चराव् ॥ ६३ ॥

[१९]स्थः परः पूर्वतो वापि ईदेकारोऽन्त एव च ॥ ६४ ॥

द्वे इति प्रग्रहस्स्यात् । यथा—'[२०]यद्द्वे नश्येताम्,' '[२१]द्वे द्वे सम्भरति' । द्वे इत्यस्मात्परश्च शब्दः प्रग्रहस्स्यात् । यथा—'[२२]द्वे शुक्ले द्वे कृष्णे' । द्वे इत्यस्मादेकेन पदेन व्यवहितोऽपि प्रग्रहस्स्यात् । यथा—'[२३]द्वे ह्येते देवते' '[२४]द्वे सवने शुक्रावती'

---

१. तै० सं० ३. ३. ११. २. तै० सं० २. १. ११. ३. तै० सं० २. ५. ६.
४. तै० सं० १. ७. १. ५. तै० सं० २. ५. ३. ६. तै० सं० ५. ७. ३.
७. तै० सं० २. ५. ६. ८. तै० सं० ६. ६. २. ९. तै० सं० ५. ३. ५.
१०. तै० सं० ५. १. ६. ११. तै० सं० २. ६. ३. १२. तै० सं० ५. १. ४.
१३. तै० सं० १. १. ५.
१४. अत्र निमित्ती एतेशब्दः सान्निध्याल्लभ्यत इति सर्वलक्षणमञ्जरी ।
१५. तै० सं० ५. ३. ५. १६. तै० सं० ५. १. ६.
१७. तै० सं० ४. २. ९. १८. तै० सं० ६. १. ८.
१९. 'स्थः परः पूर्वतोऽप्यादेत्पूर्वस्ते थे तु बह्वृचः' इति क्वचित्पाठः । एतेन मूलस्थानन्तरार्धमपि व्याख्यातम् । सर्वलक्षणमञ्जरीकारेण टिप्पणीस्थपाठ एवादृतः ।
२०. तै० सं० २. ६. ३. २१. तै० सं० १. ६. ८. २२. तै० सं० ५. ३. १.
२३. तै० सं० २. १. ९. २४. तै० सं० ६. १. ६.

'[1]द्वे वाव देवसत्रे'। कृष्ण इति। कृष्णः, वीट्, द्वारौ, यदा, चरावः, स्थः एवं परः पदान्त ईकार एकारो वा प्रग्रहस्स्यात्। यथा—'[2]अतिष्ठमाने कृष्णः'। विसर्गेण किम्? '[3]चात्वाले कृष्णविषाणाम्'। '[4]धिषणे वीड्व सती'। डिति किम्? '[5]च मे वीरुधश्च मे' '[6]देवी द्वारौ मा मा'। राविति किम्? '[7]सम्पद्यन्ते द्वादश'। '[8]अजनन्नन्नमाने, यदेदन्ताः'। 'पदम्मानो यदा' इति '[9]श्रोणिशो यतन्ते यदाक्षिषुः' इत्यत्र न प्रग्रहः। '[10]विवसानौ ये चरावः'। राविति किम्? '[11]राये च नः'। '[12]इनप्त्रे स्थो विष्णो स्यूरसि'। विसर्गेण किम्? '[13]य एतस्मिन् लोके स्थ'। पूर्वतो वेति। अपिशब्दः स्थःपदमन्वादिशति। तदयमर्थः—स्थःशब्दे पूर्वत्र विद्यमाने सति तस्मात्परस्मिन् पदेऽन्त्यस्स्वरः प्रग्रहो भवति। यथा'[14]शिप्रे स्थस्ते वाम्' '[15]स्थश्शिथिरे समीची'॥

## बहुस्वरस्य ते थे च आकारैकारपूर्वकः ॥ ६५ ॥

बहवस्स्वरा यस्मिंस्तत् बहुस्वरम्। अत्र स्वरशब्दोपादानमचां बहुस्वरपदस्य। तस्य सम्बन्धी ते इति थे इति वा शब्द आकारपूर्व एकारपूर्वो वा पदान्तः प्रग्रहो भवति। यथा—'[16]सृजाते यः' '[17]शुक्रामन्थिनौ गृह्येते' '[18]रिरिचाथे दिवश्च' '[19]दृꣳहणा यन्नुदेथे'। तत्पूर्व इति किम्? '[20]आवृश्च्यते वै' '[21]विदथे अन्तरेषाम्'। ते थे इति किम्? '[22]अनूच्यमान आसादयति'॥

## [23]पूर्णे ब्रह्मजेमे आपस्सजूः क्रूरं तथैषु च ॥ ६६ ॥

---

१. तै० सं० ७. ४. ५.   २. तै० सं० ६. ३. १.   ३. तै० सं० ६. १. ३.
४. तै० सं० १. ४. १.   ५. तै० सं० ४. ७. ५.   ६. तै० सं० ३. २. ४.
७. तै० सं० ६. ३. ७.   ८. तै० सं० ४. ६. २.   ९. तै० सं० ४. ६. ७.
१०. तै० सं० १. ५. १०.   ११. तै० सं० ५. ५. ४.   १२. तै० सं० १. २. १३.
१३. तै० सं० ३. २. ५.   १४. तै० सं० १. २. २.   १५. तै० सं० ३. २. ४.
१६. तै० सं० २. २. ६.   १७. तै० सं० ६. ४. १०.   १८. तै० सं० ४. ३. ११.
१९. तै० सं० ४. ७. १५.   २०. तै० सं० ३. ३. ८.   २१. तै० सं० २. १. ११.
२२. तै० सं० २. २. ५.

२३. 'पूर्णे ब्रह्मजआपश्च सजूः क्रूरन्तथैषु च। इमे एव रसेनोपगर्भश्चोत्तरतस्तथा॥ इति पाठः।

पूर्ण इत्ययं प्रग्रहस्स्यात् ब्रह्मजज्ञानमित्यनुवाके[1]। यथा—'[2]पूर्ण उपदधाति, पूर्ण एवैनम्'। अत्र किम्? '[3]यो वै पूर्ण आसिञ्चति'। इमे आप इति। चशब्देन ब्रह्मजेत्यन्वादिश्यते-ब्रह्मजज्ञानम्, आपो वरुणस्य, सजूरब्दः, क्रूरमिव वै एष्वनुवाकेषु इमे इति प्रग्रहस्स्यात्। ब्रह्मजज्ञानमित्यत्र यथा—'[4]न हीमे यजुषाप्तुम्'। जेति किम्? 'ब्रह्मवादिनो वदन्त्यद्भिः' इत्यत्र '[5]त्रय इमे लोकाः' इत्यत्र प्रग्रहत्वं मा भूदिति। आपो वरुणस्येत्यत्र यथा—'[6]इमे एवोपधत्ते'। सजूरित्यत्र यथा—'[7]इमे अश्विना संवत्सरः'। क्रूरमिवेत्यत्र यथा—'[8]इमे वै रोदसी'॥

## [9]एव रसेन गर्भञ्च उपोत्तर इमे तथा ॥ ६७ ॥

एव, रसेन, गर्भम्, उप इत्येवं परश्च इमेशब्दः प्रग्रहस्स्यात्। यथा—'[10]इमे एव रसेनानक्ति'। रसेनेति किम्? '[11]इम एवास्मै लोकाः'। '[12]यदिमे गर्भमदधाताम्' '[13]यां वा इमे उपावत्स्यतः'॥

## ते तूपाहर्नमो गर्भं वायुर्मापैनमभ्यधः ॥ ६८ ॥

तु-उप-अहः-नमः-गर्भम्-वायुः- मा पा-एनमभि इत्येवंपरः ते इति प्रग्रहस्स्यात्। यथा—'[14]ते त्वाव न'। उ इति किम्? '[15]ते ते धामानि'। '[16]ते उपामन्त्रयन्त' '[17]ते अहोरात्रयोः' '[18]पुनस्ते नमोऽग्नये'। म इति किम्? '[19]ते न व्यजयन्त'। '[20]ते गर्भमदधाताम्' '[21]ते वायुर्व्यवात्'। युरिति किम्? '[22]ते वाचगुँ स्त्रियम्'। '[23]ते मा पातमास्य'। पेति किम्? '[24]ते मास्मिन् यज्ञे'

---

१. अनुवाके इत्यनन्तरं सान्निध्यादिति क्वचित्पाठः।

२. तै० सं० ५. २. ७. ३. तै० सं० ७. ५. ६. ४. तै० सं० ५. २. ७.

५. तै० सं० २. ६. ५. ६. तै० सं० ५. ५. ४.

७. तै० सं० ५. ६. ४. ८. तै० सं० ५. १. ५.

९. एव रसेन गर्भञ्चेदुपोत्तर इति पाठः।

१०. तै० सं० ६. ३. ११. ११. तै० सं० २. ४. १०. १२. तै० सं० ३. ४. ३.

१३. तै० सं० ६. १. ३. १४. तै० सं० ७. ५. ७. १५. तै० सं० १. ३. ६.

१६. तै० सं० ६. १. ३. १७. तै० सं० ६. १. ३. १८. तै० सं० १. ५. १०.

१९. तै० सं० ५. ४. १. २०. तै० सं० ३. ४. ३. २१. तै० सं० ३. ४. ३.

२२. तै० सं० ६. १. ६. २३. तै० सं० १. २. २. २४. तै० सं० ३. २. ४.

'[1]ते एनमभिसम्' । अभीति किम् ? '[2]त एनं भिषज्यन्ति' । तत्परः किम् ? '[3]ते देवाः' । ते इति किम् ? '[4]बृहदुक्षे नमः' ॥

## ते अस्याचक्र्छन्दस्वोर्वी '[5]येऽप्र यङ् क्रान्तरासु च ॥ ६९ ॥

अस्य-आचर एवं परा ते इति [6]ऋक्, छन्दस्वती उषसा, उर्वीरोदसी, ये अप्रथेताम्, यङ्क्रन्दसी, अन्तरामित्रावरुणा, आसु सप्तसु ऋक्षु ईकार एकारो वा पदान्तः प्रग्रहस्स्यात् । यथा—'[7]ते अस्य योषणे' '[8]ते आचरन्ती समना' । अस्य आचरन्ती इति किम् ? '[9]ते अग्रे अश्वमायुञ्जन्' '[10]ते नो अर्वन्तः' '[11]त आगता वसा शन्तमेन' । '[12]छन्दस्वती उषसा पेपिशाने' '[13]उर्वी रोदसी वरिवः कृणोतम्' '[14]ये अप्रथेताम्' । अप्र इति किम् ? '[15]ये ते पन्थानः' । '[16]यङ्क्रन्दसी अवसा तस्तभाने' । क्रेति किम् ? '[17]यमग्ने पृत्सु मर्त्यम्' '[18]अन्तरा मित्रावरुणा चरन्ती' ॥

## [19]सोमाय स्वेति चैतस्मिन्वरी इत्याद्ययं परः ॥ ७० ॥

'सोमाय स्वराज्ञे' इत्यनुवाके ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—'[20]अवी ते धेनू भौमी' इत्यादि । स्वेति किम् ? '[21]सोमाय पितृमते' । वरी इतीति । 'वरी' 'इति' इतिपदद्वयमारभ्य 'अयं' पर्यन्त ईकार एकारो वा पदान्तः प्रग्रहस्स्यात् । यथा—'[22]पूर्वजे ऋतारी इत्याह' इत्यादि । इति शब्दः किमर्थः ? वरीद्वयसम्भवात् कुत्रावधित्वेन स्वीकार इति सन्देहे सति 'सन्देहे[23] सन्निधिं त्वपि' इति वचनात् द्वितीयवरीशब्द एव स्वीकर्तव्यः,

---

१. तै० सं० २. ५. ६. २. तै० सं० २. ३. ११. ३. तै० सं० २. १. ४.
४. तै० सं० १. ४. २६. ५. ये अव्यङ्क्रान्तरासु चेति पाठः ।
६. 'ते अस्य योषणे' ते आचरन्ती' इत्येते ऋचौ ग्राह्ये ।
७. तै० सं० ४. १. ८. ८. तै० सं० ४. ६. ६ ९. तै० सं० १. ७. ७.
१०. तै० सं० १. ७. ८. ११. तै० सं० २. ६. १२. १२. तै० सं० ४. ३. ११.
१३. तै० सं० ४. ७. १५. १४. तै० सं० ४. ७. १५. १५. तै० सं० ७. ५. २४.
१६. तै० सं० ४. १. ८. १७. तै० सं० १. ३. १३. १८. तै० सं० ५. १. ११.
१९. 'सोमाय स्वेरादाधार वरी इत्याद्ययं परः' इति पाठः । 'सोमाय स्वेराद्यादाधावरी इत्याद्ययं परे' इति सर्वलक्षणमञ्जरीपाठः । २०. तै० सं० ५. ६. २१.
२१. तै० सं० १. ८. ५. २२. तै० सं० २. ६. ७. २३. सू० १९.

सन्निकृष्टत्वात्। तथा सति पूर्ववरीशब्दस्य एतेशब्दस्य च प्रग्रहत्वं न स्यात्, तन्मा भूदिति वरी इति इति पद्वयं गृहीतम्। अनेनैव न्यायेन अयं पर इति 'अयं यजमान' इति सम्भवति ॥

**इरावती प्रभृत्यैव दाधारान्तस्तथैव च ॥ ७१ ॥**

इरावतीशब्दमारभ्य दाधारशब्दपर्यन्तम् ईकार एकारो वा पदान्तः प्रग्रहस्स्यात्। यथा—"[1]इरावती धेनुमती' इत्यादि।

**कुर्यादिष्टिष्वग्निं गानूद्भवतोऽवान्तराकरोत् ॥ ७२ ॥**
**आस्तां गमयतोऽन्नूतां स्तभ्नीतां बिभृतस्त च ॥ ७३ ॥**
**वाचयत्यप्युभाभ्याञ्च ताभ्यामेव तनू यदा ॥ ७४ ॥**
**प्रवर्तपर आषष्ठात्सदा प्रग्रहकार्यभाक् ॥ ७५ ॥**

कुर्यात् इष्टिषु। इष्टयो नाम द्वशमादयस्त्रयः प्रश्ना उत्तमानुवाकरहिताः। अग्निं गायत्रम्, अनूद्भवतः-ऊकाराद्न्यवर्णपूर्वं भवत इति पदम्, अवान्तरम्, अकरोत्, आस्ताम्, गमयतः, अन्नूताम्, स्तभ्नीताम्, बिभृतस्त, वाचयति, उभाभ्याम्, ताभ्यामेव, तनूयत्, प्रवर्त एवं पर आषष्ठात्पदात्पूर्वो वर्तमानः पदान्त ईकार एकारो वा प्रग्रहस्स्यात्। अभिविधावयमाकारः। तेन सहेत्यभिविधिः। यथा—'[2]मानवी ऋचौ धाय्ये कुर्यात्' '[3]मारुती याज्यानुवाक्ये कुर्यात्'। इष्टिष्विति किम्? '[4]अग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्' '[5]वृषणग्ँ ह्येते दधाते ये अग्निं गायत्रम्'। गेति किम्? '[6]सधस्थे अग्निं पुरीष्यम्'। '[7]उत्तरावती भवतोऽभिक्रान्त्यै'। अनूतपूर्व इति किम्? '[8]दीक्षन्तेऽन्तनामानावृतू भवतः' '[9]उत्सृज्ये इत्याहुर्ये अवान्तरम्' '[10]इन्द्रियावी पशुमान्भवत्यव वै'। 'बुध्नवती अग्रवती याज्यानुवाक्ये अकरोत्' '[12]इमे वै सहास्ताम्' '[13]ते एवैनं प्रतिष्ठां

---

१. तै. सं. १. २. ।३. २. तै. सं. २. २. १०. ३. तै. सं. २. ३. ३.
४. तै० सं० २. ५. ५. ५. तै० सं० ६. ३. ५. ६. तै० सं० ४. १. ३.
७. तै० सं० ५. ४. ८. ८. तै० सं० ७. ४. ८. ९. तै० सं० ७. ५. ७.
१०. तै. सं. २. २. ५. ११. तै. सं. २. ३. ४. १२. तै. सं. ३. ४. ३.
१३. ते. सं. २. १. ४.

गमयतः' '[1]ते अब्रूताम्' '[2]वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताम्' '[3]ते एव यजमानस्य रेतो बिभृतस्तस्मात्' । तेति किम् ? '[4]मन्महे यावात्मन्वद्बिभृतो यौ च' । '[5]उत्तमे औदुम्बरी वाचयति' '[6]ये द्वे अहोरात्रे एव ते उभाभ्याम्' '[7]एते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव' । अत्र पदद्वयमेकं निमित्तम् । '[8]एवपदमुद्दिश्य आषष्ठनियमभङ्गप्रसङ्ग इति चेत्-नायं प्रसङ्गः । निमित्तैकदेशस्य षष्ठत्वोपपत्तेः सकलस्यापि निमित्तस्य [9]षष्ठत्वमुपचर्यते । लोकेष्ववयवधर्मेणावयविनो विशेषसिद्धेः । तथाहि—कर्णे कुण्डलं धारयन्तं कुण्डली देवदत्त इति वदन्ति खलु । एवेति किम् ? '[10]अपहृग्ँ स्यग्ने, ताभ्यां पतेम' '[11]एते वै महायज्ञस्यान्त्ये तनू यत्' । यदिति किम् ? '[12]परिपतये त्वा गृह्णामि तनूनप्त्रे' । आकारः पादपूरणार्थं गृह्यत इति विज्ञेयम् । '[13]हविर्धाने प्राची प्रवर्तयेयुः' । वर्तेति किम् ? '[14]एते धनदा असि नस्त्वम्, प्रणो यच्छतु' । सदा प्रग्रहकार्यभागिति । '[15]एते ते अस्यादय उपबन्धा इत्युच्यन्ते । उप समीपे निबध्यत इत्युपबन्धः । प्रग्रहकार्यभाक्—प्रग्रहलक्षणे कार्यं भजतीति । प्रग्रहकार्यभाक् पदन्तु सर्वदा संहितायामसंहितायाञ्च भवतीति विज्ञेयम् । 'घ्नी चक्रे पोद्धर्व' इत्युक्ते पकारेण विनापि प्रग्रहसंज्ञा स्यादिति । किञ्च '[16]उपो देवान्देवानुपो उपो देवान्' इत्यत्र जटायां निमित्तान्यपरोऽपि प्रग्रहस्स्यात् । तस्मात् '[17]आस्तां ते त आस्तामास्तां ते' इत्यत्रोपबन्धप्राप्तिर्दूरोत्सारितेति नेयमत्र शङ्का ॥

**नाऽतेऽवेऽन्हे धत्ते यीते ग्रामी ज्ञे वर्चसी थुनी ॥ ७६ ॥**
**लोके रुन्धे मासे नित्यं पस्थे नीचस्त उर्वशी ॥ ७७ ॥**

---

१. तै. सं. २. ५. २. २. तै. सं. ४. ४. ३. ३. तै. सं. ५. ६. ८.
४. तै. सं. ४. ७. १५. ५. तै. सं. ५. १. १०. ६. तै. सं. ७. ४. ४.
७. तै. सं. ७. २. १.
८. निमित्तं तत्पदमुद्दिश्य, निमित्त्येतत्पदमुद्दिश्य इति पाठः ।
९. षष्ठत्वमुपपद्यते इति पाठः ।
१०. तै० सं० ४. ७. १३. ११. तै० सं० २. २. ७. १२. तै० सं० १. २. १०.
१३. तै० सं० ३. १. ३. १४. तै० सं० १. ७. १०.
१५. ते अस्यादय इत्यारभ्य उपबन्धा इति । आरम्भा उपबन्धा इति च क्वचित्पाठः ।
१६. तै० सं० १. ३. ७. १७. तै० सं० २. ५. ८.

अते अवे अन्हे धत्ते शार्याते ग्रामी ज्ञे वर्चसी मिथुनी लोके रुन्धे मासे उपस्थे, अनुदात्तः ते इति शब्दः उर्वशी एष्वन्त्यस्वर आषष्टादिप्राप्तौ सत्यां नित्यं प्रग्रहो न स्यात्। यथा—'[1]द्वे जाये विन्दते' '[2]वनस्पते वीडुवङ्गः' '[3]अवरुन्धते-ऽतिरात्रावभितो भवतः' '[4]अभ्याह्वयते वज्रमेनमभिप्रवर्तयति'। [5]तत्पदसाह-चर्यात् 'अते' इत्यस्य सर्वत्रापि समानपदत्वं विज्ञेयम्। [6]अत एव 'एव ते उभा-भ्याम्' इत्यत्र निषेधो न स्यात्, अत्रास्यासमानपदत्वादिति। '[7]मनवे यशस्ये' '[8]भौमी वायवे'। '[9]एण्यह्ने कृष्णः'। '[10]ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतः'। '[11]यथा शार्याते अपिबः'। '[12]ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतः' '[13]वरुणाय राज्ञे कृष्णः' '[14]सोमाय स्वराज्ञे' '[15]यज्ञेऽपि कर्तोरिति तावब्रूताम्' '[16]ब्रह्मवर्चस्व्येव भवत्युभयतो रुक्मौ भवतः' '[17]अथ मिथुनी भवतः' '[18]लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतः' '[19]रुन्धे द्यावापृथिवी गच्छ' '[20]अवरुन्धे यदा सहस्रम्' '[21]पूर्णमासे प्रायच्छत्तावब्रूताम्' '[22]मातेव पुत्रं बिभृतामुपस्थे'। उपेति किम्? '[23]ये प्रतिष्ठे अभवतां वसूनाम्' '[24]नमस्ते अस्त्वा-युधायानातताय धृष्णवे, उभाभ्याम्' '[25]वृषणौ स्थ उर्वशी'। एषां '[26]द्यावापृथिवी आहुती कृतौ' इति प्राप्त्यन्तरप्रतिषेधार्थोऽयं नित्यशब्दः॥

## प्रग्रहेङ्ग्योपसर्गान्त इति स्यादप्यसांहिते ॥ ७८ ॥

प्रग्रहश्चेङ्ग्यश्चोपसर्गश्च प्रग्रहेङ्ग्योपसर्गाः। तेषामन्ते संहितासम्बन्धी सांहितः, न सांहितः असांहितः तस्मिन् पदक्रमाध्ययनसमये इति शब्दः प्रयुज्यते।

---

१. तै० स० ६. ६. ४. २. तै० सं० ४. ६. ६. ३. तै० सं० ७. ४. १.
४. तै० सं० ३. २. ९. ५. अवेपदसाहचर्यादिति पाठः।
६. समानपदमिति किम्? एव ते उभाभ्यामिति पाठः।
७. तै० सं० १. २. १३. ८. तै० सं० ५. ६. २१. ९. तै० सं० ५. ५. १५.
१०. तै० सं० २. ६. २ ११. तै० सं० १. ४. १८. १२. तै. सं. २. ३. ३.
१३. तै. सं. ५. ५. ११. १४. तै० सं० ५. ६. २१. १५. तै० सं० २. ६. ७.
१६. तै० सं० २. ३. २. १७. तै० सं० ६. ५. ८. १८. तै० सं० ७. ४. ११.
१९. तै० सं० ६. ४. १. २०. तै० सं० २. १. ५. २१. तै० सं० २. ५. २.
२२. तै० सं० ४. ६. ६. २३. तैं सं० ४. ७. १५. २४. तै० सं० ४. ५. १.
२५. तै० सं० १. ३. ७. २६. सू० ५२.

यथा—'[1]द्वे इति वाव'। '[2]प्रजा-इति-प्र-जाः' '[3]प्रेति-सः-अग्ने'॥

**पुनस्त्विङ्ग्यं क्रमे चादिर्विरामस्थं द्विधैक्यतः॥ ७९॥**

इङ्ग्यं पदं पुनरुक्तं स्यात् पदक्रमयोः। आदिरिति प्रग्रह इत्यर्थः। अधस्तात्प्रग्रहेङ्ग्येति सहोच्चरितत्वात् क्रमकाले प्रग्रहसंज्ञश्शब्दः पुनरुक्तस्स्यात्। यथा—'[4]ते एनम्-ते इति ते'। विरामस्थमिति। विरामस्थमवसानस्थं पदं क्रमे द्विधा स्यात् क्रमकालेऽर्धानुवाकयोरन्तं पदं क्रमादितिशब्दसहितम् अथ पुनरुक्तञ्च भवेदित्यर्थः। यथा—'[5]सविता धियः-धिय इति धियः'। '[6]पशून्पाहि-पाहीति पाहि'। क्रम इति किम्? '[7]पतयः-रयीणाम्'। ऐक्यतः प्रग्रहादीनामुक्तविशेषाभ्याम् एकपदवदुच्चारणं स्यात्। उक्तान्येवोदाहरणानि। पुनस्त्विङ्ग्यमित्यत्र तुशब्दप्रयोगेनेङ्ग्यस्य द्वितीयोच्चारणेऽवग्रहान्ते विरामं कृत्वा तदिङ्ग्यान्तमुच्यते, अन्यथा अवग्रहाभावात्। यथा—'[8]ज्येष्ठराजमिति ज्येष्ठ॰राजम्'। '[9]सु प्रजा इति सु॰प्रजाः'। '[10]सूद्गातेति सु॰उद्गाता'। अत्र किम्? '[11]हरी इति हरी' '[12]न इति नः'॥

**[13]नोपसर्गोऽवसानस्थो निहतश्च द्वयोरधः॥ ८०॥**

**अवानस्त्रिपु मध्यस्थोऽवग्रहो[14] न क्रमे तु च॥ ८१॥**

अत्रोपसर्ग इति परो न स्यात् पदकालेऽपि। अवसानस्थो यथा—'[15]मर्त्येषु-आ-त्वम्'। सर्वानुदात्तो यथा—'[16]अव-दिवः-वृष्टिम्'। द्वयोरधो यथा—'[17]आ-प्रेति यच्छ' '[18]अव-नः-देव्या'। अत्र संहितादीर्घ इत्येतावतैवालम्। कण्ठोक्त्या किम? '[19]श्रुत्या अपा वृधि' '[20]मोपूणः' इत्यादौ नैष निषेधः स्यादिति। त्रिषु

---

१. तै० सं० ७.४.५.  २. तै० सं० १.७.५.  ३. तै० सं० ३.२.११.
४. तै० सं० २.५.६.  ५. तै० सं० ४.१.१.  ६. तै० सं० १.१.१.
७. तै० सं० १.८.१४.  ८. तै० सं० २.३.१४.  ९. तै० सं० ६.४.१०.
१०. तै० सं० ७.१.८.  ११. तै० सं० १.४.३७.  १२. तै० सं० २.६.१२.
१३. नोपसर्गे विरामस्त इति पाठः।
१४. अवग्रहोऽत्र क्रमे तु च इति पाठः।
१५. तै० सं० १.१.१४.  १६. तै० सं० ४.३.४.  १७. तै० सं० १.२.१३.
१८. तै० सं० ४.१.४.  १९. तै० सं० २.२.१२.  २०. तै० सं० १.८.३.

मध्यस्थो यथा—'[1]अन्विति-सं-प्रेति-यात'। अवग्रहो यथा—'[2]आकूत्या इत्या ❀ कूत्यै' क्रमकाले तु सर्वेऽप्युपसर्गा इतिशब्दपरा न भवेयुः। यथा—'[3]सन्ते-ते वायुः' '[4]आमे-मे ग्रहाः'। अन्ये त्वन्यथा मन्यन्ते—अवसानस्थादीनामुपसर्गसंज्ञैव नास्तीति। तथा सति '[5]आक्खिदते च प्रक्खिदते च' इत्यादौ पूर्वागमो न स्यात्, अवग्रहत्वात्प्रतिषिद्धायामुपसर्गसंज्ञायाम्। तच्चानिष्टम्। तस्मादस्मदुक्त एव युक्तो नञर्थः॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
प्रग्रहप्रकरणम्॥ २॥

❀

१. तै० सं० ४.७.१३. २. तै० सं० १.२.२. ३. तै० सं० ४.१.४.
४. तै० सं० ७.३.१३. ५. तै० सं० ४.५.९.

## अथ परिभाषाप्रकरणम् ।। ३ ।।

### अथेयात्संहितायां यत्कार्यञ्चेत्सनिमित्तकम् ।। ८२ ।।

अथेत्ययमधिकारः। पदसंहितालक्षणं कथ्यत इत्येतदधिकृतं वेदितव्यम् इत उत्तरं यद्वक्ष्यामः। अयमधिकारो ह्रस्तस्वरविन्यासलक्षणपर्यन्तो विज्ञेयः। अस्यां संहितायां यत्कार्यभाक्पदम्, निमित्तेन सह वर्तत इति सनिमित्तकम् उक्तकार्यं प्राप्नुयात्। यथा—'[1]समस्कुर्वताग्निम्' '[2]इन्द्र एणं प्रथमः' '[3]अति दिवस्पाहि' इत्यादिसर्वसंहितास्वेवमेवेति ज्ञातव्यम् ।।

### विकृतश्च पदेऽदाद्यनाद्यनुस्वारयुक्पदम् ।। ८३ ।।

पदग्रहणस्थलं चकारस्सूचयति। पदे-पदग्रहणस्थले पदमेवावगन्तव्यम्, न तु पदैकदेशः। [4]यथा—पदग्रहणवचने *'त्वे इत्यनिङ्गयगम्' इत्युक्ते 'त्वे क्रतुम्' इत्यत्र प्रग्रहस्स्यात्। 'क्रत्वे दक्षाय' इत्यत्र तु पदैकदेशत्वान्न प्रग्रहः। पदग्रहणस्थले पदं विकृतमपि कार्यं करोतीत्युक्तम्। यथा—'[5]स्य उच्चोऽथैष चेद्धलि' इति [6]विसर्गस्य लोपग्रहणं पठिष्यते। तत्र '[7]एष स्य वाजी' इतिवत् '[8]अयमु ष्य प्रदेवयुः' इत्यत्र सकारे षत्वमापन्नेऽपि विसर्गलोपो भवत्येव। तथा '[9]पर्याणीय, '[10]छन्दा ँ स्युपोपच्छन्दा ँ सि छन्दा ँ स्युप' इत्यादौ पदग्रहणस्थलत्वादेतत्कार्यं स्यादेव। ननु सर्वस्यापि पदस्य विकृतत्वाभावादत्र कार्यं कथं भविष्यति? उच्यते—सर्वत्र वर्णमात्रस्यैव विकारलोपदर्शनात् 'वर्णस्य विकारलोपौ' (१.१.५६)

---

१. तै० सं० ६. २. ३.    २. तै० सं० ४. ६. ७.    ३. तै० सं० १. ८. १४.

४. यथा—'न स्वधा मा प्रपास्यूर्ध्व' इति पदग्रहणवचने सू० २४५.मा इत्युक्ते प्रमा असीत्यत्र पदैकदेशत्वान्नायं निषेध इति क्वचित्पाठः।    * सू० ६१.

५. सू० १५०

६. विसर्गलोपार्थं पठिष्यत इति क्वचित्पाठः।

७. तै० सं० १. ७. ८.    ८. तै० सं० ३. ५. ११.    ९. तै० सं० ७. १. ६.

१०. तै० सं० ५. २. ८.

इति प्रातिशाख्ये उक्तत्वाच्चेति[१] ब्रूमः। तर्हि वर्णविकृतमिति किं न स्यात्? '[२]अहर्देवानाम्' '[३]अभ्यस्थात्' इत्यादौ पूर्वरूपकार्यन्न [४]भवतीति। अत्र गृहीतं पदम् अदादि-अत् अकारः आदिर्यस्य तदपि कार्यं करोति। '[५]धामाननूपसर्गाश्च' इति पूर्वागमः। यथा—'[६]या च विच्छन्दाः'। एवमकाराद्यपि—'[७]अविच्छेदा-यैन्द्राः'। अनादि-अन् इति आदिर्यस्य तत्। अन्काराद्यपि पदं कार्यं करोति। यथा—'[८]न पवमानेभ्योऽवच्छिद्यते श्येनोऽसि'। एवं अन् काराद्यपि '[९]अन-वच्छित्यै यावद्भिः'। पदग्रहणस्थले गृहीतं पदं नित्यानुस्वारसहितमपि कार्यं करोति। विधायकपदमध्ये [१०]वर्णमध्ये वा अनुस्वारे स्थितेऽपि कार्यं स्यादित्यर्थः। '[११]अनिङ्ग्यान्तास्सुवश्चाहास्त्वहः' इत्यनेन अꣳहश्शब्दे विसर्गस्य प्राप्तो रेफस्तु शब्देन निषिध्यते। किञ्च निमित्तिनिमित्तयोर्वर्णयोर्मध्यस्थस्सन्—'[१२]हुवामहेऽꣳहोमुचम्' इत्यत्र '[१३]यवनहेषु' इति कार्यं न निषेधति। अन्यत्रानुस्वारो[१४] विरोधीति केचिदाहुः। प्रातिशाख्यमतानुसारेण तद्वचनमभाणि॥

## ह्रस्वस्यानित्यदीर्घं स्यात्तद्ध्रस्वाप्युपलक्षणम्॥ ८४॥

ह्रस्वस्य ग्रहणस्यानित्यदीर्घमक्षरमुपलक्षणं ग्राहकं स्यात्। यथा—'[१५]षुम्रा-मोरु' इत्युक्ते 'ऊषुण' इत्यत्र णत्वम्, अस्य दीर्घञ्च—'[१६]मोषूणः'। अस्यानित्य-दीर्घस्य ह्रस्वमप्युपलक्षणं स्यात्। यथा—'[१७]उदथा पर' इत्युक्ते '[१८]विद्वानथा भव' इत्यत्र यत्वनिषेधस्स्यात्। अस्य ह्रस्वञ्च—विद्वानथ। अनित्यमिति किम्? '[१९]ईयुरायुः' इति '[२०]ईयुष्टे ये' '[२१]आयुष्टे' इत्यत्र षत्वम्। '[२२]उपेयुस्तद्यजमाना' इत्यत्र न षत्वम्॥

---

१. उक्तत्वाच्चेति। अत्र वर्णेन कार्यं स्यादिति ब्रूम इति, उक्तत्वाच्चेति ब्रूमः, अन्यथा अस्य वैयर्थ्यादिति च पाठः।

२. तै० सं० १. ५. ९. ३. तै० सं० ४. २. ८. ४. स्यादेवेति पाठः।

५. सू० ३४५. ६. तै० सं० ७. २. ११. ७. तै० सं० ५. ५. १.

८. तै० सं० ३. २. १. ९. तै० सं० ६. २. १.

१०. एकपदमध्ये वर्णमध्ये वेति पाठः। ११. सू० २०३.

१२. तै० सं० २. १. ११. १३. सू० २७४. १४. विरोधिनिमित्तमिति पाठः।

१५. सू० १८६. १६. तै० सं० १. ८. ३. १७. सू० २२८.

१८. तै० सं० ३. २. ११. १९. सू० १७२. २०. तै० सं० १. ४. ३३.

२१. तै० सं० १. ३. १४. २२. तै० सं० ७. ५. ३.

## पूर्वं पूर्वन्तु तत्रैव कर्तव्यं प्रथमं यथा ॥ ८५ ॥

तत्र संहिताविधाने पूर्वं पूर्वं पदं वचनञ्च यथायोग्यं प्रथमं कर्तव्यम्। यथा—'[1]भक्ष-आ-इहि' इत्यत्र '[2]आद्यष्टसु सवर्णोर्ध्वे' इति सवर्णदीर्घे 'भक्षा-इहि' इति स्थिते '[3]एत्वञ्चेवर्ण उत्तर' इति एकारे कृते 'भक्षेहि' इति भवति। अन्यथा एहीति कृत्वा भक्षशब्देन सन्धीयमाने भक्षैहीति स्यात्, तच्चानिष्टम्। पूर्वपदकर्तव्यत्वे एतदुदाहरणम्। पूर्ववचनकर्तव्यत्वे तु वदामः—'[4]धिसुवस्त्रिट-पूर्वो निष्पूर्व' इति नकारस्य णत्वे कृते '[5]उत्तमं प्रथमोऽन्त्योर्ध्वः' इति टकारस्य च णत्वे कृते '[6]षण्णवत्यै' इति भवति। अन्यथा 'उत्तमं प्रथम' इति वचने प्रवृत्ते सति 'षण्नवत्यै' इति स्यात्, तच्चानिष्टम्। टकारग्रहणस्य च वैयर्थ्यं स्यात्। तथा '[7]इमं विष्यामि' इत्यत्र '[8]परिविप्रति' इति '[9]स्वरपूर्वमियाद्द्वित्वम्' इति च वचनद्वयं प्राप्तम्। तत्र द्वित्ववचनस्य प्राथम्ये 'इमं विष् स्यामि' इति स्यात्। तच्चानिष्टम्। तन्माभूदिति षत्वमेव प्रथमं कृतम्। 'पूर्वं पूर्वम्' इति वीप्सा सर्वत्रैवमेवेति समर्थयति ॥

## सामान्योक्तस्तु सर्वत्र विशेषो नैव दृश्यते ॥ ८६ ॥

सामान्योक्तविधिस्सर्वत्र प्राप्नोति विशेषदर्शनपर्यन्तम्। यथा-'[10]तच्छंयोः' इत्यत्र '[11]तवर्गश्च टवर्गाद्यौ' इति वैकृत छकारे परेऽपि तकारस्य चकारस्स्यात्। तत्कार्यस्य छकारस्य विशेषादर्शनात्[12] ॥

## तयोरेकत्र चाल्पस्थो विशेषो बलवान् स्मृतः ॥ ८७ ॥

एकस्थाने विधिद्वये प्रसक्ते तयोः अल्पस्थः अल्पप्रदेशस्थः सङ्कुचितोक्त-विधिर्विशेषसंज्ञस्स्यात्। एष एव बलवानिति बुधैः स्मृतः। यथा—'लुप्यते स

१. तै० सं० ३. २. ५. २. सू० २४१. ३. सू० २४२.
४. सू० १८६. ५. सू० १९५. ६. तै० सं० ७. २. १५.
७. तै० सं० १. १. १०. ८. सू० १७१. ९. सू० ३३७.
१०. तै० सं० २. ६. १०. ११. सू० १६२.
१२. एतदनन्तरं तथा—'[13]वाच्च्येव' '[14]अब्भ्येव' अत्र स्वरपूर्वम्' इत्यादिना वैकृते हलि परेऽपि द्वित्वागमौ स्यातामिति सर्व० ।
१३. तै० सं० ६. ४. ९. १४. तै० सं० ५. ४. ९.

त्वनिङ्ग्यस्थः[1]' इति स इत्यस्य विसर्गो लुप्यते–स वान्यमित्यादि। अत्र '[2]घोष-वदुत्तर' इति पूर्ववचनन्न प्रसरति। '[3]ह्रस्वाद् द्वित्वमनुस्वारः' इति '[4]सग्ँ श्रवाः' इत्यादौ द्वित्वम्, '[5]स ँ सम्' इत्यादौ न द्वित्वम्, सामान्यविधानात्। एवं सर्वत्र सामान्यविशेषरूपो विधिः निषेधः प्रतिप्रसव इत्येतत्संज्ञाभेदेन तत्तल्लक्षणपद्धतिर्विज्ञेया॥

पुनरुक्तं यतः पञ्चपदमित्युत्तरञ्च वा॥ ८८॥
पूर्ववद्भवति ज्ञेयं सर्वत्रापि विचक्षणैः॥ ८९॥

पञ्च पदानि यस्य तत्पञ्चपदं वाक्यं यत्कार्यभाक् पूर्वोक्तं पुनरुक्तमपि तत्कार्यभाग्भवति। यथा—'[6]त्वमग्ने रुद्र' इत्यत्र '[7]पृष्ठ्यो याज्योख्ययोरपि' इति यत्वकार्यम्, '[8]अश्मन्नूर्जम्' इत्यत्र, 'अग्ने देवा ँ इहावह' इत्यत्रापि प्रकृतिं बाधित्वा तथैव भवति। इतिशब्दपरं पञ्चपदानां न्यूनत्वेऽपि द्विपदादि-वाक्यं पूर्ववद्भवति। इदं ब्राह्मणवाक्यमित्युच्यते। '[9]युक्ष्वा हि देवहूतमा ँ अश्वान्' इति यत्वकार्यं '[10]यजुषा वा' इत्यत्रापि तथैव भवति। यथा—'युक्ष्वा हि देव हूतमा ँ इत्युखायां जुहोति'। स्थलान्तरमपि द्रष्टव्यम्। '[11]एदोत्पूर्वेऽप्यकारोर्द्ध्वं एकम्' इत्यनेन प्रथमकाण्डे पूर्वत्र स्थितं '[12]देवस्य त्वा सवितुः प्रसवेऽश्विनोः' इत्यत्राकारे पूर्ववर्णसम्मिश्रे वाजपेयसंज्ञानुवाकेऽनैक्यं बाधित्वा तथैव भवति, पञ्चपदत्वात्। '[13]वैश्वानरो नः' इत्यत्र '[14]दधिक्राव्णो अकारिषम्' इति वाक्यम्, '[15]अम्बे अम्बालिके' इत्यत्रापि तथैव। '[16]द्रापे अन्धसस्पते' इत्यत्र 'रक्षा च नो अधि च देव' इति वाक्यम्, '[17]ये ते पन्थानः' इत्यत्रापि तथैव। '[18]अश्मन्नूर्जं पर्वत' इत्यत्र 'पावको अस्मभ्यम्' इति वाक्यम्, '[19]अश्मन्नूर्जं परि' इत्यत्रापि तथैव। इतिशब्दपरत्वात् यथा—'पावको अस्मभ्यँ शिवो

१. सू० २१५. २. सू० २०६. ३. सू० ३४७.
४. तै० सं० १. ७. २. ५. तै० सं० २. ६. ११. ६. तै० सं० १. ३. १४.
७. सू० २१९. ८. तै० सं० ४. ६. १. ९. तै० सं० २. ६. ११.
१०. तै० सं० ५. ५. ३. ११. सू० २४८. १२. तै० सं० १. १. ३.
१३. तै० सं० १. ५. ११. १४. तै० सं० १. ५. ११. १५. तै० सं० ७. ४. १९.
१६. तै० सं० ४. ५. १०. १७. तै० सं० ७. ५. २४. १८. तै० सं० ४. ६. १.
१९. तै० सं० ५. ४. ४.

भवेत्याहान्नं वै'। वाक्यं पञ्चपदमिति किम्? 'ये अन्तरिक्षे ये दिवि' इत्युक्ते 'येऽन्तरिक्षे ये दिवि येषाम्' इति रुद्रान्त्यानुवाके तथा न भवति। एवं सर्वत्र कार्यं भवतीति लक्षणकुशलैर्ज्ञातव्यम्। विलोमकालेऽप्येवं पूर्ववाक्ययोः पूर्वेण एङा अकारस्य ऐक्यं भवति। तद्वाक्यमुत्तरत्रानैक्यस्थानेऽपि 'पुनरुक्तं यतः पञ्चपदम्' इत्यैक्यमेव भवति। तदुदाहरिष्यामः॥

**परि त्वा पुनरूर्जा यन्नोऽस्यारातीयतोऽपि च॥ ९० ॥**
**सप्त तेऽपो अनु त्वग्ने त्वङ्गेमांश्चाधि रोचने॥ ९१ ॥**
**चित्रं च भवतं द्रप्सस्सहस्व पुनरैक्यतः॥ ९२ ॥**

एषु पूर्ववाक्येषु यानि पदानि याज्यादिषु पुनरुक्तानि सन्ति तानि विलोमेऽपि तथैव। ऐक्यत उच्चारणीयानीत्यर्थः। यथा—'[1]सम्पश्यामि' इत्यनुवाके 'परि त्वाग्ने पुरं वयम्' इति वाक्ये-'त्वाग्नेऽग्ने त्वा त्वाग्ने' इत्येतत्पुनरुक्तं सत् '[2]इमामगृभ्णन्' इत्यनुवाकेऽपि तथैव। '[3]भूमिर्भूम्ना' इत्यत्र 'पुनरूर्जानि वर्तस्व पुनरग्ने' इति वाक्ये-'पुनरग्नेऽग्ने पुनःपुनरग्ने' इत्येतत् '[4]विष्णोः क्रमोऽसि' इति प्रश्नेऽपि तथैव। '[5]त्वꣳसोम' इत्यनुवाके 'अयन्नो अग्निर्वरिवः' इत्यत्र 'अग्निर्वरिवोऽग्निरग्निर्वरिवः' इत्येतत् '[6]यस्त्वा हृदा' इत्यात्रापि तथैव। '[7]आप्यायताम्' इत्यत्र 'विष्णोः क्रमोऽस्यरातीयतो हन्त' इति वाक्ये-'अस्यरातीयतोऽरातीयतोऽस्यस्यरातीयतः' इत्येतत् 'विष्णोः क्रमोऽसि' इत्यत्रापि तथैव। '[8]परा वा' इत्यत्र, 'सप्त ते अग्ने' इति वाक्ये-'ते अग्नेऽग्ने ते ते अग्ने' इत्येतत् '[9]प्राचीमनु' इत्यत्रापि तथैव। '[10]उरुꣳहि राजा' इत्यनुवाके 'अपो अन्वचारिषम्' इत्यत्र-'अपो अन्वन्वपोऽपो अनु' इत्येतत् 'यस्त्वा हृदा' इत्यत्रापि तथैव। 'सम्पश्यामि' इत्यनुवाके 'अग्ने त्वन्नो अन्तम' इत्यत्र-'नो अन्तमोऽन्तमो नो नो अन्तमः' इत्येतत् '[11]अग्निमूर्धा दिवः' इत्यत्रापि तथैव। '[12]अगन्म सुवस्सुवरगन्म' इत्यनुवाके 'गोमाꣳअग्ने' इत्यत्र-'गोमाꣳअग्नेऽग्ने गोमान् गोमाꣳअग्ने' इत्येतत् '[13]अग्निना रयिम्'

---

१. तै० सं० १. ५. ६.  २. तै० सं० ४. १. २.  ३. तै० सं० १. ५. ३.
४. तै० सं० ४. २. १.  ५. तै० सं० १. ३. ४.  ६. तै० सं० १. ४. ४६.
७. तै० सं० १. ६. ५.  ८. तै० सं० १. ५. २.  ९. तै० सं० ४. ६. ५.
१०. तै० सं० १. ४. ४५.  ११. तै० सं० ४. ४. ४.  १२. तै० सं० १. ६. ६.
१३. तै० सं० ३. १. ११.

इत्यत्रापि तथैव । '[१]ये देवा यज्ञहनः' इत्यनुवाके 'नाकं गृह्णानास्सुकृतस्य' इत्यत्र 'अधिरोचने रोचनेऽध्यधि रोचने' इत्येतत् '[२]अग्निं युनज्मि' इत्यत्रापि तथैव । '[३]उदुत्यञ्जातवेदसम्' इत्यनुवाके 'चित्रं देवानाम्' इत्यत्र'अन्तरिक्ष ँ सूर्य-स्सूर्योऽन्तरिक्षमन्तरिक्ष ँ सूर्यः' इत्येतत् '[४]नवो नवो भवति' इत्यत्रापि तथैव । '[५]इषे त्वोपवीः' इत्यनुवाके 'भवतन्नस्समनसौ' इत्यत्र 'अद्य नो नोऽद्याद्य नः' इत्येतत् 'समिति ँ सङ्कल्पेथाम्' इत्यत्रापि तथैव । '[६]निग्राभ्यास्थ' इत्यनुवाके 'द्रप्सश्च स्कन्द' इत्यत्र-'अनु यो योऽन्वनु यः' इत्येतत् '[७]अभ्यस्थाद्विश्वा' इत्यत्रापि तथैव । '[८]सन्त्वा सिञ्चामि' इत्यनुवाके 'सहस्वारातीयतः' इत्यत्र-'सहस्वारातीयतोऽरातीयतस्सहस्व सहस्वारातीयतः' इत्येतत् '[९]ध्रुवासि धरुणास्तृत' इत्यत्रापि तथैव । 'त्रिपदं पुनरुक्तञ्चेद्वाक्यं पूर्ववदुच्यते' इत्यनेन '[१०]सं वपामि सम्' इत्यत्र 'वर्षिष्ठे अधिनाक' इत्यस्य '[११]उपप्रयन्त' इत्यत्रापि तथैव जटा भवतीति केचित् ॥

इतः परमनैक्यमुच्यते—

**आयुर्यज्ञेन वाजश्च प्राणम्म आयुरेव च ॥ ९३ ॥**
**पवस्व व्रतपास्सूर्ये परोऽग्न आदयः पुनः ॥ ९४ ॥**
**येनाग्नेऽस्मिन् सधस्थे च वाज्यध्वनस्त्वनैक्यतः ॥ ९५ ॥**

यज्ञ्यादिस्थितवाक्यानामेतेषामन्यत्र पुनरुक्तानामप्यकारस्य लोपो न स्यात् । '[१२]क्षत्रस्योल्वमसि' इत्यनुवाके 'आयुर्यज्ञेन कल्पताम्' इत्यत्र-'कल्पतामपानो अपानः कल्पतां कल्पतामपानः' 'वाजश्च प्रसवश्चापिजश्च' इत्यत्रापि-'चापिजो अपिजश्च चापिज' इति वाक्यद्वयं चमकेऽपि तथैव । '[१३]ध्रुवक्षितिः' इत्यनुवाके 'प्राणम्मे पाह्यपानम्मे पाहि' इत्यत्र-'अपानम्मे मे अपानमपानम्मे' इत्येतत् '[१४]इन्द्राग्नी अव्यथमानां', '[१५]भूयस्कृदसि' इत्यनुवाकद्वयेऽपि तथैव । '[१६]त्वमग्ने रुद्र' इत्यनुवाके 'आयुर्दा' इत्यत्र-आयुर्दा अग्ने अग्न आयुर्दा आयुर्दा अग्ने' इत्येतत्

१. तै० सं० ३. ५. ४.　२. तै० सं० ४. ७. १३.　३. तै० सं० १. ४. ४३.
४. तै० सं० २. ४. १४.　५. तै० सं० १. ३. ७.　६. तै० सं० ३. १. ८.
७. तै० सं० ४. २. ८.　८. तै० सं० १. ६. १.　९. तै० सं० ४. २. ९.
१०. तै० सं० १. १. ८.　११. तै० सं० १. ५. ५.　१२. तै० सं० १. ७. ९.
१३. तै० सं० ४. ३. ७.　१४. तै० सं० ४. ३. ६.　१५. तै० सं० ४. ४. ७.
१६. तै० सं० १. ३. १४.

तृतीयकाण्डेऽपि तथैव । '[1]उपप्रयन्त' इत्यनुवाके 'अग्ने पवस्व स्वपा अस्मे वर्चः' इत्यत्र-'अस्मे वर्चो वर्चो अस्मे अस्मे वर्चः' इत्येतत् '[2]अगन्म सुवस्सुवः' इत्यत्रापि तथैव । '[3]उभावामिन्द्राग्नी' इत्यनुवाके 'त्वमग्ने व्रतपा' इत्यत्र 'त्वमग्ने अग्ने त्वं त्वमग्ने' इत्येतत् '[4]दैवीं धियम्' इत्यत्रापि तथैव । '[5]ध्रुवासि धरुण' इत्यनुवाके 'यास्ते अग्ने सूर्ये रुचः' इत्यत्र 'ते अग्ने अग्ने ते ते अग्ने' इत्येतत् '[6]वायो वा अग्निः' इत्यत्रापि तथैव । '[7]अग्निं युनज्मि' इत्यनुवाके 'येना सहस्रं वहसि' इत्यत्र 'येनाग्ने अग्ने येन येनाग्ने' 'अस्मिन्त्सधस्थे' इत्यत्रापि-अस्मिन्त्सधस्थे सधस्थे अस्मिन्न-स्मिनत्सधस्थे' इति वाक्यद्वयञ्च '[8]यदाकूतात्समसुस्रोत्' इत्यात्रापि तथैव । '[9]इमामगृभ्णन्' इत्यनुवाके 'आगत्य वाज्यध्वनः' इत्यत्र 'वाज्यध्वनो अध्वनो वाजी वाज्यध्वन्' इत्येतत् '[10]व्यृद्धं वा' इत्यत्रापि तथैव, ब्राह्मणवाक्यत्वात् । ननु अध्वन इत्यस्य इतिपरत्वाभावाद् ब्राह्मणवाक्यमिति कथं प्रतीयते ? परमन्त्रस्य इतिपरत्वे पूर्वमन्त्रस्यापि सम्भवति । कुतः ? अनयोरेकप्रयोगत्वादिति [11]ब्रूमः । एवं '[12]यदग्ने यानि' इत्यत्रालोपविधिः '[13]न ह स्म वा' इत्यत्रापि तथैव । 'ता अस्य सूददोहसः' इत्यादि सर्वेष्वपि मन्त्रब्राह्मणवाक्येष्येवमेवानैक्यं स्यादिति विज्ञेयम् ॥

एदोद्भ्यां वक्ष्यतेऽतश्च यदनेकपदे पुनः ॥ ९६ ॥
जटोच्यतेऽन्यशब्देन तत्रानैक्यं न विद्यते ॥ ९७ ॥

एच्च ओच्च एदोतौ । ताभ्यां सह अतः-अकारस्य यत्कार्यं वक्ष्यते ऐक्य-मनैक्यं वा तद्वाक्येऽनेकपदे-बहुपदे पुनरुक्तेऽकारवतः आद्यस्यान्त्यस्य वा पदस्य पूर्वोक्तादन्यपदेन यत्र जटा कथ्यते तत्राकारस्य एकारेण ओकारेण वानैक्यं कार्यं न भवति, किन्तु तयोरेकारौकारयोरैक्यं भवतीत्यर्थः । यथा—'[14]भवत्यग्रे बृहन्'

---

१. तै० सं० १. ५. ५.        २. तै० सं० १. ६. ६.        ३. तै० सं० १. १. १४.
४. तै० सं० १. २. ३.        ५. तै० सं० ४. २. ९.        ६. तै० सं० ५. ७. ६.
७. तै० सं० ४. ७. १३.        ८. तै० सं० ५. ७. ७.        ९. तै० सं० ४. १. २.
१०. तै० सं० ५. १. २.
११. 'आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमित्याह' इत्यत्रेतिपरत्वं पूर्वमन्त्रस्यापि ब्राह्मणवाक्यतागमकमिति यावत् ।
१२. तै० सं० ४. १. १०.        १३. तै० सं० ५. १. १०.        १४. तै० सं० ५. २. १.

'भवत्यग्रेऽग्रे भवति भवत्यग्रे' '[१]जन्मन्नग्न इति वैकङ्कतीम्' 'अग्न इतीत्यग्नेऽग्न इति' '[२]अध्वन आक्रम्याक्रम्याध्वनोऽध्वन आक्रम्य'। अनैक्यस्थानपदत्वादनयोरनैक्यमिति केचित्। तदसाधु; अन्यशब्देन किम्? 'अग्रे बृहन्बृहन्नग्रे अग्रे बृहन्' 'जन्मन्नग्ने अग्ने जन्मञ्जन्मन्नग्ने' अत्राकारस्यानैक्यं भवति, पूर्वोक्तस्य सर्वस्यापि पुनरुक्तत्वात्॥

ग्रहणन्त्वेकमुद्दिश्य पदं वै क्रियते यतः॥ ९८॥
तदन्यत्र तु न ग्राह्यं यज्जटाभिमतैरिति॥ ९९॥

[३]यत्र निमित्तं वा कार्यभाक्पदं वैकं प्रयोजनमुद्दिश्य गृह्यते; यथा—'मन्य

१. तै० सं० ५. ४. ७. २. तै० सं० ५. १. २.

३. यत्र यत्पदं निमित्तं कार्यभाग्वा एकं प्रयोजनमुद्दिश्य क्रियते निर्दिश्यते तदेव पदमन्यत्र प्रदेशान्तरे निमित्तत्वेन वा कार्यभाक्त्वेन वा न ग्राह्यमिति जटाविचक्षणैरुक्तम्। यथा—'मन्यमानस्त्रिधोऽग्नयः' इत्यत्राग्नय इति निमित्तरूपग्रहणम्-'यानग्नयोऽन्वतप्यन्त' इत्यत्र अग्नयः-अनु-अतप्यन्त इति स्थिते अवग्रहसंहितायाः प्राथम्येन प्रवृत्तत्वाद् अन्वतप्यन्तेति 'पूर्वं पूर्वम्' इति संहितायां कृतायां 'यवनहेष्वजूष्वेषु' इति लोपासम्भवात्तदर्थमग्नय इति गृहीतं निमित्तं '[४]पुरीष्यासो अग्नयः' '[५]ते नोऽग्नयः पप्रयः' इत्यन्यत्र जटायां निमित्तत्वेन न भवति। एवं 'कखपेषं तथा वर्णपूर्वस्संयात्यवग्रहः' इत्यनेन प्राप्तस्यावग्रहस्थसत्वस्य प्रतिषेधार्थतया 'नाध्वरं विस्वतोऽन्तश्च पुनस्तु विविशुः परः' इत्यत्र गृह्यमाणं पुनरिति पदम् अवग्रहादन्यत्र-'*पुनर्नो नष्टमा कृधि पुनः' इत्यत्र जटायां कार्यभाक्त्वेन न ग्राह्यम्। नन्वेवमपि 'अम्वाल्यस्त्वङ्गिरोऽङ्गे च अस्कभायत्तथा कृणोत्' इत्यत्र गृहीतम् अङ्गिर इति कार्यभाक्पदम्, '[६]मानुषीभ्यस्त्वमङ्गिर इत्याह' इत्यत्र कार्यभाक्त्वेन कथन्न स्यात्? उच्यते—'[७]अग्ने अङ्गिर इति त्रिर्हरति,' '[८]अङ्गिरोभ्यः स्वाहा' इत्यादौ अङ्गिरोग्रहणस्य चारितार्थ्यं स्यात्। '[९]एदोद्भ्यां वक्ष्यतेऽतश्च यदनेकपदे पुनः। जटोच्यतेऽन्यशब्देन तत्रानैक्यं न विद्यते'॥ इत्यस्य च, 'भवत्यग्रे बृहन्,' 'जन्मन्नग्न इति वैकङ्कतीम्' इत्यादिषु चारितार्थ्याच्च। 'मानुषीभ्यस्त्वमङ्गिर इत्याह' इत्यत्र तुल्यबलविरोधे '[१०]पूर्वं पूर्वन्तु तत्रैव' इति न्यायात् लोप एव भवति। एवञ्च सति 'यानग्नयोऽन्वतप्यन्त'

४. तै० सं० ४. २. ४. ५. तै० सं० १. ७. ७. * तै० सं० ३. ३. ८.
६. तै० सं० ५. १. ५. ७. तै० सं० ६. २. ७. ८. तै० सं० ७. ५. ११.
९. सू० ६६, ६७. १०. सू० ८५.

मानस्त्रियोऽग्नयः' अत्र अग्नय इति ग्रहणमन्वतप्यन्तशब्दार्थमिति व्याख्यायते वाररुचादिभाष्येषु, '[1]यानग्नयोऽन्वतप्यन्त' इति। तस्मात्कारणात्तत्पदमन्यत्र निमित्तरूपस्य न मुख्यमिति जटाविचक्षणैरुक्तम्। 'तेन [2]नोऽग्नयः पप्रयः' अत्रानार्षे- 'नोऽग्नयो अग्नय नो नो ऽग्नयः' इत्यनैक्यं स्यादिति। किञ्च '[3]नाध्वरं विश्वतो- ऽन्तश्च पुनस्तु विविशुः परुः' इति प्रतिषिद्धग्रहणे 'पुनः पुनः' इत्यत्र सत्वं न स्यात्। '[4]कखपेषन्तथा वर्णपूर्वस्संयात्यवग्रहः' इति प्राप्तिरिति तत्रैवोक्तत्वाद् इतरत्र संहितायां पुनः पुनरित्येतद्विषयावग्रहाभावात्, 'कृधि पुनः पुनस्कृधि' इत्यत्र सत्वस्य निषेधो न स्यादिति ॥

## संहितावत्क्रमो ज्ञेयो जटा च विकृतादिषु ॥ १०० ॥

[5]विकृतादिषु-विकारागमलोपेषु संहिता यत्कार्यभाक्स्यात्, यथा—

---

इत्यत्र पूर्वं कृते यणि। लोपाभावेऽग्नय इति निमित्तग्रहणं कृतम्' ॥ 'कृद्ध्युत्तरे पुनश्शब्दाद्विलोमे सत्वमिष्यते। विषयेऽङ्गिर इत्यत्र क्रम्यादिरिव लुप्यते' ॥ इति जटामणिवचनमूलकमेतद्व्याख्यानमित्यनुसन्धेयम्' इति सर्वं०

१. तै० सं० ३. २. ८.  २. तै० सं० १. ७. ७.  ३. सू० २१३.  ४. सू० २०७.

५. 'विकृतादिषु-लोपालोपषत्वणत्वयत्त्वादेशागमादिषु कार्येषु तत्सम्बन्धितया संहिताया- मित्यधिकृत्य निमित्तं नानाप्रकारतया गृह्यते। तत्र पदद्वयमपि क्वचिन्निमित्ततयोच्यते। तृतीयं कार्यभाक्पदन्तु सिद्धमेव। तत्र स्थले क्रमे पदद्वयस्यैव संहितात्वात् निमित्तभूतयोः पदयोः क्रममुक्त्वा निमित्तैकदेशभूतस्य पदस्य कार्यभाक्पदस्य च क्रमोच्चारणे निमित्तैक- देशाभावे क्वचित्कार्यसम्बन्धितया गृहीतस्य निमित्तास्य जटायां सन्धिवशादन्यथात्वे च कार्यप्राप्त्यर्थं क्वचित्संहितायां निमित्ताभावे जटायां सत्यपि निमित्ते तत्र कार्यनिवृत्त्यर्थ- ञ्चेदं वचनमारभ्यते—संहितायामिव क्रमश्च जटा च लोपादिकार्यभाक्स्यादिति। ननु तत्र शास्त्रविरोधात् कार्यहानिः। कुतः? पदसंहितानुपूर्व्या अन्यथात्वासम्भवात्। अन्यत्र त्वेवं न स्यात्। यथा—'स्वानासो दिवि दिवि स्वानासः स्वानासो दिवि, दिवि- षन्तु सन्तु दिवि दिविषन्तु' अत्र स्वानास इत्यभावेऽपि संहितायामिव षत्वं भवत्येव 'सो दिव्ययम्' इति। गावोऽन्वनु गावो गावोऽनु, अत्र स्वरपरत्वाभावेऽपि 'यवनहेष्व जूर्ध्वेषु' इति लोपो भवत्येव। 'सोऽस्मानस्मान्त्स सोऽस्मान्' अत्र जटायां अलोपनिमित्ते सत्यपि 'अदूर्ध्वेऽस्मान्त्स इन्द्रोध' इत्यलोपो न भवत्येव। एवम् '[6]अथा सपत्ना ँ॒ इन्द्रो मे, अकुर्वत वरुणप्रधासान्' इत्याद्यूहनीयम्। एवञ्च

> पदद्वयनिमित्तं यद्विनाप्येकेन तत्र तु।
> संहितावत्क्रमो ज्ञेयस्तद्वत् ज्ञेया जटा बुधैः ॥
> अन्वित्यत्र ह्युकारस्य वकारे वैकृते स्थिते।
> जटायां लोप एव स्याद्यथा सांहितमेव च ॥'

इत्यादिवचनानामविरोधश्चेति सर्वं०

६. तै० सं० १. १. १३.

'[१]उत स्वानासो दिविषन्त्वग्नेः' इत्यत्र '[२]सो दिव्ययम्' इति पदद्वयनिमित्तं वक्ष्यते। तत्र स्वानास इत्येकपदेन विनापि षत्वकार्यं भवति। कुतः? मुख्यनिमित्त-सम्भवात्। एवं क्रमश्च तत्कार्यभाक्स्यात्। यथा—'स्वानासो दिवि दिविषन्तु सन्त्वग्नेः'। एवं जटापि तत्कार्यभागिति विज्ञेया। यथा—'स्वानासो दिवि दिवि स्वानासस्स्वानासो दिवि दिविषन्तु सन्तु दिवि दिवि षन्तु, [३]सोऽस्मान् पातु सोऽस्मानस्मान्त्स सोऽस्मान्'। अत्र '[४]अदूर्ध्वोऽस्मान्त्स इन्द्रोध' इति न प्रसरति। '[५]गावोऽन्वतु गावो गावोऽनु'। अत्र '[६]यवनहेषु' इति न प्रसरति। अत्र त्विति किम्? '[७]मयि गृह्णामि-अग्रे अग्निमग्निमग्रेऽग्रे अग्निम्' '[८]अप्सु य ओषधीषु-अप्सु यो यो ऽ(३)प्स्वप्सु यः' इत्यादौ [९]विकारलोपनिमित्तैकदेशाभावे दुर्बलत्वात् तत्कार्यं न स्यादिति॥

आर्षे तूक्तं मुखेऽन्ते चान्यत्स्यादुभयत्र हि॥ २०१॥

आर्षे इति यत्र यत्कार्यमुक्तं तत्रैव जटायां मुखे-आदौ अन्ते च तत्कार्यं भवति। उभयत्राप्यनुलोमत्वात् तदनुलोमद्वयस्याप्यार्षत्वात् यथासंहितास्थानत्वात् तत्कार्यं भवतीति तुशब्दो द्रढयति। यथा—'[१०]बोधा स स बोध बोधा सः' '[११]उन्मा अस्यस्युन्मोन्मा असि'। ननु 'जटादौ तद्भवेत्सैव सकृदुच्चरिता बुधैः' इति वचने सति [१२]जटान्तेऽपूर्वकार्यं कथं क्रियते [१३]प्रातिशाख्यविरोधादध्ययन-

---

१. तै० सं० १. २. १४. २. षत्वप्रकरणे १६९ सूत्रे विषयोऽयं द्रष्टव्यः।

३. तै० सं० ५. ५. ५.

४. सू० २५६. एतत्सूत्रविहितमनैक्यं न प्रसरतीत्यर्थः।

५. तै० सं० ४. ६. ७. ६. सू० २७४. ७. तै० सं० ५. ७. ९.

८. तै० सं० ५. ५. ९.

९. विकारलोपेत्येतदर्थम्, विलोमे इति क्वचित्पुस्तके दृश्यते।

१०. तै० सं० ५. २. २. ११. तै० सं० ४. ४ ११.

१२. आर्षप्रयुक्तकार्यमिति क्वचित्पाठः।

१३. तत्तु वचनं प्रातिशाख्यविरोधात्पाठविरोधान्निर्मूलकत्वाच्च चिन्त्यमिति सर्वलक्षणी।

विरोधाच्चेति ब्रूमः[1]। तदन्यत्-आर्षोक्तादन्यत्सामान्यं कार्यमुभयत्र-आर्षे अनार्षेऽपि स्यादिति ज्ञातव्यम्। षत्वणत्वादिषु यथा—निष्टपामि, त्रिर्निर्णिष्ट्रिस्त्रिर्निः, '[2]मह्यमग्नेऽथो सीद' '[3]अथो ये ये ऽथो अथो ये' इत्यादि ॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
परिभाषाप्रकरणम् ॥ ३ ॥



---

१. यद्यस्य वचनस्य प्रामाण्यं स्यात्तर्हि-'बोधा स स बोध बोध सः, उन्मा अस्यस्युन्मोन्मासि' इति चानिष्टरूपं स्यादिति तदाशयः।

२. तै० सं० ४. १. ९.          ३. तै० सं० ४. ५. १.

# अथ दीर्घप्रकरणम् ॥ ४ ॥

## अथादावन्त आर्षे तु ह्रस्वो दीर्घं भजेद्धलि ॥ १०२ ॥

अथेत्ययमधिकारः। पदादौ पदान्ते च वर्तमानो ह्रस्वः आर्षे यथापाठे हलि व्यञ्जने परे सति दीर्घमापद्यते। यथा—'[1]वर्धा नः'। आर्ष इति किम्? वर्धान इत्यत्र जटायां वर्धशब्दस्य द्वितीयोच्चारणेऽपि दीर्घः प्रसज्येत उत्तरपदेन संहितायां सत्याम्। तन्माभूदिति परिहारः। 'दुध्रगह्व कि१ंशिलवन्य' इत्यादावेतल्लक्षणसम्भवादतिव्याप्तिमुत्तरवचनैः परिहरति। नन्वादावागमलक्षणे वक्तव्ये पुरस्तादेतद्व्यञ्जनपरदीर्घविधिः कथं क्रियते? उच्यते—पदस्यापि[2] लक्षणत्वादेतद्विधानमादिकथनयोग्यमिति ब्रूमः॥

## सदेङ्ग्ये तु व्यानोदानशब्दयोस्तु सुबन्तयोः ॥ १०३ ॥

व्यानशब्दश्च उदानशब्दश्च व्यानोदानशब्दौ, तयोः व्यानोदानशब्दयोः सुबन्तयोर्वर्तमानः अनिति ह्रस्वस्वरः इङ्ग्यस्थः विपूर्व उत्पूर्वो वा हलि परे सति दीर्घमापद्यते, पदादौ वर्तमानत्वात् पूर्वपदेन संहितायां सत्याम्। यथा—'[3]व्यानायोदानाय प्रतिष्ठायै'। इङ्ग्यस्थ इति किम्? '[4]उदनन्ति'। सुबन्तान्यव्यानोदानशब्दौ सदेति पदकालेऽपि दीर्घावित्यर्थः। यथा—'[5]धारा व्यानशुः' '[6]व्यानट तमग्ने' '[7]वसतीवरीर्व्यानयति' '[8]पत्नीमुदानयेत्याह' '[9]उदानिषुः'॥

## लोक एवेष्ट चाऽव्याश्वात्तस्य देवा यते युवम् ॥ १०४ ॥

लोके, एव, एवम्पूर्वं इष्टेत्यस्मिन्नवग्रहे अन्त्यस्वरः हलि परे दीर्घमापद्यते पदान्ते वर्तमानत्वादुत्तरपदेन संहितायां सत्याम्। यथा—'[10]लोक इष्टापूर्तेन गच्छते' '[11]सत्वेवेष्टापूर्ती'। अन्यस्मिन्निष्टेत्यवग्रहे अन्त्यस्वरो नित्यदीर्घ इति

---

१. तै० सं० २. ६. ११.
२. पदसंहितालक्षणत्वादेतद्विधानमिति।
३. तै० सं० ४. २. ९.
४. तै० सं० ५. ७. ७.
५. तै० सं० ५. ७. ७.
६. तै० सं० ४. २. १०.
७. तै० सं० ६. ४. ३.
८. तै० सं० ६. ५. ८.
९. तै० सं० ५. ६. १.
१०. तै० सं० ३. ३. ८.
११. तै० सं० १. ७. ३.

चकारो बोधयति। यथा—'[1]एनमिष्टापूर्ते सꣳसृजेथाम्'। अद्याश्वादिति। श्वात्परे अद्येत्यस्मिन्नवग्रहेऽन्त्यस्वरो दीर्घं भजते। यथा—'[2]अद्याश्वादेवैनम्'। श्वात्पर इति किम्? '[3]अद्य वसु वसति' इति। तस्येति। तस्य पूर्वदेवेत्यस्मिन्नवग्रहेऽन्त्यस्वरः यते परो दीर्घं भजते। यथा—'[4]आहुतिं घृतस्य देवायते'। तस्येति किम्? '[5]देवान्देवयते यज'। युवमिति। तस्येति पूर्वनिमित्ताभावेऽपि देवेत्यस्मिन्नवग्रहे अन्त्यस्वरो युवंपरश्चेद्दीर्घं भजते। यथा—'[6]यज्ञं प्रसुव देवा युवम्'। अत्र किम्? '[7]देववीतमः'॥

वयुना हृदयाश्वा विद्वर्षाह्वामुत्तरस्तथा ॥ १०५ ॥

वयुन-हृदय-श्व एष्वन्त्यस्वरो वित्परो दीर्घं भजते। यथा—'[8]वयुना विदेक इत्' '[9]हृदया विधश्चित्' '[10]द्यावापृथिव्या श्वावित्'। वित्पर इति किम्? '[11]नमश्श्वभ्यः'। वर्षाह्वामिति। ह्वांपरो वर्षेत्यस्मिन्नवग्रहेऽन्त्यस्वरो दीर्घं भजते। यथा—'[12]वर्षाह्वाञ्जुहोति'। ह्वामुत्तर इति किम्? '[13]वर्षवृद्धमसि'॥

चित्रर्ता-वय-वात-त्व-द्रविण-प्रस्थ-भङ्गुर ॥ १०६ ॥
पुष्प-ष्णिय-र्णक-शक्ति-श्वदेव्य-विपु-चेन्द्रिय ॥ १०७ ॥
वीर्याश्व-वद्वन्वानूर्ध्वो वनान्योर्ध्वेषु चेन्द्र्चेत् ॥ १०८ ॥

चित्र-ऋत-एतौ वपरौ यपरौ वा दीर्घौ स्तः। यथा—'[14]चित्रावसो स्वस्ति' '[15]ऋतावरीरूर्मिणीः' '[16]स्थर्तावृधः' '[17]मधुवाता ऋतायते'। तत्पराविति किम्? '[18]ऋतधामासि'। '[19]चित्रापूर्णमासे' अत्र नित्यदीर्घः। वातेति। वात-त्व-द्रविण-प्रस्थ भङ्गुर-पुष्प-वृष्णिय-कर्णक-शक्ति-विश्वदेव्य-विपु-इन्द्रिय-वीर्य-अश्व एष्ववग्रहेष्वन्त्यस्वरः वत्-वन्-वान् एवं परो दीर्घस्स्यात्। यथा—'[20]वातावद्वर्षन्'

---

१. तै. सं. ४ ७. १३. २. तै. सं. ३. १. ७. ३. तै. सं. २. ५. ३.
४. तै० सं० ३. ५. ५. ५. तै० सं० २. ५. ९. ६. तै० सं० २. ५. ९.
७. तै० सं० ४. १. ३. ८. तै० सं० १. २. १३. ९. तै० सं० १. ४. ४५.
१०. तै. सं. ५. ५. २०. ११. तै. सं. ४. ५. ४. १२. तै. सं. १. ४. १०.
१३. तै० सं० १. १. २. १४. तै० सं० १. ५. ५. १५. तै० सं० १. १. ३.
१६. तै० सं० ४. ४. ११. १७. तै० सं० ४. २. ९. १८. तै० सं० १. ३. ३.
१९. तै० सं० ७. ४. ८. २०. तै० सं० २. ४. ७.

'[1]त्वावतो मघोनः' '[2]लोकान्द्रविणावतः कुरुते' '[3]प्रस्थावद्रथवाहनम्' '[4]भेत्तारं भङ्गुरावतः' '[5]पुष्पावतीः प्रसूवतीः' '[6]वृष्णियावतस्तवाग्ने' '[7]कर्णकावत्येतया ह स्म' '[8]शक्तीवन्तो गभीराः' '[9]विश्वदेव्यावते श्वात्राः' '[10]विषूवान् विषूवन्तः' '[11]इयमिन्द्रियावतीत्यब्रवीत्' '[12]इन्द्रायेन्द्रियावते' '[13]शस्त्रं गम्यादिन्द्रियावन्तो वनामहे' '[14]इन्द्रियावान्मदिन्तमः' '[15]तनुवो वीर्यावतीः' '[16]वीर्यावन्तो वीर्याद्धि' '[17]यज्ञो विशतु वीर्यावान्' '[18]अश्वावतीꣳसोमवतीम्' '[19]अश्वावन्तं सहस्रिणम्'। तत्परः किम्? '[20]इन्द्रियकामो वीर्यकामः' '[21]यो भक्षो अश्वसनिः' '[22]शक्तिभिर्देवीस्तस्मात्' '[23]विषुरूपे अहनी'। वनान्योद्धर्वेष्विति। इन्द्रेत्यस्मिन्नवग्रहे अन्त्यस्वरः पूर्वोक्तपरनिमित्तेषु वनान्यपरेषु दीर्घस्स्यात् यथा—'[24]इन्द्रावतीमपचितीम्' '[25]इन्द्रियावन्तो मरुतः' '[26]इन्द्रावान्थ्स्वाहा'। तत्परः किम्? '[27]स्वाहेन्द्र शत्रुः'। वनान्योद्धर्वेष्विति किम्? '[28]दोहकामा इन्द्रवन्तो वनामहे'। '[29]इन्द्रावरुणयोः' इति चशब्दान्नित्यदीर्घः॥

## सत्राज्युक्थायुमत्सुम्ना यन् सुगोपरथीतम ॥ १०९ ॥

जिपरः सत्रशब्दो दीर्घस्स्यात्। यथा—'[30]सत्राजितं धनजितम्'। उक्थायुमदिति। यु-मत् एवम्पर उक्थेति दीर्घस्स्यात्। यथा—'[31]वयस्वत उक्थायुवे' '[32]उक्थामदानां धेनुः'। तत्परः किम्? '[33]उक्थशासः क्षामा'। सुम्ना यन्निति। यन् परः सुम्नेति दीर्घस्स्यात्। यथा—'[34]सुम्नायन्तो हवामहे'। यन्निति किम्?

---

१. तै० सं० २. २. १२. २. तै० सं० ५. ३. ११. ३. तै० सं० ४. २. ५.
४. तै० सं० १. ५. ६. ५. तै० सं० ४. २. ६. ६. तै० सं० ३. ५. ६.
७. तै० सं० १. ५. ७. ८. तै० सं० ४. ६. ६. ९. तै० सं० १. ४. १.
१०. तै० सं० ७. ४. ३. ११. तै० सं० २. ४. २. १२. तै० सं० २. ४. २.
१३. तै० सं० ३. २. ७. १४. तै० सं० १. २. ३. १५. तै० सं० २. ४. २.
१६. तै० सं० ७. १. १. १७. तै० सं० ७. ३. १३. १८. तै० सं० ४. २. ६.
१९. तै० सं० ३. ३. ११. २०. तै० सं० २. ३. ७. २१. तै० सं० ३. २. ५.
२२. तै० सं० ५. ६. १. २३. तै० सं० ४. १. ११. २४. तै० सं० ५. ७. ४.
२५. तै० सं० ४. ७. १४. २६. तै० सं० १. १. १२. २७. तै० सं० २. ५. २.
२८. तै० सं० १. ६. ४. २९. तै० सं० २. ५. १२. ३०. तै० सं० ४. १. १.
३१. तै० सं० १. ४. १२. ३२. तै० सं० २. ४. ११. ३३. तै० सं० २. ६. १२.
३४. तै. सं. १. ५. ११.

'[1]सुम्नयुरिदमसि' । सुगोपेति । सुगोप-रथि-इमौ तमः परौ दीर्घौ स्तः । यथा—'[2]सुगोपातमो जनः' '[3]रथीतमौ रथीनाम्' । तत्परः किम् ? '[4]नमो रथिभ्यः' ॥

**स्वाधियं धी रुहं राज्यं परो दीर्घाधियः परः ॥ ११० ॥**

धियं-धीः-रुहं-राज्यं-एवम्परः स्वेति दीर्घस्स्यात् । यथा—'[5]स्वाधियं जनयत्' '[6]जरते स्वाधीः' '[7]अथो स्वारुहमेव' '[8]स्वाराज्यमाश्नुत' । तत्परः किम् ? '[9]स्वधितिस्समेति' । दीर्घाधिय इति । धियः परो दीर्घेति दीर्घस्स्यात् । यथा—'[10]दीर्घाधियो रक्षमाणाः' । धिय इति किम् ? '[11]दीर्घयाथैस्सोमस्य' ॥

**शीक शुद्ध च मेघाघ वसु शत्रु च योत्तरः ॥ १११ ॥**

शीक-शुद्ध-मेघ-अघ-वसु-शत्रु-एते यकारपरा दीर्घास्स्युः । यथा—'[12]शीकायते स्वाहा' '[13]शुद्धायुवश्शुद्धा यूयम्' '[14]मेघायते स्वाहा' '[15]अघायवो मा' '[16]अघायुरभिदासति' '[17]अरमतिर्वसूयुः' '[18]शत्रूयतो हन्ता' । योत्तर इति किम् ? '[19]शुद्धवालः' '[20]अघशꣳसो रुद्रस्य' '[21]वसुवित्पुष्टिवर्द्धनः' ॥

**विश्वाराड्वसुमित्रापि साह हा पुषवत्परः ॥ ११२ ॥**

राट्-वसु-मित्र-साह-हा-पुष-वत्-एवम्परो विश्वेति दीर्घस्स्यात् । यथा—'[22]विश्वाराडसि विश्वासाम्' '[23]विश्वावसुः पर्यमुष्णात्' '[24]विश्वामित्रस्य-सूक्तम्' '[25]विश्वासाहमवसे' '[26]विश्वा हा शर्म यच्छतु' '[27]उत विश्वा पुषꣳ रयिम्' '[28]विश्वावतो वृष्णियावतः' । तत्परः किम् ? '[29]विश्वरूपा वै' '[30]विश्व जिति यथा' ॥

---

१. तै० सं० २. ५. ७. २. तै० सं० ४. ३. ११. ३. तै० सं० ४. ७. १४.
४. तै० सं० ४. ५. ४. ५. तै० सं० १. २. १४. ६. तै० सं० १. ३. १४.
७. तै० सं० ६. २. १०. ८. तै० सं० ७. ४. ६. ९. तै० सं० ४. ६. ९.
१०. तै० सं० २. १. ११. ११. तै० सं० २. ३. १४. १२. तै० सं० ७. ५. ११.
१३. तै० सं० १. ३. ८. १४. तै० सं० ७. ५. ११. १५. तै० सं० १. २. ९.
१६. तै० सं० ५. ७. ३. १७. तै० सं० ४. ३. १३. १८. तै० सं० १. ६. ५.
१९. तै० सं० ५. ६. १३. २०. तै० सं० १. १. १. २१. तै० सं० ४. ३. १३.
२२. तै० सं० १. ३. २. २३. तै० सं० १. २. ९. २४. तै० सं० ५. २. ३.
२५. तै० सं० १. ४. १७. २६. तै० सं० ४. ६. ४. २७. तै० सं० ४. ६. ९.
२८. तै० सं० ३. ५. ६. २९. तै० सं० २. ५. १. ३०. तै० सं० ७. २. २.

**परी णसमधी वासं प्रावणेभिस्सहोत्तरः ॥ ११३ ॥**

णसं परः परीति दीर्घस्स्यात् । यथा—'[1]वीरवन्तं परीणसम्' । णसमिति किम् '[2]परिसन्तानेभ्यस्स्वाहा' । अधी वासमिति । वासं परः अधीति दीर्घस्स्यात् । यथा—'[3]अधीवासं या हिरण्यान्यस्मै' । वासमिति किम् ? '[4]अधिपामकस्स-मष्टचै' । प्रावणेभिरिति । वनेभिः-सहा एवं परः प्रेति दीर्घस्स्यात् । यथा—'[5]प्राव-णेभिस्सजोषसः' '[6]प्रासहा रयिम्' । तत्परः किम् ? '[7]यदि वातावत्प्रवणम्' ॥

**रात्र्योषध्याहुति श्रोणि चिति व्याहृति पृष्टि चेत् ॥ ११४ ॥**
**स्वाहाकृति शच्यृक्साम हनुह्रादुनि भोत्तरः ॥ ११५ ॥**

रात्रि-ओषधि-आहुति-श्रोणि-चिति-व्याहृति-पृष्टि-स्वाहाकृति-शचि-ऋक्साम-हनु-ह्रादुनि-एषोऽवग्रहराशिः भपरो दीर्घस्स्यात् । यथा—'[8]रात्रीभिरसुभ्नन्' '[9]आप ओषधीभिः' '[10]तान्देवा आहुतीभिः' '[11]श्रोणीभ्याᳪंस्वाहा' '[12]चिती-भ्यामुपायन्' '[13]व्याहृतीभिर्हवीᳪंषि' '[14]पृष्टीभ्यस्स्वाहा' '[15]स्वाहाकृतीभ्यः प्रेष्य' '[16]शचीभिः' '[17]ऋक्सामाभ्यां यजुषा' '[18]हनूभ्याᳪंस्वाहा' '[19]ह्रादुनी-भ्यस्स्वाहा' ॥

**चर्षणी धृत्पारीण् पूती गाभीवृत्सह स्रुयव ॥ ११६ ॥**

धृत्परः चर्षणीति दीर्घस्स्यात् । यथा—'[20]मित्रस्य चर्षणीधृतः' । धृदिति किम् ? '[21]नृवदा चर्षणिप्राः' । पारीणिति । णपरः पारीति दीर्घस्स्यात् । यथा—'[22]पारीणह्यस्येशे' । पूतीति । गपरः पूतीति दीर्घस्स्यात् । यथा—'[23]पूतीगन्ध-स्यापहत्यै' । अभीवृदिति । वृत्-सह एवं परः अभीति दीर्घस्स्यात् । यथा—

१. तै० सं० २. २. १२. २. तै० सं० ७. ४. २१. ३. तै० सं० ४. ६. ९.
४. तै० सं० ६. १. ७. ५. तै० सं० ४. २. ४. ६. तै० सं० १. ३. १४.
७. तै० सं० २. ४. १२. ८. तै० सं० २. ४. १. ९. तै० सं० ३. ५. ६.
१०. तै० सं० २. ६. ९. ११. तै० सं० ७. ३. १६. १२. तै० सं० ५. ७. ५.
१३. तै० सं० १. ६. १०. १४. तै० सं० ७. ३. १६. १५. तै० सं० ६. ३. ९.
१६. तै० सं० ४. २. ५. १७. तै० सं० १. २. ३. १८. तै० सं० ७. ३. १६.
१९. तै० सं० ७. ४. १३. २०. तै० सं० ३. ४. ११. २१. तै० सं० १. ४. २१.
२२. तै० सं० ६. २. १. २३. तै० सं० २. २. २.

'[1]अभीवृतो घृणीवान्' '[2]तद्भीषहा पुनः'। एवं पर इति किम्? '[3]अभिवीरो' '[4]अभिसत्वा'। सूयवेति। यवपरः सु इति दीर्घस्स्यात्। यथा—'[5]सूयवसिनी मनवे' '[6]सूयवसम्'। यवपर इति किम्? '[7]सुयमानूतये'॥

त्विषि वाशिम्यनूब्याज्रात् काश्विभूदाववग्रहः ॥ ११७ ॥

त्विषि-वाशि इमौ दीर्घौ स्तः मकारे परे सति। यथा—'[8]सस्पिञ्जराय त्विषीमते' '[9]ते वाशीमन्त इष्मिणः'। अनूबिति। याज्-राध्-काश् एवं परः अनु इति दीर्घस्स्यात्। यथा—'[10]अनूबन्ध्यासः' '[11]प्रयाजानूयाजा' '[12]प्रयाज-वदननूयाजम्'। अन् कारादिवचनादिदमप्युदाहर्तव्यम्। '[13]अनूराधा नक्षत्रम्' '[14]अथो अनूकाशम्'। तत्परः किम्? '[15]अनुयाति भवन्' '[16]अनुकामिनी स्वे'। विभूदाविति। दाव् परो विभु इत्यवग्रहो दीर्घस्स्यात्। यथा—'[17]विभूदाव्ने ज्योतिष्मते'। अवग्रह इति। अनेन प्रकारेणोक्तः पदसमुदायोऽवग्रहो विज्ञेयः॥

ऋक्ष्वथा तेस्वयं धत्तं सपत्नान्नो रयिं भव ॥ ११८ ॥
देवानां शतसोमस्य जीवो यूयं पितॄन् परः ॥ ११९ ॥

तेस्-वयं-धत्तं-सपत्नान्-नः-रयिं-भव-देवानां-शत-सोमस्य-जीवः-यूयम्-पितॄन् एवं परः अथेत्यस्मिन्ननवग्रहेऽन्त्यस्वरो दीर्घमापद्यते ऋक्षु अर्धान्तवत्स्वनुवाकेषु। यथा—'[18]अथा ते स्याम वरुणप्रियासः'। स् इति किम्? '[19]यज्ञे मा भजाथ ते पशून्'। अयमर्धान्तवन्मन्त्रो न स्यादिति सकारो निष्प्रयोजक इति केचित्। '[20]अथावयमादित्यः' '[21]अथा धत्तं यजमानाय' '[22]अथा सपत्नान्' '[23]अग्न आरोहाथा नः' '[24]अथा रयिꣳसर्ववीरम्' '[25]अथा भव यजमानाय'

१. तै० सं० ३.५.११. २. तै० सं० ६.१.१०. ३. तै० सं० ४. ६.४.
४. तै० सं० ४.६.४. ५. तै० सं० १.२.१३. ६. तै० सं० १.७.५.
७. तै० सं० ४.७.१५. ८. तै० सं० ४.५.२. ९. तै० सं० २.१.११.
१०. तै० सं० २.२.९. ११. तै० सं० २.६.१. १२. तै० सं० ६.१.५.
१३. तै० सं० ४.४.१०. १४. तै० सं० ५.४.१. १५. तै० सं० १.३.१४.
१६. तै० सं० ३.५.६. १७. तै० सं० ३.५.९. १८. तै० सं० ३.४.११.
१९. तै० सं० ३.१.९. २०. तै० सं० १.५.११. २१. तै० सं० २.१३.१४.
२२. तै० सं० १.१.१३. २३. तै० सं० ४.२.४. २४. तै० सं० २.६.१२.
२५. सू० १.७.१३.

'[१]अथा देवानामप्येतु' '[२]अथा शतक्रत्वो यूयम्' '[३]अथा सोमस्य प्रयती' '[४]अथा जीवः पितुमद्धि' '[५]अथा यूयग्ँस्थ' '[६]अथा पितॄन्त्सुविदत्रान्'। तत्परः किम् ? '[७]अथ विश्वे अरपाः'। ऋक्ष्विति किम् ? '[८]अथ ते पुनर्दास्यामि' इति ॥

**अधा ते च यथा ह्येवं स्तिष्ठादेवशरीर चेत् ॥ १२० ॥**

ते-च-यथा-हि-एवं परः अधेति पदेऽन्त्यः स्वरः ऋक्षु दीर्घमाप्नोति। यथा- '[९]अधा ते सुम्नमीमहे' '[१०]अधा च नश्शर्म यच्छ' '[११]अधा यथा नः' '[१२]अधा ह्यग्ने क्रतोः'। एवं पर इति किम् ? '[१३]अध पोषयित्नु'। तिष्ठादेवेति। देव-शरीर-एवं परः तिष्ठेति दीर्घः स्यात्। यथा-'[१४]तिष्ठा देवो न' '[१५]प्रतितिष्ठा शरीरैः'। तत्परः किम् ? '[१६]उत्तिष्ठ बृहती भव' ॥

**अच्छा वोचो जिगा नक्षि पितर्देवान्नियुद्वद ॥ १२१ ॥**

वोचः-जिगा-नक्षि-पितः-देवान्-नियुत्-वद-एवं परः अच्छेति दीर्घस्स्याद् ऋक्षु। यथा-'[१७]अच्छा वोचो विदुष्टरम्' '[१८]अर्णमच्छा जिगासि' '[१९]अच्छा नक्षि द्युमत्तमः' '[२०]अर्वाँअच्छा पितरम्' '[२१]अच्छा देवाँऊचिषे' '[२२]अच्छा नियुद्भिर्वा यविष्ठ्ये' '[२३]अग्ने अच्छा वदेह नः'। तत्परः किम् ? '[२४]अच्छयाति' इति केचित्। '[२५]ऋक्षु' इत्युक्तत्वादनुपपन्नमतेत् ॥

**चक्रमा सु-जुषध्वं कद्वयं दैव्येऽत्र पूरुण ते ॥ १२२ ॥**

सु-जुषध्वं-कत्-वयं-दैव्ये-एवं परः चक्रमेति दीर्घस्स्यात्। यथा-'[२६]चक्रमा सुबन्धुम्' '[२७]हव्या चक्रमा जुषध्वम्' '[२८]चक्रमा कच्चन' '[२९]एनश्चक्रमा वयम्'

---

१. तै० सं० ३. १. ११. २. तै० सं० ४. २. ६. ३. तै० सं० १. १. १४.
४. तै० सं० ४. २. ५. ५. तै० सं० ४. २. ६. ६. तै० सं० १. ८. ५.
७. तै० सं० ३. २. ८. ८. तै० सं० २. ३. ५. ९. तै० सं० २. ६. ११.
१०. तै० सं० ४. ५. १०. ११. तै० सं० २. ६. १२. १२. तै० सं० ४. ४. ४.
१३. तै० सं० ३. १. ११. १४. तै० सं० ४. १. ४. १५. तै० सं० ३. १. ४.
१६. तै० सं० ४. १. ६. १७. तै० सं० २. ६. ११. १८. तै० सं० ४. २. ४.
१९. तै० सं० ४. ४. ४. २०. तै० सं० ४. ६. ७. २१. तै० सं० ४. २. ४.
२२. तै० सं० २. २. १२. २३. तै० सं० १. ७. १०. २४. तै० सं० ६. १. ९.
२५. सू० ११८ २६. तै० सं० ४. ६. ८. २७. तै० सं० २. ६. १२.
२८. तै० सं० ४. ७. १५. २९. तै० सं० १. ८. ३.

'[1]यच्चक्रमा दैव्ये'। तत्परः किम्? '[2]यानि चक्रम करोतु मामनेनसम्'। अत्रेति। पूष्ण-तेएवंपरः अत्रेति दीर्घस्स्यात्। यथा—'[3]अत्रापूष्णः प्रथमः' '[4]अत्रा ते रूपम्'। तत्परः किम्? '[5]असदत्र सुवीर्यम्'॥

## सृजा ररा दृतिं वृष्टिं सं रक्षा माकिराज च ॥ १२३ ॥

ररा-दृतिं-वृष्टिं-संएवं परः सृजेति दीर्घस्स्यात्। यथा—'[6]वनस्पतेऽवसृजा रराणः' '[7]ईशानो विसृजा दृतिम्' '[8]सृजा वृष्टिन्दिवः' '[9]स्वादुना सृजा समतः'। तत्परः किम्? '[10]विसृज तूर्णितमः'। रक्षेति। माकि-राज-च एवं परो रक्षेति दीर्घस्स्यात्। यथा—'[11]रक्षा माकिर्नः' '[12]रक्षा राजन्नघायतः' '[13]रक्षा च नो अधि च'॥

## भवा तोकाय नस्त्वं पा वाज्यत्रा ते नियुन्नरः ॥ १२४ ॥

तोकाय-नः-त्वं-पा-वाजएवंपरो भवेति दीर्घस्स्यात्। यथा—'[14]भवा तोकाय तनयाय' '[15]मघवा भवा नः' '[16]अधिपा भवा त्वं नः' '[17]भवा पायुर्विशः' '[18]भवा वाजस्य सङ्गथे'। तत्परः किम्? '[19]भव यजमानाय'। यत्रेति। ते-नियुत्-नरः एवंपरो यत्रेति दीर्घस्स्यात्। यथा—'[20]यत्रा त आहुः' '[21]यत्रा नियुद्भिस्सचसे' '[22]यत्रा नरो मरुतः'। तत्परः किम्? '[23]यत्र भूरि शृङ्गा अयासः'॥

## ससादा पितृयजी मुञ्चा विस्वस्त शिक्षनरस्सखि ॥ १२५ ॥

पितृ-यजी-एवं परस्ससादेति दीर्घस्स्यात्। यथा- '[24]निषसादा पिता नः' '[25]निषसादा यजीयान्'। तत्परः किम्? '[26]निषसाद धृतव्रतः'। मुञ्चेति। वि-स्वस्त-

१. तै० सं० ४. १. ११.  २. तै० सं० १. ८. ५.  ३. तै० सं० ४. ६. ८.
४. तै० सं० ४. ६. ७.  ५. तै० सं० १. ८. २२.  ६. तै० सं० ४. १. ८.
७. तै० सं० २. ४. ८.  ८. तै० सं० २. ४. ८.  ९. तै० सं० ३. ५. १०.
१०. तै० सं० १. ३. १४.  ११. तै० सं० ४. ६. ६.  १२. तै० सं० २. ३. १४.
१३. तै० सं० ४. ५. १०.  १४. तै० सं० १. १. १४.  १५. तै० सं० १. ४. ३२.
१६. तै. सं. ४. २. ५.  १७. तै० सं० १. १. १४.  १८. तै० सं० ३. २. ५.
१९. तै० सं० १. ७. १३.  २०. तै० सं० ४. ६. ७.  २१. तै० सं० ४. ४. ४.
२२. तै० सं० ३. १. ११.  २३. तै० सं० १. ३. ६.  २४. तै० सं० ४. ६. २.
२५. तै० सं० ४. १. ३.  २६. तै० सं० १. ८. १४.

एवं परो मुञ्चेति दीर्घस्स्यात्। यथा—'[१]प्रमुञ्चाव्यᳬहः' '[२]प्रमुञ्चा स्वस्तये'। तत्परः किम्? '[३]प्रमुञ्च धन्वनः'। शिक्षेति। नः-सखि-एवं परः शिक्षेति दीर्घस्स्यात्। यथा—'[४]शिक्षा णोऽस्मिन्' '[५]शिक्षा सखिभ्यो हविषि'। तत्परः किम्? '[६]उत शिक्षस्व पत्यस्य'॥

**क्षामा रेभिरु घा स्यालात्सत्यं मृडा जरित्र नः॥ १२६॥**

रे-भि-रु-एवं परः क्षामेति दीर्घस्स्यात् यथा—'[७]क्षामा रेरिहत्' '[८]क्षामा भिन्दन्तः' '[९]द्यावा क्षामा रुक्मः'। घेति। स्यालात्-सत्यम् एवं परो घेति दीर्घस्स्यात्। यथा—'[१०]उत वा घा स्यालात्' '[११]यद्वाघा सत्यम्'। मृडेति। जरित्र-नः-एवं परो मृडेति दीर्घस्स्यात्। यथा—'[१२]मृडा जरित्रे रुद्र' '[१३]मृडा नो रुद्रोत'। तत्परः किम्? '[१४]तया नो मृड जीवसे'॥

**धारया रयिं वसूनि मय्यवता हवे वचः॥ १२७॥**

रयिं-वसूनि-मयिएवं परो धारयेति दीर्घस्स्यात्। यथा—'[१५]अधि धारया रयिम्' '[१६]बृहस्पते धारया वसूनि' '[१७]धारया मयि प्रजाम्'। अवतेति। हवे-वचः एवं परोऽवतेति दीर्घस्स्यात्। यथा—'[१८]अस्मानु देवा अवता हवेषु' '[१९]इदम्मे प्रावता वचः'। तत्परः किम्? '[२०]वाजे वाजेऽवत वाजिनः'॥

**विद्मा ते तं हि बोधा सनोऽद्या देवान् हुवे च वृण्॥ १२८॥**

ते-तं-हि एवंपरो विद्मेति दीर्घस्स्यात्। यथा-'[२१]विद्मा ते अग्ने' '[२२]विद्मा तमुत्सम्' '[२३]विद्मा हि त्वा वसुपतिम्'। बोधेति। सः-नः एवं परो बोधेति दीर्घस्स्यात्। यथा—'[२४]बोधास बोधीत्युपतिष्ठते' '[२५]बोधा नो अस्य'। नन्वत्र स

---

१. तै० सं० ४. ७. १५. २. तै० सं० ३. २. ८. ३. तै० सं० ४. ५. १.
४. तै० सं० ७. ५. ७. ५. तै० सं० ६. ४. २. ६. तै० सं० १. ३. १४.
७. तै० सं० १. ३. १४. ८. तै० सं० २. ६. १२. ९. तै० सं० ४. १. १०.
१०. तै० सं० १. १. १४. ११. तै० सं० ३. ४. ११. १२. तै० सं० ४. ५. ११.
१३. तै० सं० ४. ५. ११. १४. तै० सं० ४. ५. ११. १५. तै० सं० ४. १. ७.
१६. तै० सं० १. ३. ७. १७. तै० सं० ४. १. ५. १८. तै० सं० ४. ६. ४.
१९. तै० सं० ४. २. ६. २०. तै० सं० १. ७. ८. २१. तै० सं० ४. २. २.
२२. तै० सं० ४. २. २. २३. तै० सं० १. ७. १३. २४. तै० सं० ५. २. २.
२५. तै० सं० ४. २. ३.

इति ग्रहणं व्यर्थम् । 'देवहूतमा३ँ इत्युखायाम्' इति ब्राह्मणवाक्ये अन्यस्वरपरेऽपि यथा यत्वं स्यात् तद्वत् 'बोधा स बोधि' इत्यत्रापि अन्यव्यञ्जने परे सति दीर्घस्स्यादिति चेत्, नैवम्; तत्र पूर्वं कार्यभाजः नित्यस्वरमात्रपरे यत्वं स्यादित्युक्तम् । तदन्यत्र स्थले मन्त्रस्थितस्य परपदसहितस्य कार्यभाज इत्युत्तरत्वे कार्यं [1]स्यात् । नात्रायमस्ति । तथा सति 'बोधा स' इत्यत्र दीर्घः कथं भविष्यति ? तस्मादेतद्ग्रहणं सार्थकमेव । अद्येति । देवान्-हुवे-च-वृण् एवं परोऽद्येति दीर्घस्स्यात् । यथा— '[2]अद्या देवाञ्जुष्टतमः' '[3]वाजो नो अद्या हुवेम' '[4]अद्या च मृडय' '[5]सूक्तैरद्या वृणीमहे' । तत्परः किम् ? '[6]अद्य वसु वसतीति' ॥

[7]भरता वसु बृहज्जातवर्धया त्वं रयिं परः ॥ १२९ ॥

वसु-बृहत्-जात एवं परो भरतेति दीर्घस्स्यात् । यथा—'[8]भरता वसु वित्तमम्' '[9]अग्नये भरता बृहत्' '[10]धिया भरता जातवेदसम्' । तत्परः किम् ? '[11]एष वो भरता राजा' । अत्र नित्यदीर्घः । वर्धयेति । त्वं-रयिं-एवं परो वर्धयेति दीर्घस्स्यात् । यथा—'[12]त्वमग्ने वर्धया त्वम्' '[13]अथा नो वर्धया रयिम्' ॥

सचस्व नुद वर्धावा नोऽत्तधामाह ना ह दे ॥ १३० ॥

सचस्व-नुद-वर्ध-अव-एष्वन्त्यस्वरो नः परो दीर्घस्स्यात् । यथा—'[14]स चस्वा नः स्वस्तये' '[15]प्रणुदा नस्सपत्नान्' '[16]वर्धा नो अमवच्छवः' '[17]अवा नु देव्या' । तत्परः किम् ? '[18]अव ते हेडः' '[19]रयिं नो वर्ध बहुलम्' । अत्र जटायां वर्धशब्दस्य द्वितीयोच्चारणे नः परेऽपि दीर्घो न स्यात् । तत्कथम् ? अनार्षनः पदपरत्वादिति ब्रूमः । अत्तोति । अत्त-धाम-न एष्वन्त्यस्स्वरो हपरः ऋक्षु दीर्घ-

१. स्यात्, न तु नित्यस्वरमात्रत्वे । नात्रायमिति शब्दोऽस्ति सर्व० ।

२. तै० सं० ४. ६. ७. ३. तै० सं० ४. ६. २. ४. तै० सं० २. १. ११.
५. तै० सं० ३. ४. ११. ६. तै० सं० २. ५. ३.

७. एतेनं भरता याज्यासु (प्राति० १. ३. ११.) इति प्रातिशाख्योक्तमर्थंतस्सङ्गृहीतम् ।

८. तै० सं० ३. ५. ११. ९. तै० सं० ३. २. ११. १०. तै० सं० ३. ५. ११.
११. तै० सं० १. ८. १०. १२. तै० सं० ४. ६. ३. १३. तै० सं० १. ५. ५.
१४. तै० सं० १. ५. ६. १५. तै० सं० ४. ३. १२. १६. तै० सं० २. ६. ११.
१७. तै० सं० ४. १ ४. १८. तै० सं० १. ५. ११. १९. तै० सं० ४. ३. ४.

स्स्यात्। यथा—'[1]अत्ता हवीꣳषि' '[2]धामा ह यत्ते' '[3]रिपवो ना ह देभुः'। हपर इति किम्? '[4]त्रिꣳशद्धाम विराजति' '[5]अत सन्न शुष्कम्'। ऋक्ष्विति किम्? '[6]न ह स्म वै'। अत्र न स्यात्, दे इत्युक्तत्वात्॥

## युक्ष्व स्वेन जनिष्वा हि मधूर्ध्वसिस्नथोक्षत ॥ १३१ ॥

युक्ष्व-स्वेन-जनिष्व एष्वन्त्यस्वरो हिपरो दीर्घः स्यात्। यथा—'[7]युक्ष्वा हि ये तव' '[8]स्वेना हि वृत्रम्' '[9]जनिष्वा हि जेन्यः'। हि पर इति किम्? '[10]स्वेन भागधेयेन'। मधूर्ध्व इति। सिस्नथ-उक्षत-अनयोरन्त्यस्वरो मधु परो दीर्घस्स्यात्। यथा—'[11]मरुतस्सिस्नथा मधु' '[12]घृतमुक्षता मधुपर्णम्'। तत्परः किम्? '[13]मधुना समुक्षत पयस्वतीः'॥

## घुष्याश्वस्य वि पाथा दिवारिथामुञ्चता यज ॥ १३२ ॥

घुष्य-अश्वस्य एतौ विपरौ दीर्घौ स्तः। यथा—'[14]अनु घुष्या विशस्त' '[15]अश्वस्या विशस्ता'। वीति किम्? '[16]यदश्वस्य क्रविषः'। पाथादीति। दिव् परः पाथेति दीर्घस्स्यात्। यथा—'[17]क्षये पाथा दिवः'। आरिथेति। आरिथ-अमुञ्चत एतौ यजपरौ दीर्घौ स्तः। यथा—'[18]उदारिथा यजेनम्' '[19]अमुञ्चता यजत्राः'॥

## पिबा चरा सोम हिष्ठाम् वर्तयर्ष यथा पु चेत् ॥ १३३ ॥

पिब-चरएतौ सोमपरौ दीर्घौ स्तः। 'यथा[20]पिबा सोम मिन्द्र' '[21]प्रचरा

---

१. तै. सं. २. ६. १२.    २. तै. सं. ३. १. ११.

३. तै. सं. १. २. १४. नाहदे—हदे परः नेति दीर्घस्स्यात् इत्यर्थः। तेन 'न ह स्म वै' इत्यत्र नेत्यस्य हपरत्वेऽपि हदेपरत्वाभावान्नातिप्रसङ्गः। एवञ्च दे इति किम्? 'न ह स्म वै' इत्ययमेवार्थः पर्यायेणोक्त इति ध्येयम्।

४. तै० सं० १. ५. ३.    ५. तै० सं० १. २. १४.    ६. तै० सं० ५. १. १०.

७. तै० सं० २. ६. ११.    ८. तै० सं० ७. ४. १५.    ९. तै० सं० ४. १. ३.

१०. तै. सं. २. १. १.    ११. तै. सं. ३. १. ११.    १२. तै. सं. ४. ३. १३.

१३. तै० सं० ३. १. ११.    १४. तै० सं० ४. ६. ९.    १५. तै० सं० ४. ६. ९.

१६. तै० सं० ४. ६. ८.    १७. तै० सं० ४. २. ११.    १८. तै० सं० ४. ६. ५.

१९. तै० सं० ४. ७. १५.    २०. तै० सं० २. ४. १४.    २१. तै० सं० १. २. १०.

सोम दुर्यान्'। सोमेति किम्? '[1]सोमं पिब वृत्रहन्' '[2]आचर पिनाकम्'। हि ष्ठामिति। हि पूर्वः स्थेति मपरो दीर्घस्स्यात्। यथा—'[3]आपो हिष्ठा मयो भुवः'। हीति किम्? '[4]व्रज क्षितस्थ मरुताम्' '[5]प्रतिष्ठां वै' इत्यत्र नित्यदीर्घो विज्ञेयः। वर्तयेति। वर्तय-र्षयथ एतौ पुपरौ दीर्घौ स्तः। यथा—'[6]आवर्तया पुनः' [7]वृष्टिं वर्षयथा पुरीषिणः'। पु इति किम्? '[8]आ वर्तय वर्तन नि निवर्तन वर्तय'॥

## जनयथा च दीयार ऋध्यामा ते हरा नि चेत्॥ १३४॥

चपरो जनयथेति दीर्घस्स्यात्। यथा—'[9]आपो जनयथा च नः'। दीयारेति। रपरो दीयेति दीर्घस्स्यात्। यथा—'[10]परिदीया रथेन'। ऋध्यामेति। ते परः ऋध्यामेति दीर्घस्स्यात्। यथा—'[11]ऋध्यामा त ओहैः'। हरेति। निपरो हरेति दीर्घः स्यात्। यथा—'[12]निहारमिन्नि मे हरा निहारम्'॥

## तत्रा रथं जयता नरू कुत्राचिद्य तरा मृधः॥ १३५॥

रथं परस्तत्रेति दीर्घस्स्यात्। यथा—'[13]तत्रा रथमुप'। रथमिति किम्? '[14]ऊर्जञ्च तत्र सुमतिम्'। जयतेति। नरू परो जयतेति दीर्घस्स्यात्। यथा—'[15]उपप्रेत जयता नरः'। तत्परः किम्? '[16]तदिन्द्रेण जयत तत्सहध्वम्'। कुत्रेति। चिद्यपरः कुत्रेति दीर्घस्स्यात्। यथा—'[17]कुत्रा चिद्यस्य'। तरेति। मृधः परः तरेति दीर्घस्स्यात्। यथा—'[18]अग्ने त्वन्तरा मृधः'॥

## याता हिर पृणस्वा घृते भरा दद्धयपा वृधि॥ १३६॥

हिरपरः यातेति दीर्घस्स्यात्। यथा—'[19]रथैर्याता हिरण्ययैः'। हिरेति किम्? '[20]तृप्ता यात पथिभिः'। पृणस्वेति। घृते परः पृणस्वेति दीर्घस्स्यात्। यथा—'[21]आपृणस्वा घृतेन'। घृतेति किम्? '[22]हस्तौ पृणस्व बहुभिः'। भरेति। दद्धिपरो भरेति दीर्घस्स्यात्। यथा—'[23]मा नो मघोरा भरा दद्धि तन्नः'। दद्धीति

---

१. तै० सं० १. ४. ४२. २. तै० सं० ४. ५. १. ३. तै० सं० ४. १. ५.
४. तै० सं० १. ८. ११. ५. तै० सं० १. ७. २. ६. तै० सं० ३. ३. १०.
७. तै० सं० २. ४. ८. ८. तै० सं० ३. ३. १०. ९. तै० सं० ४. १. ५.
१०. तै० सं० ४. ६. ४. ११. तै० सं० ४. ४. ४. १२. तै० सं० १. ८. ४.
१३. तै० सं० ४. ६. ६. १४. तै० सं० ३. १. ११. १५. तै० सं० ४. ६. ४.
१६. तै० सं० ४. ६. ४. १७. तै० सं० २. १. ११. १८. तै० सं० ४. १. ९.
१९. तै० सं० ४. ७. १२. २०. तै० सं० १. ७. ८. २१. तै० सं० १. ५. ३.
२२. तै० सं० १. २. १३. २३. तै० सं० १. ७. १३.

किम् ? '[1]आ तू भर माकिः' । अपेति । वृधिपरोऽपेति दीर्घस्स्यात् । यथा— '[2]श्रुत्या अपावृधि' । वृधीति किम् ? '[3]अप दुर्मतिꣳहनत्' ॥

**वोचता मेऽनदता ह्येना सहस् चृता बचेत् ॥ १३७ ॥**

मे परः वोचतेति दीर्घस्स्यात् । यथा—'[4]अधिवोचता मे' । अनदतेति । हृत्परः अनदतेति दीर्घस्स्यात् । यथा—'[5]अहावनदता हृते' । येनेति । सहस् परो येनेति दीर्घस्स्यात् । यथा—'[6]येना सहस्रं वहसि' । सहसिति किम् ? '[7]येन देवा ज्योतिषा' । चृतेति । बपरः चृतेति दीर्घस्स्यात् । यथा—'[8]विचृता बन्धमेतम्' ॥

**भजा त्वं जनया दैव्यं दक्षिणेना वसून्यपि ॥ १३८ ॥**

त्वं परो भजेति दीर्घस्स्यात् । यथा—'[9]व्रजे भजा त्वन्नः' । त्वमिति किम् ? '[10]तं भज सौश्रवसेषु' । जनयेति । दैव्यं परो जनयेति दीर्घस्स्यात् । यथा— '[11]जनया दैव्यं जनम्' । दक्षिणेनेति । वसूनिपरः दक्षिणेनेति दीर्घस्स्यात् । यथा—'[12]इन्द्राभर दक्षिणेना वसूनि' ॥

**रुहेमा स्व स्तरीमाजु भवता मृड धर्ष मान् ॥ १३९ ॥**

स्वपरो रुहेमेति दीर्घस्स्यात् । यथा—'[13]आ रुहेमा स्वस्तये' । स्तरीमेति । जुपरः स्तरीमेति दीर्घस्स्यात् । यथा—'[14]सुष्टरीमा जुषाणा' । भवतेति । मृडपरो भवतेति दीर्घस्स्यात् । यथा—'[15]भवता मृडयन्तः' । धर्षेति । मान् परो धर्षेति दीर्घस्स्यात् । यथा—'[16]धर्षा मानुषान्' ॥

**बिभृता स्वीरयथा मरु भरेमा मनीष चेत् ॥ १४० ॥**

सुपरो बिभृतेति दीर्घस्स्यात् । यथा—'[17]बिभृता स्वेनम्' । ईरयथेति । मरुपरः ईरयथेति दीर्घस्स्यात् । यथा—'[18]उदीरयथा मरुतः' । भरेमेति । मनीषपरः भरेमेति दीर्घस्स्यात् । यथा—'[19]प्रभरेमा मनीषाम्' ॥

---

१. तै० सं० १. ७. १३. २. तै० सं० २. २. १२. ३. तै० सं० ४. १. ४.
४. तै० सं० ४. ७. १४. ५. तै० सं० ५. ६. १. ६. तै० सं० ४. ७. १३.
७. तै० सं० ५. २. ७. ८. तै० सं० ४. २. ५. ९. तै० सं० ४. २. ५.
१०. तै० सं० ४. २. २. ११. तै० सं० ३. ४. २. १२. तै० सं० ३. ४. ११.
१३. तै० सं० १. ५. ११. १४. तै० सं० ५. १. ११. १५. तै० सं० १. ४. २२.
१६. तै० सं० १. ३. ८. १७. तै० सं० १. २. ३. १८ तै० सं० २. ४. ८.
१९. तै० सं० १. ६. १२.

## हन्तना तं जगामा परस्याश्चेत्तपता सुवृक् ॥ १४१ ॥

तं परो हन्तनेति दीर्घस्स्यात्। यथा—'[1]तपसा हन्तना तम्'। जगामेति। परस्याः परो जगामेति दीर्घस्स्यात्। यथा—'[2]आजगामा परस्याः'। तपतेति। सुवृक्परः तपतेति दीर्घस्स्यात्। यथा—'[3]सामन्तपता सुवृक्तिभिः' ॥

## जुहुता विश्व तरता रजांसि शृणुता हवम् ॥ १४२ ॥

विश्वपरो जुहुतेति दीर्घस्स्यात्। यथा—'[4]जुहुता विश्वकर्मणे'। तरतेति। रजांसि परः तरतेति दीर्घस्स्यात्। यथा'[5]सुवो रुहाणास्तरता रजाꣳसि'। शृणुतेति। हवं परः शृणुतेति दीर्घस्स्यात्। यथा—'[6]मरुतः शृणुता हवम्' ॥

## पारया नव्यस्सादया यज्ञश्चेत्कृणुता बृहत् ॥ १४३ ॥

नव्यः परः पारयेति दीर्घस्स्यात्। यथा—'[7]अग्ने त्वं पारया नव्यः'। नव्य इति किम्? '[8]स्वस्ति मा सम्पारय सुपर्णः'। यज्ञं परः सादयेति दीर्घस्स्यात्। यथा—'[9]सादया यज्ञꣳसुकृतस्य'। कृणुतेति। बृहत्परः कृणुतेति दीर्घस्स्यात्। यथा—'[10]संवत्सराय कृणुता बृहन्नमः'। बृहत्पर इति किम्? '[11]इहे हैषां कृणुत भोजनानि' ॥

## क्रयी पोश्मसी ग यदी भू कृधी स्वस् श्रुधी हवम् ॥ १४४ ॥

पपरः क्रयीति दीर्घस्स्यात्। यथा—'[12]रुद्र यत्ते क्रयी परन्नाम'। उश्मसीति। गपर उश्मसीति दीर्घस्स्यात्। यथा—'[13]उश्मसी गमध्ये'। यदीति। भूपरो यदीति दीर्घस्स्यात्। यथा—'[14]यदी भूमिञ्जनयन्'। भू इति किम्? '[15]यदि दहति पुण्यसमम्'। कृधीति। स्वस् परः कृधीति दीर्घस्स्यात्। यथा—'[16]कृधी स्वस्माꣳअदितेः'। स्वस् इति किम्? '[17] ब्रह्मणा कृधि सुवर्ण शुक्रम्'।

---

[1] तै० सं० ४. ३. १३. [2] तै० सं० १. ६. १२. [3] तै० सं० १. ६. १२.
[4] तै० सं० ४. ६. २. [5] तै० सं० ३. ५. ४. [6] तै० सं० ४. २. ११.
[7] तै० सं० १. १. १४. [8] तै० सं० ३. २. १. [9] तै० सं० ३. ५. ११.
[10] तै० सं० ५. ७. २. [11] तै० सं० १. ८. २१. [12] तै० सं० १. ८. १४.
[13] तै० सं० १. ३. ६. [14] तै० सं० ४. ६. २. [15] तै० सं० ३. ३. ८.
[16] तै० सं० ४. ७. १५ [17] तै० सं० २. २. १२.

श्रुधीति। ह्वंपरः श्रुधीति दीर्घस्स्यात्। यथा—'[1]इमं मे वरुण श्रुधी हवम्'। व्यावर्त्योदाहरणशेषश्शाखान्तरे द्रष्टव्यः॥

**मोष्वा तु नू रणे मक्षू दे थू करूशु बल् सु नु ॥ १४९ ॥**

मो पूर्वस्सु इति दीर्घस्स्यात् हलि परे। यथा—'[2]मोषूण इन्द्र'। मो इति किम्? '[3]ऊद्धर्व उषुण ऊतये'। आत्विति। आ पूर्वः तु दीर्घस्स्यात्। यथा—'[4]आतू भर माकिः'। आपूर्व इति किम्? '[5]प्र तु जनयतीति'। नू इति। रणे परो नु इति दीर्घस्स्यात्। यथा–'[6]एतशस्य नू रणे'। रण इति किम्? '[7]हु वे नु शक्रम्'। मक्षू इति। दे परो मक्षु इति दीर्घस्स्यात्। यथा—'[8]मक्षू देववतो रथः'। थू इति। कः परः थु इति दीर्घः स्यात्। यथा—'[9]असिना मिथू कः'। कः पर इति किम्? '[10]मिथुश्चरन्तमुपयाति'। ऊशु इति। शु-बल्-सु-नु-एवं परपदैर्विशिष्टं उ इति पदं दीर्घमापद्यते। यथा—'[11]तमू शुचिॐशुचयः' '[12]उद्वर्च उदू बलम्' '[13]महीमूषु मातरम्' '[14]अस्माभिरू नु प्रतिचक्ष्या'। तत्परः किम्? '[15]उ नः परस्पाः'॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे व्यञ्जन-
परदीर्घप्रकरणम्॥ ४॥

---

१. तै० सं० २. १. ११. २. तै० सं० १. ८. ३. ३. तै० सं० ४. १. ४.
४. तै० सं० १. ७. १३. ५. तै० सं० १. ७. २. ६. तै० सं० ४. ६. १.
७. तै० सं० १. ६. १२. ८. तै० सं० १. ८. २२. ९. तै० सं० ४. ६. ९.
१०. तै० सं० ४. ७. १५. ११. तै० सं० २. ५. १२. १२. तै० सं० ४. १. १०.
१३. तै० सं० १. ५. ११. १४. तै० सं० १. ४. ३३. १५. तै० सं० ३. ५. ११.

## आगमप्रकरणम् ॥ ५ ॥

### आगमस्त्रपुपूर्वः स्यान्मिथ्वधश्शोऽपि चोत्तरः ॥ १४६ ॥

त्रपुपूर्वो मिथुपूर्वश्च शकार आगमस्स्याच्चकारपरः। यथा—'[1]त्रपुश्च मे' '[2]मिथुश्चरन्तम्'। तत्पूर्वः किम्? '[3]विभु च मे प्रभु च मे'। तत्परः किम्? '[4]असिना मिथूकः'॥

### सु पूर्वश्शोऽपि चन्द्रोर्ध्वस्सम्पूर्वस्सः कुरूत्तरः ॥ १४७ ॥

सु पूर्वश्शकार आगमस्स्यात् चन्द्रपरः। यथा—'[5]सुश्चन्द्र दस्म'। तत्पूर्वः किम्? '[6]प्रचन्द्रमास्तिरति'। तत्परः किम्? '[7]सुचरिते भज'। सु इत्येष शब्दः पूर्वो यस्मादसौ सुपूर्वः। सम्पूर्व इति। समित्येवं पूर्वस्सकार आगमस्स्यात् कुरु परः। यथा—'[8]यजमानस्सग्ँ‌स्कुरुते'। एवं पूर्व इति किम्? '[9]देवलक्ष्ममेव तत्कुरुते। तत्परः किम्? '[10]यत्सङ्कृत्यच्छावाकसामम्'। कुरुशब्द उत्तरो यस्मादसौ कुरूत्तरः॥

### समपूर्वश्च[11] कुर्वोर्ध्वो नीचापूर्वो द उच्परः ॥ १४८ ॥

समेत्येवं पूर्वस्सकार आगमस्स्यात् कुर्वपरः। यत्रापदान्तकार्यन्तु भवेत्तत्र पूर्वपदेन युगिति च। यथा—'[12]त इषुग्ँ‌समस्कुर्वत'। समेति किम्? '[13]अग्निहोत्रं व्रतमकुर्वत'। नीचेति। नीचापूर्वो दकार आगमस्स्यात् उच्चापरः। यथा—'[14]मद्ध्यान्नीचादुच्चा'। तत्परः किम्? '[15]नीचा तं धक्षि'॥

---

१. तै० सं० ४. ७. ५.  २. तै० सं० ४. ७. १५.  ३. तै० सं० ४. ७. ४.
४. तै० सं० ४. ६. ९.  ५. तै० सं० ४. ४. ४.  ६. तै० सं० २. ४. १४.
७. तै० सं० १. १. १२.  ८. तै० सं० ५. ६. ६.  ९. तै० सं० २. ५. ११.
१०. तै० सं० ५. ४. १२.  ११. स इति पाठः।  १२. तै० सं० ६. २. ३.
१३. तै० सं० ३. २. २.  १४. तै० सं० २. ३. १४.  १५. तै० सं० १. २. १४.

ङपूर्वः कस्सषोर्द्ध्वश्चेट्टनपूर्वश्च तो भवेत् ॥ १४९ ॥

ङकारपूर्वः ककार आगमस्स्यात् सकारपरः षकारपरो वा। यथा—'[1]प्रत्यङ्क्सोमो अतिद्रुतः' '[2]प्रत्यङ्क्षडहो भवति'। एवं पूर्व इति किम्? '[3]तथ्सवितुः' '[4]तथ्षोडशी'। एवं पर इति किम्? '[5]प्रत्यङ् होतारम्'। टन पूर्व इति। टकारपूर्वो नकारपूर्वो वा तकार आगमस्स्यात् सषकारपरः। यथा—'[6]षट्थ्सम्पद्यन्ते'। अत्र जटायां—षट्थ्सꣳसꣳषट्थ्षट्थ्सम्। '[7]विद्वान्थ्सोमेन यजते'। '[8]षष्ठे हन्नहन् थ्षष्ठे षष्ठे हन्'। एवं पूर्व इति किम्? '[9]यथ्समानेऽर्ध-मासे'। 'तथ्षोडश्यभवत्'। एवं पर इति किम्? '[10]षड्वा ऋतवः' '[11]तान् रुद्रा अब्रुवन्'। आगमा एते ॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
आगमप्रकरणम् ॥ ५ ॥

---

१. तै० सं० १. ८. २१.　२. तै० सं० ७. ४. २.　३. तै० सं० १. ५. ६.
४. तै० सं० ६. ६. ११.　५. तै० सं० १. ३. १.　६. तै० सं० ६. ६. ३.
७. तै० सं० ३ २. २.　८. तै० सं० ७. २. ८.　९. तै० सं० ७. १. ४.
१०. तै० सं० १. ५. ७.　११. तै० सं० ५. ५. २.

## लोपप्रकरणम् ॥ ६ ॥

### लोपो विसर्गस्सोऽनिङ्ग्यस्स्य उच्चोऽथैष चेद्धलि ॥ १५० ॥

अथेत्ययमधिकारः । लोप उच्यत इत्यधिकृतं वेदितव्यम् । न विद्यते इङ्ग्यं यस्य सोऽनिङ्ग्यः । इङ्ग्योऽवयवो न स्यादित्यर्थः । तथाभूतः स इति शब्दः, उदात्तः स्यः- एषः- एषु पदेषु विसर्जनीयो लुप्यते हलि परे-व्यञ्जने परे सति । यथा—'[1]स रिषः पा तु नक्तम्' । अनिङ्ग्य इति किम् ? '[2]अदादि' इति वचनात्-'[3]हृथ्स्वसो मयो भूत्' इत्यत्र विसर्जनीयस्य लोपे प्राप्ते तन्मा भूदिति । '[4]एष स्य वाजी' । उच्च इति किम् ? '[5]अस्त्वथेमव स्य वरे' '[6]एष ते गायत्रः' । एवं पर इति किम् ? '[7]स इधानः' '[8]एष उपतिष्ठते' ॥

### एनौषधीरिद्विदग्न इमान्नः परतश्च सः ॥ १५१ ॥

एना-ओषधीः-इदु-इदग्ने-इमान्नः-इत्येवं परः स इत्यत्र विसर्जनीयो लुप्यते । यथा—'[9]सैनानीकेन' '[10]सौषधीरनु' '[11]सेदु होता' '[12]सेदग्ने अस्तु' । उ अग्ने इत्येताभ्यां किम् ? '[13]स इज्जनेन '[14]स इद्देवेषु' '[15]सोमान्नो हव्यदातिम्' । न इति किम् ? '[16]स इमामभ्यमृशत' । स इति किम् ? '[17]परो दिवा पर एना' ॥

### मकारः पदमीं पूर्वश्चादौ व उच्चतुन्वधः ॥ १५२ ॥

ईमिति पदपूर्वो मकारो लुप्यते । परवचने चकारेण लोप इत्याकृष्यमाणेऽत्रापि सम्भवति । यथा—'[18]ई मन्द्रासु' । तत्पूर्वः किम् ? '[19]इमम्मे वरुण' ।

---

१. तै० सं० १. २. १४.

२. सू० ८३. अस्मिन् सूत्रे यत्कार्यं विहितं तत्पदस्य, न तु पदैकदेशस्य । 'अनिङ्ग्य' इति पदानुपादाने 'हृथ्स्वसो मयोऽभूत्' इत्यादावनिष्टं स्यात् । अतः 'अनिङ्ग्यः' इति ।

३. तै० सं० ४. २. ११. ४. तै० सं० १. ७. ८. ५. तै० सं० १. २. ३.
६. तै० सं० ३. २. १. ७. तै० सं० ४. ४. ४. ८. तै० सं० १. ५. ७.
९. तै० सं० ४. ३. १३. १०. तै० सं० ४. २. ३. ११. तै० सं० १. १.१४.
१२. तै० सं० १. २. १४. १३. तै० सं० २. ३. १४. १४. तै० सं० ४. १. ११
१५. तै० सं० ४. ६. ६. १६. तै० सं० ५. ५. २. १७. तै० सं० ४. ६. २.
१८. तै० सं० ४. १. ८. १९. तै० सं० २. १. ११.

पदमिति किम्? '[१]पृथिवीं मा हिꣳसीर्विश्मस्मै'। मकार इति किम्? '[२]ईङ्काराय'। [३]चादाविति। तुश्च नुश्च तुनू। उच्चौ-उदात्तौ तुनू अधः पूर्वौ यस्मादसौ उच्चतुन्वधः। चादौ [४]चादिगणे वः-वकारो लुप्यते उदात्ततुशब्दपूर्वो वा नुशब्दपूर्वो वा। यथा—'[५]स त्वै यजेत' '[६]इन्वा उपस्तीर्णम्'। उच्चाविति किम्? '[७]अनुवृत्र हत्यै' '[८]वा अन्वनु वै वा अनु'। अदादीति प्राप्तिः। एवं पूर्व इति किम्? '[९]तं वा एतम्'। चादाविति किम्? '[१०]वरुणस्तु तु वरुणो वरुणस्तु' '[११]विदुषो नु नु विदुषो विदुषो नु'। व्याकरणानुसारेणैवं प्रपञ्चितम्॥

## मश्चावग्रह इत्येकं या तिष्ठन्त्येकयोर्ध्वतः॥ १५३॥

इति शब्दपूर्वे एकमित्यस्मिन्नवग्रहे मकारो लुप्यते। अस्योर्ध्वतः परपदेन संहितायां सत्याम्। च शब्दो लोपमन्वादिशति मण्डूकप्लुतिन्यायेन। यथा—'[१२]पापीयान्थ्स्यादित्येकैकं तस्य'। अवग्रह इति किम्? '[१३]इत्येकमग्रेऽथ'। इति शब्दपूर्व इति किम्? '[१४]यदकेमेकꣳसम्भरेत्'। या तिष्ठन्तीति। तिष्ठन्ति शब्द पूर्वे एकयेत्यस्मिन्नवग्रहे या इत्याकारसहितो यकारो लुप्यते, अस्याप्यूर्ध्वपदेन संहितायां सत्याम्। यथा—'[१५]तिष्ठन्त्येकैकया स्तुतया'। तिष्ठतीति किम्?

---

१. तै० सं० ४. २. ९.  २. तै० सं० ७. १. १९.

३. सर्व लक्षणयां व्याख्यानं प्राय एवमेव। उ दा त्त नु शब्द स्योदाहरणान्तरं दत्तम्—'तै त्वाव' ( ७. ५. ७. ) इति।

४. मूलशास्त्रे 'चादयोऽसत्वे' ( पा. सू. १. ४. ५७. ) इति चादीनां निपातसंज्ञा। ततश्च 'स्वरादि निपातमव्ययम्' ( पा० सू० १. १. ३७. ) इति तेषामव्ययसंज्ञा। ते न चादौ वः इत्यस्याव्ययसंज्ञको वकार इत्यर्थः। तस्यैव लोप इत्यर्थात्प्रत्युदाहरण-वाक्येष्विष्टरूपसिद्धिः।

५. तै० सं० २. ६. ३.  ६. तै० सं० १. ६. ७.  ७. तै० सं० १. ६. १२.

८. तै० सं० १. ७. १.  ९. तै० सं० ५. ६. ९.  १०. तै० सं० ६. ६. ३.

११. तै० सं० १. ३. ३.

१२. तै० सं० ५. १. १. इत्येकमेकम् इति स्थिते इति शब्दपरे 'एकम्' इदमत्र मकारो लुप्यते। तथा चैकैकम् इति।

१३. तै० सं० ६. २. १.  १४. तै० सं० १. ६. ८.  १५. तै० सं० ७. ५. ८.

'[1]करोत्येकयैकयोत्सर्गम्'। '[2]अत्र पदान्तकार्यत्वेऽपि केवलपूर्वनिमित्तायुक्तकाले एतत्कार्यं न स्यात्, तन्मा भूदित्यूर्ध्वत इति गृह्यते। यथा—'एकैकं तस्य' 'एकैकया स्तुतया'। एवं शिक्षान्तरेऽपि 'भवेत्पदान्तकार्यञ्चेत्परवर्णेन संयुतम्' इति। यथा—'[3]सवने पशूꣳस्तृतीयसवने' '[4]देवरिषस्पाहि' इत्यादि॥

## रेफोष्मोर्ध्वोऽन्तगो मस्तु [5]नादौ संसाश्च रापरे॥ १५४॥

रेफश्च ऊष्मा च रेफोष्माणौ, तावूर्ध्वौ यस्मात्सः। अन्तगः-पदान्तगो मकारो लुप्यते रेफोष्मपरः। चशब्दो लोप इति बोधयति सिंहावलोकनन्यायेन। यथा—'[6]प्रत्युष्टꣳरक्षः' '[7]सꣳशितस्मे' '[8]तꣳषडहानि' '[9]द्यावापृथिवीभ्याꣳसा विश्वायुः' '[10]त्वꣳह यद्यविष्ठ्य'। तत्परः किम्? '[11]सोऽमुल्लोकम्'। अन्तग इति किम्? '[12]तस्मात्ताम्राः'। नादाविति। आदावित्यवग्रह इत्यर्थः। सं साम् इत्यनयोः पादयोरवग्रहे मकारः रापरे सति न लुप्यते। यथा–'[13]यस्य सम्म्राट्' '[14]प्रसम्म्राजम्' '[15]साम्म्राज्याय सुक्रतुः'। अवग्रह इति किम्? '[16]राज्ञे समनमत्' '[17]तोते रायस्सन्देवि' इत्यादौ जटायां मा भूत्। यथा—'राज्ञे सꣳसꣳ राज्ञे राज्ञे सम् रायस्सꣳसꣳरायो रायस्सम्' इति। रा इत्याकारसहितग्रहणेन किम्? '[18]मरुतस्सꣳरराणः'। संसामिति किम्? '[19]शꣳराजन्नोषधीभ्यः'। 'नार्षे संसामि'ति पाठान्तरे सति '[20]यासाꣳराजा' इत्यत्र पदत्वाभावात् कार्यं न स्यादित्युक्तम्॥

## वर्तमानस्स उत्पूर्वस्स्थस्तयोरित्यनोत्परे॥ १५५॥

उत्पूर्वयोः स्थ स्त शब्दयोः वर्तमानः सकारो लुप्यते अनोत्परे-ओकाराद्न्य-

---

१. तै० सं० ६. १. ९.

२. 'अत्र पदान्तकार्यत्वेऽपि कार्यं भाक्पदस्य पूर्वनिमित्तत्वकथनात्तदयुक्तकाले तत्कार्यं न स्यात्। तन्माभूदिति ऊर्ध्वत इति गृह्यते' इति सर्व०

३. तै० सं० ३. २. ९.    ४. तै० सं० १. ४. ४५.

५. नार्षे संसाञ्चरापरे इति पाठः।

६. तै० सं० १. १. ८.    ७. तै० सं० ४. १. १०.    ८. तै० सं० ५. ५. २.

९. तै० सं० १. १. ३.    १०. तै० सं० २. ६. ११.    ११. तै० सं० १. ५. ९.

१२. तै० सं० ६. ४. २.    १३. तै० सं० २. ३. १४.    १४. तै० सं० १. ६. १२.

१५. तै० सं० १. ८. १६.    १६. तै० सं० ७. ५. २३.    १७. तै० सं० १. २. ५.

१८. तै० सं० ४. ६. ९.    १९. तै० सं० ३. २. ३.    २०. तै० सं० ५. ६. १.

वर्णपरे सति। यथा—'[1]अथैकमुत्थानम्' '[2]उत्थिताय स्वाहा'। '[3]स्थानादुदुस्थानात्स्थानादुत्' '[4]प्रत्युत्तब्ध्यै' '[5]उत्तभान'। उत्पूर्वयोरिति किम्? '[6]जगत्स्था देवाः' अनोत्पर इति किम्? '[7]स्तोममुत्' इत्यत्र जटायां माभूत्। स्थस्तयोरिति किम्? '[8]स्वायुषोदुत्स्वायुषा स्वायुषोत्'। '[9]पुनरुत्स्यूतं वासः' इत्यत्रार्थावबोधकालेऽभिन्नपदत्वात् सस्य लोपो न स्यात्[10]। तस्माद् '[11]उपोत्थाय' इत्यत्र सकारलोपस्स्यात्। [12]इतिशब्दः प्रकारवाची॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
लोपप्रकरणम्॥ ६॥



---

१. तै० सं० ७. २. १. २. तै० सं० ७. १. १९. ३. तै० सं० ४. १. २.
४. तै० सं० ६. ६. ४. ५. तै० सं० ४. ६. ५. ६. तै० सं० २. १. ११.
७. तै० सं० १. ७. ११. ८. तै० सं० १. २. ८. ९. तै० सं० १. ५. २.

१०. ननु मूलशास्त्रे 'उदः स्थास्तम्भ्वोः पूर्वस्य' [पा. ८. ४. ६१] इति स्थास्तम्भ्वोरेव सकारस्य पूर्वसवर्णादेशपूर्वको लोपः स्मर्यते। इह तु 'व्यञ्जनपर, इति सामान्येनोक्तम्, ततोऽन्यस्यापि लोपः प्राप्नोति, 'पुनरुत्स्यूतं वासः' 'श्रित उत्स्नाति जनिता मतीनाम्' इति। नैष दोषः; न ह्यत्र मूलशास्त्रे प्रसिद्धं पदपरिमाणमिष्यते, अपि तु समाम्नानं प्रसिद्धमेव। तेन 'पुनरुत्स्यूतम्' इत्यत्रोच्छब्दस्य पदैकदेशत्वान्न प्रसङ्गः। नापि '[13]श्रित उत्स्नाति' इत्यत्र प्रसङ्गः, संहिताग्रन्थमात्रविषयत्वादस्य शास्त्रस्य इति 'उत्पूर्वस्सकारो व्यञ्जनपरः' (प्राति १. ५. ४.) इत्यत्र वैदिकाभरणे।

११. तै० सं० ७. ५. १०.

१२. इतिशब्दो लोपसमाप्तिं बोधयतीति पाठः। १३. तै० ब्रा० ३. ७. ७.

## वैकृतप्रकरणम् ॥ ७ ॥

### अथ वैकृतमाप्नोति पदासम्पूर्वमृत्स्वरम् ॥ १५६ ॥

अथेत्ययमधिकारः। वर्णः स्वरश्च विकारमापद्यत इत्यधिकृतं वेदितव्यम् इत उत्तरं यद्वक्ष्यामः। अयमधिकारो ह्रस्तस्वरविन्न्यासलक्षणपर्यन्तो विज्ञेयः। पदम् असं-पूर्वो यस्मात्सः ऋकारः अरु इति विकारं भजते। यथा—'[1]गृह्णाणा मसमत्यैं'। पदमिति किम् ? '[2]वहीह्येष समृध्यै' इत्यादावपि भवेत् तन्मा भूदिति। ऋदिति किम् ? '[3]असन्तृण्णे हि'।

### [4]विसर्गोऽवग्रहेष्वाशीस्सुवर्धूं रं परस्स षम् ॥ १५७ ॥

आशीः-सुवः-धूः-एष्ववग्रहेषु विसर्जनीयो रेफमेति। एभ्यः परो यदि वर्तते सः-सकारः तर्हि सोऽपि षं-षकारमाप्नोति। अत्र सकारस्य अकार आख्येति केचित्। यथा—'[5]इत्याशीर्षदयर्चा' '[6]सुवर्षाञ्जिह्वाम्' '[7]धूरुषाहावनश्रू'। अवग्रहेष्विति किम् ? '[8]देव सुवस्थते'। अत्र '[9]कखपेषम्' इत्यनेन 'आशीर्षदया' इत्यत्र षत्वम्, '[10]ऊष्माणमप्यघो षोर्ध्वं' इत्यनेन 'सुवर्षाम्' 'धूर्षाहौ' इत्यत्र सत्वञ्च प्राप्तं तदुभयभङ्गायायमारम्भः॥

### नकारश्शमियाच्चोर्ध्वो नैरयन्नाध्नुवन्नपि ॥ १५८ ॥
### एत्रास्मिन्ननड्वानायन् घृणीवान् वारुणानिति ॥ १५९ ॥

चकारपरो नकारः शकारमियात्। यथा—'[11]पितरश्च प्रयन्थ्सुवः' इत्यत्र जटायां, '[12]कर्णांश्चाकर्णांश्च' '[13]अहींश्च सर्वान्' '[14]ऋतूंश्च तस्य'।

---

१. तै० सं० ३. ३. ८   २. तै० सं० २. २. २.   ३. तै० सं० ६. २. ११.

४. 'अवग्रहेषु चाशीर्धूस्सुवोरं सः परश्च षम्' इति क्वचित्पाठः।

५. तै० सं० ६. २. ९.   ६. तै० सं० ४. ४. ४.   ७. तै० सं० १. २. ८.

८. तै० सं० १. ८. १०.   ९. सू० २०७.   १०. सू० २१६.

११. तै० सं० १. ५. ३.   १२. तै० सं० १. ८. ९.   १३. तै० सं० ४. ५. १.

१४. तै० सं० ७. १. ३.

चपर इति किम् ? '[१]ताञ्छन्दोभिः' नकार इति किम् ? '[२]शञ्च मे'। चकार ऊर्ध्वो यस्मात्सः चोर्ध्वः। नैरयन्निति। '[३]ऐरयन्' '[४]आध्नुवन्' '[५]एवास्मिन्' '[६]अनड्वान्' '[७]आयन्'-'[८]घृणीवान्' '[९]वारुणान्'-एषु नकारः शकारं नेयाच्चपरोऽपि। यथा—'यामैरयञ्चन्द्रमसि' 'आध्नुवञ्चरुणास्मिन्' 'एवास्मिञ्चक्षुर्धत्तः'। एवेति किम् ? 'आध्नुवन्न स्मिग्ँ्श्चामुष्मिग्ँ्श्च'। 'अनड्वाञ्च मे धेनुश्च मे' '[१०]लोकमायञ्चतस्रः' '[११]चितीभ्यामुपायन्नुपायञ्चितीभ्याञ्चितीभ्यामुपायन्' '[१२]घृणीवाञ्चेतति त्मना' '[१३]वारुणाञ्चतुष्कपालान्निः'॥

**हकारः प्रथमादूर्ध्वस्तत्सस्थानश्चतुर्थकम् ॥ १६० ॥**

प्रथमात्परो हकारः तत्सस्थानं-तस्य प्रथमस्य सस्थानं समानस्थानं चतुर्थं भजते। यथा—'[१४]अर्वाग्घ्येनम्' '[१५]सरड्ढवै' '[१६]तद्धिरण्यम्'। प्रथमादिति किम् ? '[१७]प्रत्यङ् होतारम्'। हकार इति किम् ? '[१८]वाक्ते'।

**स्पर्शपूर्वश्शकारश्छं लन्तश्चाप्नोति लोत्तरः ॥ १६१ ॥**

स्पर्शः पूर्वो यस्मात्सः स्पर्शपूर्वः शकारः छकारमेति। यथा—'[१९]तच्छंयोः' '[२०]अनुष्टुप्छारदी' '[२१]अदित्याञ्छ्मश्रुभिः'। तत्पूर्वः किम् ? '[२२]आशुश्शिशानः'। पदसंहितोक्तत्वात् '[२३]विसृपो विरप्शिन्' इत्यत्र शस्य छत्वं न स्यादेव। लन्त इति। लकार उत्तरो यस्मादसौ लोत्तरः तकारो तकारमाप्नोति। यथा—'[२४]यल्लोहितं परापतत्'। लपर इति किम् ? '[२५]तद्व्रजतम्'॥

**तवर्गश्चटवर्गाद्यौ [२६]भजेदन्तोऽन्तमूर्ध्वयोः ॥ १६२ ॥**

---

१. तै० सं० १. ५. ९. २. तै० सं० ४. ७. ३. ३. तै० सं० १. १ ९.
४. तै० सं० ५. ५. १. ५. तै० सं० २. २. ९. ६. तै० सं० ४. ७. १०.
७. तै० सं० ५. २. ३. ८. तै० सं० ३. ५. ११. ९. तै० सं० १. ३. १२.
१०. तै० सं० ५. २. ३. ११. तै० सं० ५. ७. ५. १२. तै० सं० ३. ५. ११.
१३. तै० सं० २. ३. १२. १४. तै० सं० ६. ३. ३. १५. तै० सं० ५. ३. १२.
१६. तै० सं० ६. १. ७. १७. तै० सं० ६. ३. १. १८. तै० सं० १. ३. ९.
१९. तै० सं० २. ६. १०. २०. तै० सं० ४. ३. २. २१. तै० सं० ५. ७. १२.
२२. तै० सं० ४. ६. ४. २३. तै० सं० १. १. ९. २४. तै० सं० २. १. ७.
२५. तै० सं० १. ५. १. २६. अन्तोऽन्त्यमिति पाठः।

चवर्गश्च टवर्गश्च चटवर्गौ, तयोराद्यौ प्रथमौ चकारटकारौ भजेत्तवर्गः। द्विवचनेन तयोः चटवर्गयोः परयोस्सतोः। यथा—'[1]तच्चाद्दुः' '[2]तच्छन्दसाम्'। '[3]तज्जयानाम्' अत्र तकारस्य जत्वं स्यात् '[4]तृतीयं घोषवत्परः' इति। तत्परयोः किम्? '[5]यत्कामास्ते' '[6]यन्मेहति'। अन्तोऽन्तमिति। अस्य तवर्गस्यान्त उत्तमो नकारः चवर्गान्तं ञकारं टवर्गान्तं णकारञ्च भजते चटवर्गयोः परयोः। यथा—'[7]अपरूपमात्मञ्जायते'। अत्र शत्वनिषेधभाक् चपरोऽपि नकारोऽनेन विषयीक्रियते। यथा—'यामैरयञ्चन्द्रमसि' 'तावेवास्मिञ्चक्षुर्धत्तः' 'वारुणाञ्चतुष्कपालान्' तत्परयोः किम्? '[8]तान् कल्याणी' '[9]इमान् भद्रान्'॥

## नकारो लपरस्तस्य सवर्णमनुनासिकम् ॥ १६३ ॥

लकारपरो नकारः तस्य लकारस्य सवर्णमनुनासिकम् अनुनासिकविशिष्टवर्णं भजते। यथा—'[10]अमुष्मिँल्लोके'। नन्वनुनासिकमित्यनेन सानुनासिकमिति कथमुपलभ्यते? उच्यते नितरां परिहारः–यतो धर्मवाचकश्शब्दो धर्मिणमपि कथयति। यथा—शुक्लः पटः, नीलमुत्पलम् इत्यादि॥

## [11]स्पर्शोत्तरो मकारस्तु यवलोत्तर एव च ॥ १६४ ॥
## अनुनासिकमेतेषां सवर्णं प्रतिपद्यते ॥ १६५ ॥

उष्मान्त्यस्पर्शपरो मकारः, यश्च वश्च लश्च ते उत्तरे यस्मात्सः मकारश्चैतेषां स्पर्शयवलानां सवर्णमनुनासिकं भजते। यथा—'[12]यङ्कामयेत' '[13]शञ्च मे' '[14]कण्डूयते'। नन्वत्र पदसंहितोक्तेऽपदान्तनित्यणकारोदाहरणं कथमुपयुज्यते? उच्यते—परत्रास्य लक्षणाभावाद्वर्णसंहिताया अप्येतदेव लक्षणमिति ज्ञापनार्थ-

---

१. तै० सं० ७. १ ५.    २. तै० सं० ५. ६. ६.    ३. तै० सं० ३. ४. ४.

४. सू० १९५.    ५. तै० सं० ३. २. ५.    ६. तै० सं० ७. ५. २५.

७. तै० सं० ३. ५. ७.    ८. तै० सं० ७. ४. ८.    ९. तै० सं० १. ६. ३.

१०. तै० सं० ३. ३. ८.

११. स्पर्शोर्ध्वो यवलोर्ध्वो मस्तेषामेत्यनुनासिकम् इति पाठः।

१२. तै० सं० १. ७. १.    १३. तै० सं० ४. ७. ३.    १४. तै० सं० ६. १. ३.

मिति। '[१]तन्ते दुश्चक्षाः' '[२]सम्पाद्योत्तमे' '[३]संयत्ताः' '[४]संवत्सरम्' '[५]इमँल्लोकम्' ॥

**ज्ञघ्नोत्तरो मकारश्चेदनुस्वारोऽत्र केवलः ॥ १६६ ॥**

**द्विमात्र इति विज्ञेयो ह्यन्यधर्मविवर्जितः ॥ १६७ ॥**

पदन्तो '[६]मकारोऽनुस्वार इति विज्ञेयः ज्ञ इति घ्न इति वा शब्दपरश्चेत् । स चानुस्वारः केवलस्स्यात् । एषोऽनुस्वारस्तु-अन्यधर्मविवर्जित इत्युक्तः ।

---

१. तै० सं० ३. २. १०.  २. तै० सं० ७. ५. ३.  ३. तै० सं० १. ५. १.
४. तै० सं० २. २. ६.  ५. तै० सं० १. ५. ४.

६. ज्ञघ्नपरः पदान्तो मकारोऽनुस्वारो भवति । स च केवलो विज्ञेयः । केवल इत्यनेन गकारसंयुतत्वन्निवर्त्यते । अस्य च कियन्मात्रत्वमित्याशङ्कायामाह-द्विमात्र इति । द्वित्वं द्वित्वनिमित्तता चेति द्वावप्यन्यधर्मौ । तौ च ह्रस्वपूर्वस्यैव सङ्गच्छेते । स एव द्विमात्रो भवतीति विज्ञेयः । तथा सति ज्ञघ्नपरः ह्रस्वात्परश्च केवलानुस्वारोऽन्यधर्मविवर्जितस्सन् द्विमात्रो भवतीति विज्ञेय इत्यन्वयश्च स्पष्टो भवति । दीर्घपूर्वस्य तु-अन्यधर्मप्राप्तियोगात् ।

'मात्राद्द्विमात्रोऽनुस्वारो द्विमात्रान्मात्र एव तु ।
मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपवत्'' ॥

इति शिक्षान्तरोक्तमेकमात्रत्वमेव । यथा—'[७]सं (२) ज्ञानम्' '[८]न किष्टं (२) घ्नन्ति' इत्यादौ द्विमात्रो भवति । '[९]ज्ञात्रं प्रजानाम्' इत्यत्र विलोमे एकमात्रो भवति ।

'न किष्टं घ्नन्ति संज्ञानं [१०]प्रियं ज्ञातिं तथैव च ।
'[११]धूङ्क्ष्णा '[१२]दङ् क्ष्णव इत्यत्र ह्यनुस्वारो विधर्मकः' ॥

इति शिक्षान्तरवचनस्य '[१३]रक्षाꣳसि वा इमं (२) घ्नन्ति' '[१४]एतया सं (२) ज्ञान्या' इत्यादावव्याप्तेः 'ज्ञघ्नोत्तर' इत्यस्यैव वचनस्य प्रमाण्यात्तद्वचनमनादरणीयम् । नन्वेवं व्याख्याने-'अनुस्तरणीं घ्नन्ति' इत्यादौ कथमिति चेत्, उच्यते-'ज्ञघ्नोत्तर' इति ज्ञशब्दसमभिव्याहारात् घ्नपरस्याप्यवर्णपूर्वत्वं विवक्षितम् । न तत्रावर्णेतरपूर्वत्वं सम्भवतीति दिक्' इति सर्व० ।

७. तै० सं० ५. २. ३.  ८. तै० सं० २. १. ११.  ९. तै० सं० ७. २. ४.
१०. तै० ब्रा० १. ६. ५.  ११. तै० सं० ५. ५. १९.  १२. तै० सं० ४. ४. ३.
१३. तै० सं० २. ४. १.  १४. तै० सं० २. २. ११.

धर्माश्च गकारसंयुतिः' द्वित्वम् द्वित्वनिमित्तता च। तर्ह्यत्रानुस्वार इति किमुच्यते? अं इत्यनुस्वारः द्विमात्रकालश्च तदुभयसम्भवादत्राप्यनुस्वार इति ब्रूमः। यथा— 'अथो सं (२) ज्ञान एव' 'अनुस्तरणीं (२) घ्नन्ति'। ज्ञ न आभ्यां किम्? वाहुञ्ज्यायाः' 'तं घोदग्निः'। अनेनास्य केवलानुस्वारस्यैकमात्र उच्यते। यथा— '[1]परमात्मं (१) सरूपम्'॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
वैकृतप्रकरणम् ॥ ७ ॥



१. तै० उ० ४. ३३.

## षत्वप्रकरणम् ॥ ८ ॥

### अथेतस्सविसर्गौ षं पदि मह्योहि मो द्यवि ॥ १६८ ॥
### [1]सोदिव्ययं कमूप्रोत्री पूर्वोऽवग्रहपूर्वकः ॥ १६९ ॥

अथेत्ययमधिकारः । सकारश्च विसर्गश्च षकारमाप्नुत इत्येतदधिकृतं वेदितव्यमित उत्तरं यद्वक्ष्यामः । पदि-महि-ओहि-मो द्यवि-सोदिवि-अयं कम् इति पदद्वयपूर्वं उ इति पदम्-ऊ-प्रो-त्री एवं पूर्वश्च-इङ्गयादिभागपूर्वश्चेत्यर्थः सकारष्षकारमापद्यते । यथा—'[2]पदिषिताम्' '[3]महिषद्युमन्नमः' '[4]अपोहि ष्ठा मयो भुवः' । ओ इति किम् ? '[5]न हि स्व स्व(ं)हिनस्ति' '[6]मोषूण इन्द्र' '[7]य उप द्यवि ष्ठ' '[8]स्वानासो दिवि पन्तु' । सो इतो किम् ? '[9]इतो दिवि सोमः' '[10]अयमुष्य प्रदेवयुः' '[11]कमुष्विदस्य सेनया' । आभ्यां किम् ? '[12]तदु सोमः' '[13]ऊर्ध्व ऊषुणः' '[14]प्रोष्वस्मै' '[15]त्रिपधस्था' '[16]शुचिषद्वसुः' '[17]अया विष्ठा जनयन्' '[18]गो ष्टोमं द्वितीयम्' ॥

### असिञ्चन्नसदामापि ह्यनयोरादिपूर्वके ॥ १७० ॥

असिञ्चन् असदाम-अनयोस्सकारः षकारं भजते आदिपूर्वके-अवग्रहपूर्वं सति । यथा —'[19]मित्रावरुणावभ्यषिञ्चन्' '[20]कामेन न्यषदामेति' । अवग्रहपूर्व इति किम् ? '[21]वर्मं प्रासिञ्चन्' । अवग्रहपूर्वत्वेऽपि अकारव्यवेत इत्ययमारम्भः, नन्वकारव्यवेत इत्येतावतैवालम् । कण्ठोक्त्या किम् ? उच्यते—'[22]हृत्स्वसो मयो भून्' इत्यादौ मा भूदिति ।

---

१. 'सोदिव्ययं कमूप्रोत्र्यादिपूर्वोऽसदामासिञ्चन्' इति पाठः । सान्निध्यादवग्रह इति लभ्यत इत्युक्तम् उत्तरवाक्यव्याख्यानावसरे तस्मिन् ग्रन्थे । एतेनानन्तरार्धमपि व्याख्यातम् ।

२. तै० सं० ४. ७. १५. ३. तै० सं० ३. २. ८. ४. तै० सं० ४. १. ५.
५. तै० सं० ५. १. ७. ६. तै० सं० १. ८. ३. ७. तै० सं० २. ४. १४.
८. तै० सं० १. २. १४. ९. तै० सं० ६. १. ६. १०. तै० सं० ३. ५. ११.
११. तै० सं० २. ६. ११. १२. तै० सं० ४. २. ८. १३. तै० सं० ४. १. ४.
१४. तै० सं० १. ७. १३. १५. तै० सं० ३. २. १. १६. तै० सं० ४. २. १.
१७. तै० सं० १. ७. १२. १८. तै० सं० ७. ४. ११. १९. तै० सं० १. ८. ११.
२०. तै० सं० ७. ५. २. २१. तै० सं० ५. ४. ३. २२. तै० सं० ४. २. ११.

## परि वि प्रति निर्ण्यध्यभि पूर्वो निहते पदे ॥ १७१ ॥

परि-वि-प्रति-निः-नि-अधि-अभि-एवं पूर्वो निहते-अनुदात्ते पदे-पदकाले, अनुदात्त इत्यर्थः। तत्र वर्तमानस्सकारः षकारं भजते। यथा—'[१]परिषिञ्चति' '[२]तत्प्रवाते विषजन्ति' '[३]इमं विष्यामि' '[४]प्रतिष्ठापयति कविः' '[५]राजन्थ्सोम प्रति' इत्यत्र विलोमे। '[६]निष्टनिहि दुरिता' '[७]निषसाद धृतव्रतः' '[८]सᳪं सादयति निहोता' अत्र विलोमे। '[९]वयो न सीदन्नधि' अत्र जटायाम्। '[१०]अभिष्याम पृथ्सुतीः' '[११]सुभनसस्सपेमाभि' अत्र विलोमे। तत्पूर्वः किम्? '[१२]समुद्रे सदने सीद' '[१३]बृहतश्शर्मणि स्याम्'। सर्वानुदात्त इति किम्? '[१४]विसीमतस्सुरुचः' '[१५]अभि सवना पाहि' '[१६]सोमगᳪं स्थापयति प्रति' अत्र विलोमे। '[१७]स्त्रिया निष्क्रीणामेति' अत्र व्युत्क्रमे॥

## तोर्ध्वो वेस्सुमतिर्माकिरीयुरायुर्नकिर्विदुः ॥ १७२ ॥
## प्रेसोऽग्निरविदुर्मीढुर्निराभिः पायुभिस्सधिः ॥ १७३ ॥

वेः-सुमतिः-माकिः-ईयुः-आयुः-नकिः-विदुः-प्रेपूर्वोऽग्निः-सःपूर्वोऽग्निः-अविदुः-मीढुः-निः-आभिः-पायुभिः-सधिः-एषु विसर्गः तकारपरष्षकारं भजते। '[१८]शोचे वेष्ट्वᳪं हि यज्वा' '[१९]सुमतिष्टे अस्तु' '[२०]अग्ने सा ते सुमतिः', अत्र विलोमे। सु इति किम्? '[२१]उपरि मतिस्तस्यै वाक्' '[२२]माकिष्टे व्यथिः' '[२३]ईयुष्टेये' '[२४]आयुष्ट आयुर्दाः' '[२५]भूतेभ्यस्त्वा विश्वायुः' अत्र विलोमे। '[२६]गौस्त्रिष्टुगायुः'

---

१. तै० सं० ५. ४. ४. २. तै० सं० ६. ४. ७. ३. तै० सं० १. १. १०.
४. तै० सं० ३. ५. ५. ५. तै० सं० २. ३. १४. ६. तै० सं० ४. ६. ६.
७. तै० सं० १. ८. १६. ८. तै० सं० ५. १. ४. ९. तै० सं० ४. १. ११.
१०. तै० सं० १. ४. ४६. ११. तै० सं० १. २. १४. १२. तै० सं० ४. ३. १.
१३. तै० सं० ४. १. ५. १४. तै० सं० ४. २. ८. १५. तै० सं० १. ४. १०.
१६. तै० सं० ३. १. २. १७. तै० सं० ६. १. ६. १८. तै० सं० ४. ३. १३.
१९. तै० सं० १. ४. ४५. २०. तै० सं० ४. २. ४. २१. तै० सं० ४. ३. २.
२२. तै० सं० १. २. १४. २३. तै० सं० १. ४. ३३. २४. तै० सं० २. ५. १२.
२५. तै० सं० १. २. १२. २६. तै० सं० ७. ५. १.

इत्यत्र विलोमे, पदग्रहणसामर्थ्यात् '[१]ऋद्रवती' ति निषेध एतद्विषयाभावान्न प्रसरति। यथा – 'त्रिष्टुगायुरायुष्ट्रिष्टुक्त्रिष्टुगायुः' '[२]नकिष्टं घ्नन्त्यन्तितः' '[३]विदुष्टर७ँसपेम' '[४]मेध्यश्च सप्ते, अग्निष्ठा' '[५]अविदुष्टरासः, अग्निष्टद्विश्वम्'। आभ्यां किम्? '[६]चरित्रायाग्निस्त्वाभि पातु' '[७]विदुषां देवा अविदुष्टरासः'। ननु-अदादीति वचनाद् अविदुरिति सिद्धे कण्ठोक्तिः किमर्था? उच्यते-अवग्रह इति निषेधं प्रत्यस्य दुर्बलत्वं स्यात्, तन्माभूदिति। '[८]मीढुष्टम शिवतम' '[९]निष्टपामि गोष्ठम्' '[१०]ताभिर्निर्णेनिक्ते' अत्र विलोमे। '[११]अभिष्टे अद्य गीर्भिः' '[१२]पायुभिष्ट्व७ँशिवेभिः'। पाग्विति किम्? '[१३]त्रिभिस्तिष्ठग्७ँस्तिष्ठति' '[१४]अफ्स्वग्ने सधिष्टव' '[१५]ऊष्माणमप्यघोषोर्ध्वं' इत्यस्य पुरस्तादपवादोऽयम्॥

**नावर्ण ह्ल्लिसौ मृत्युस्पति कुन्यृतु पत्न्यधः॥ १७४॥**

अवर्णपूर्वो व्यञ्जनपूर्वश्च-लिसौ-मृत्यु-स्पति-कुनि-ऋतु-पत्नी-एवं पूर्वश्च सकारष्षकारं नापद्यते। यथा—'[१६]अन्तरिक्षसद्धोता' '[१७]ऋक्सामे वै' '[१८]नैनम्मल्हिम्लु सेना' '[१९]मृत्युसंयुत इव' '[२०]बृहस्पतिसुतस्य ते इन्दो' '[२१]शकुनिसादेन रथम्' '[२२]ऋतुस्थास्तस्य' '[२३]पत्नीसंयाजानाम्'। एषामवग्रहपूर्वत्वात्प्राप्तिः॥

**ध्यन्यपूर्वस्सवस्थानमृद्रवत्यप्यवग्रहः॥ १७५॥**

सान्निध्यान्निषेधो लभ्यते। सव-स्थानं-अनयोस्सकारः धि इत्यस्मादन्यवर्णपूर्वः षकारं न भजते। सवेति पदैकदेशो बहूपादानार्थः। यथा—'[२४]अग्निसवश्चित्यः' '[२५]अनुसवनं पुरोडाशान्' '[२६]सवने सवनेऽभि' '[२७]गच्छ गोस्थानम्'।

१. सू० १७५. २. तै० सं० २. १. ११. ३. तै० सं० २. ५. १२.
४. तै० सं० ५. १. ११. ५. तै० सं० १. १. १४. ६. तै० सं० ४. २. ०.
७. तै० सं० १. १. १४. ८. तै० सं० ४. ५. १०. ९. तै० सं० १. १. १७.
१०. तै० सं० ७. २. १०. ११. तै० सं० ४. ४. ४. १२. तै० सं० १. ४. २४.
१३. तै० सं० ५. ४. १२. १४. तै० सं० ४. २. ३. १५. सू० २१६.
१६. तै० सं० १. ८. १५. १७. तै० सं० ६. १. ३. १८. तै० सं० ६. ३. २.
१९. तै० सं० १. ५. ९. २०. तै० सं० १. ४. २७. २१. तै० सं० ५. ६. १४.
२२. तै० सं० ५. ७. ६. २३. तै० सं० २. ६. १०. २४. तै० सं० ५. ६. २.
२५. तै० सं० ७. ५. ६. २६. तै० सं० ६. ६. ११. २७. तै० सं० १. १. ९.

ध्यन्यपूर्व इति किम् ? [1]'अधिषवणे जिह्वा' '[2]अधिष्ठानमारम्भणम्' । ऋद्रवतीति । ऋकारश्च रेफश्च ऋद्रौ, तावस्मिंस्त इति ऋद्रवत्, तस्मिन् पदे वर्तमानस्सकारः षत्वं न भजते । यथा—'[3]विसृजते शान्त्यै' । '[4]परिविप्रती' ति प्राप्तिः । अवग्रह इति । अवग्रहस्थस्सकारो विसर्गश्च षत्वं न भजते । अवग्रह इत्यवग्रहस्थो लक्ष्यते । मञ्चाः क्रोशन्तीत्यत्र मञ्चस्था यथा । यथा—'[5]तस्यां देवा अधिसंवसन्तः' [6]अभिसमगच्छन्तेति' '[7]सोमपीथेन व्यृध्यते' अत्र विलोमे ॥

सन्तानेभ्यः स्पशस्सीतं सप्ताभिस्संमितां स्तनाम् ॥ १७६ ॥
समेयस्सत्वा सस्यायै सक्सनिश्च सनीस्सनि ॥ १७७ ॥

चकारष्षत्वनिषेधमाकर्षति मण्डूकगतिन्यायेन । सन्तानेभ्यः-स्पशः-सीतं-सप्ताभिः-संमितां-स्तनां-सभेयः-सत्वा-सस्यायै-सक्-सनिः-सनीः-सनि-एषु पदेषु वर्तमानः सकारष्षत्वं न भजते । '[8]परिसन्तानेभ्यः स्वाहा' '[9]तनूपानः प्रतिस्पशः' '[10]अनुसीतं वपति' '[11]त्रिसप्ताभिः पशुकामस्य' '[12]वेदिसंमितां मिनोति' '[13]द्विस्तनां करोति' '[14]सु सभेयः' '[15]अभिसत्वा सहोजाः' '[16]सुसस्यायै सुपिप्पलाभ्यः' । सगिति पदैकदेशो बहूपादानार्थः । '[17]पश्चात्पृश्निसक्थो भवति' । '[18]पृश्निसक्थास्त्रयो हैमन्तिकाः' '[19]पृश्निसक्थाय स्वाहा' '[20]असि स्तनयित्नु सनिरसि' '[21]वृष्टिसनीरुपदधाति' '[22]तस्मादेतद्गोसनि' । एषामवग्रहपूर्वत्वात्प्राप्तिः । सन् इत्येतावतैव सिद्धे किमखिलपाठेन ? '[23]वा एषोऽभिषण्णः' '[24]निषण्णाय स्वाहा' इत्यादौ मा भूदिति ॥

[25]न स्तुप् स्तरीस्स्वरुस्स्पर्धास्स्फुरं साहस्रसारथिः ॥ १७८ ॥

---

१. तै० सं० ६. २. ११. २. तै० सं० ४. ६. २. ३. तै० सं० १. ७. ६.
४. सू० १७१. ५. तै० सं० ३. ५. १. ६. तै० सं० २. ५. ३.
७. तै० सं० २. ३. २. ८. तै० सं० ७. ४. २१. ९. तै० सं० ५. ७. ३.
१०. तै० सं० ७. २. ५. ११. तै० सं० ५. २. ६. १२. तै० सं० ५. ६. ८.
१३. तै० सं० ५. १. ६. १४. तै० सं० ७. १. ८. १५. तै० सं० ४. ६. ४.
१६. तै० सं० १. २. २. १७. तै० सं० २. १. ३. १८. तै० सं० ५. ६. २०.
१९. तै० सं० ७. ३. १८. २०. तै० सं० ४. ४. ६. २१. तै० सं० ५. ३. १०.
२२. तै० सं० ७. ५. २. २३. तै० सं० २. ४. २. २४. तै० सं० ७. १. १९.
२५. न स्तुप् स्तरीमस्वरू स्पर्धा इति पाठान्तरम् ।

स्तुप्-स्तरी-स्वर-स्पर्धा-स्फुरं-साहस्र-सारथिः-एषु पदेषु वर्तमानस्सकारः '[१]नावर्ण हल्' '[२]ऋद्रवति' इति चोक्तं निषेधं नैति। किन्तु षत्वं प्रतिपद्यत इति '[३]प्रतिप्रसवार्थोऽयं नकारः। यथा—'[४]सष्टुपूछन्दः' '[५]सुष्टरी मा जुषाणा' '[६]अम्ब निष्वर' '[७]विष्पर्धाश्छन्दः' '[८]विष्फुरन्ती अमित्रान्'। अदन्तग्रहणं साहस्रशब्द-स्यानेकार्थम् '[९]द्विषाहस्रं चिन्वीत' '[१०]त्रिषाहस्रो वै' '[११]कामयेत सुषारथिः'। एषामवग्रहपूर्वत्वात्प्राप्तिः। तृतीयस्य तु '[१२]परिविप्रति' इति प्राप्तिः॥

## ज्योतिरायुश्चतुः पूर्वः स्तो प्रतिप्रसवस्त्विति ॥ १७९ ॥

ज्योतिः-आयुः-चतुः-एवं पूर्वः स्तो इत्यत्र सकारो हल्-पूर्व इति निषेधं नैति। किन्तु षत्वमेव भजतीत्यर्थः। यथा—'[१३]ज्योतिष्टोमं प्रथमम्' '[१४]आयुष्टोमं तृतीयम्' '[१५]चतुष्टोमो अभवत्'। एषामवग्रहपूर्वत्वात्प्राप्तिः। प्रतिप्रसव इति किम्? '[१६]स्तोमाय ज्योतिः' इत्यत्र विलोमे षत्वं स्यात्। तत्पूर्वः किम्? '[१७]यदृक्षणया स्तोमीयाः'। स्तो इति किम्? '[१८]चतुस्तनां करोति'। इति शब्दः प्रकारवाची॥

## टन्तो वाघाषपूर्वष्षात्थाकारश्चैव ठं भजेत् ॥ १८० ॥

वाघा इति पूर्वः षकारपूर्वश्च तकारः टकारं भजेत्। यथा–'[१९]दार्वाघाटस्ते'। वेति किम्? '[२०]प्रघात आदित्यानाम्' '[२१]आयुष्टे'। षादिति। षकारात्परः थकारः ठकारं भजते। यथा—'[२२]गोष्ठं मा निर्मृक्षम्'। तत्पूर्वः किम्? '[२३]गच्छ गोस्थानम्'॥

---

१. सू० १७४. २. सू० १७५

३. प्रतिषिद्धं प्रसूत इति प्रतिप्रसवः। निषिद्धस्य पुनर्विधानमिति यावत्।

४. तै० सं० ४. ३. १२. ५. तै० सं० ५. १. ११. ६. तै० सं० १. ४. १.

७. तै० सं० ४. ३. १२. ८. तै० सं० ४. ६. ६. ९. तै० सं० ५. ६. ८.

१०. तै. सं. ५. ६. ८. ११. तै. सं. ४. ६. ६. १२. सू० १७१.

१३. तै० सं० ७. ४. ११. १४. तै० सं० ७. ४. ११. १५. तै० सं० ४. ३. ११.

१६. तै० सं० ७. १. २. १७. तै० सं० ५. ३. ३. १८. तै० सं० ५. १. ६.

१९. तै० सं० ५. ५. १५. २०. तै० सं० ६. १. १. २१. तै० सं० १. ३. १४.

२२. तै० सं० १. १. १०. २३. तै० सं० १. १. ९.

विद्वांस्तांस्त्रीनृतून् लोकांस्तर्हांस्तस्मिन् पितृननान् ॥ १८१ ॥
युष्मानूर्ध्वानश्मन् कृण्वन् कपालानम्बकानपि ॥ १८२ ॥
तिष्ठन्नाद्युच्चके नेमिर्देवांश्चेत्सवने पशून् ॥ १८३ ॥
नकारः प्राकृतश्चैषु नित्यतोर्ध्वस्समाप्नुयात् ॥ १८४ ॥

विद्वान्-तान्-त्रीन्-ऋतून्-लोकान्-तर्हान्-तस्मिन्-पितॄन् - अनान् - युष्मान्-ऊर्ध्वान् - अश्मन् - कृण्वन्-कपालान्-अम्बकान्-आद्युदात्तस्तिष्ठन्-नेमिर्देवान्-सवने पशून्-एषु पदेषु प्राकृतो नकारः नित्यतकार ऊर्ध्वो यस्मादसौ नित्यतोर्ध्वस्सन् सकारं भजते। यथा–'[1]य एवं विद्वाꣳस्त्रैधातवीयेन' अदादीति [2]वचनात् '[3]तामविद्वान-विद्वाꣳस्तां तामविद्वान्' '[4]ताꣳस्ते दधामि' '[5]तेन ताꣳस्ताꣳस्तेन तेन तान्' '[6]त्रीꣳस्तृचाननु' '[7]त्रीन्लोकान्लोकाꣳस्त्रीꣳस्त्रीन्लोकान्' '[8]लोकाꣳस्त्रेधादुहत्' '[9]ऋतूꣳस्तन्वते' '[10]इमानेव लोकाꣳस्तीर्त्वा' '[11]शततर्हाꣳस्तृꣳहन्ति' '[12]तस्मिगꣳस्त्वा दधामि' 'तस्मिगꣳस्तस्मिगꣳस्त्वा' '[13]पितॄꣳस्तन्तुरिति' '[14]प्राणाꣳस्तस्यान्तर्यन्ति'। अत्र 'विकृतम्' इति वचनादेतत्सम्भवति। '[15]तत्प्रा-णाननु पर्यावर्तन्ते' अत्र विलोमे। '[16]युष्माꣳस्तेनु' '[17]यानूर्ध्वाꣳस्तान्' '[18]अश्मगꣳस्ते क्षुत्' '[19]पुनः कृण्वगꣳस्त्वा' '[20]द्वादश कपालाꣳस्तृतीयसवने, '[21]त्र्यम्बकाꣳस्तृतीयसवनम्' '[22]त्रिभिस्तिष्ठगꣳस्तिष्ठति' '[23]तिष्ठन्नन्वाह

---

१. तै० सं० २.४.११.

२. 'अदादीति वचनेऽपि 'यस्तामविद्वान्' इत्यत्रानार्षे जटामणिमूलकस्सकारादेशाभावः' इति सर्वलक्षणमञ्जरी। जटामणिवचनञ्च—

'यस्तामविद्वानित्यत्र ह्यनुस्वारागमो भवेत्।
अनार्षे नैव विज्ञेयोऽप्यकारादिति सङ्ग्रहः॥ इति।

३. तै० सं० ७. १. ७. ४. तै० सं० ४. १. १०. ५. तै० सं० ६. १. १.
६. तै० सं० २. ५. १०. ७. तै० सं० १. ७. ११. ८. तै० सं० २. ३. ६.
९. तै० सं० ४. ३. ११. १०. तै० सं० ३. ५. ४. ११. तै० सं० १. ५. ७.
१२. तै० सं० १. ५. ६. १३. तै० सं० ५. ३. ६. १४. तै० सं० ७. १. ३.
१५. तै० सं० ७. ४. ११. १६. तै० सं० ३. २. ५. १७. तै० सं० ३. १. ९.
१८. तै० सं० ४. ६. १. १९. तै० सं० ४. ७. १३. २०. तै० सं० ७. ५. ६.
२१. तै० सं० ३. २. २. २२. तै० सं० ५. ४. १२. २३. तै० सं० २. ५. ११.

तिष्ठन् हि' अत्र विलोमे। आद्युच्चक इति किम्? '[१]न प्रत्यतिष्ठन्ता वसुकः' अदादीति प्राप्तिः। '[२]नेमिर्देवाꣳस्त्वं परिभूः'। नेमिरिति किम्? '[३]वपय गच्छ देवान्त्वम्' '[४]सवने पशूꣳस्तृतीयसवने'। सवन इति किम्? '[५]प्रजां पशून्तेनावर्धत'। तपर इति किम्? '[६]तस्मिन् प्रजापतिः' '[७]लोकान्द्रविणावतः'। नित्य इति किम्? '[८]विद्वान्स्तोमेन'। अनित्योऽयं तकारः, यतः पदसमये नास्ति। प्राकृतो नकार इति किम्? '[९]तान्तेन शमयति'। वैकृतोऽयं नकारः, 'स्पर्शोर्ध्व' इति प्राप्तत्वात्॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
षत्वप्रकरणम्॥ ८॥



---

१. तै० सं० ५. ३. ६.    २. तै० सं० २. ५. ९.    ३. तै० सं० ३. १. ४.
४. तै० सं० ३. २. ९.    ५. तै० सं० ७. ४. ३.    ६. तै० सं० ७. १. ५.
७. तै० सं० ५. ३. ११.    ८. तै० सं० ३. २. २.    ९. तै० सं० ५. ७. ३.

## णत्वप्रकरणम् ॥ ९ ॥

**अथैति नो णमस्थूरि षु ग्रामोरु समिन्द्र वाः ॥ १८५ ॥**

**[1]धिसुवस्त्रिटपूर्वो निष्पूर्वो हन्योप्यमान च ॥ १८६ ॥**

अथेत्ययमधिकारः। नकारो णकारमापद्यत इत्यधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः। अस्थूरि-षु-ग्राम-उरु-समिन्द्र-वाः-धिसुवः-त्रि-टकारः एवं पूर्वो निष्पूर्वश्च नकारो णकारमापद्यते। यथा—'[2]अस्थूरिणो गार्हपत्यानि' '[3]ऊषुणस्स-दक्षासः' '[4]धर्ता गृहेषु नः' इत्यत्र णत्वन्न स्यात् '[5]पदं मानो यदाषु साम्' इति वचनात्। षु इति ह्रस्वग्रहणं दीर्घस्याप्युपलक्षणम्। यथा—'[6]मोपूण इन्द्र'। षु-षू इत्यनयोर्यदा षत्वन्नास्ति तदा णत्वनिषेधार्थं वैकृतग्रहणम्। यथा—'[7]ऊषुणः, सु नः' 'मोषूणः मो इति मो सु नः'। अनेनात्र पदद्वयनिमित्तेनापि कार्यं स्यादिति विज्ञेयम्। '[8]ग्रामणीयं प्राप्नुवन्ति' '[9]उरुणस्कृधि' '[10]समिन्द्र णो मनसा'। समिति किम्? '[11]वर्तयेन्द्र नर्दबुद' '[12]तस्माद्वार्णामवोहितम्' '[13]कृधिसुवर्ण शुक्रम्'। धीति किम्? '[14]अर्वाङ्ख्सुवर्न ज्योतिः' '[15]त्रिणवस्तोमः' '[16]षण्णवत्यै स्वाहा' '[17]न आनडानण्णो न आनट्' '[18]ताभिर्निर्णेनिक्ते' '[19]निर्वपेद्वपेन्निर्णिर्व-पेत्'। विसर्गेण किम्? '[20]नि नो रयिम्'। हन्येति। चकारो निष्पूर्वत्वसन्वादि-शति। निश्शब्दात्परयोः हन्य-उप्यमान इत्यनयोर्नकारो णकारमापद्यते। यथा—'[21]योनेर्गर्भन्निर्हण्यात्' '[22]निरुप्यमाणमभिमन्त्रयेत'। अन्वादेशः किमर्थः? '[23]न निहन्यान्न लोहितम् ॥

---

१. 'धिसुवस्त्रिटकारो निष्पूर्वो हन्योप्यमान च' इति पाठान्तरम्।

२. तै० सं० ५. ७. २. ३. तै० सं० ४. ६. ५. ४. तै० सं० २. ४. ५.
५. सू० ६. तै० सं० १. ८. ३. ७. तै० सं० ४. १. ४.
८. तै० सं० ७. ४. ५. ९. तै० सं० २. ६. ११. १०. तै० सं० १. ४. ४४.
११. तै० सं० ३. ३. १०. १२. तै० सं० ५. ६. १. १३. तै० सं० २. २. १२.
१४. तै० सं० ४. ४. ४. १५. तै० सं० ४. ३. ९. १६. तै० सं० ७. २. १५.
१७. तै० सं० १. ८. १०. १८. तै० सं० ७. २. १०. १९. तै० सं० २. २. १.
२०. तै० सं० २. २. १२. २१. तै० सं० ५. ६. ९. २२. तै० सं० १. ६. ८.
२३. तै० सं० २. ६. १०.

## पारी परि प्र पूर्वश्च तदवर्णव्यवेतकः ॥ १८७ ॥

पारी-परि-प्र एवं पूर्वश्च नकारो णत्वं भजते। यथा—'[१]पारीणह्यस्येशे' '[२]परिणो रुद्रस्य' '[३]न पातं परि तस्थुरापः' अत्र जटायाम्। '[४]वीरवन्तं परीणसम्' इति चोपलक्षणत्वात्। '[५]प्रणो देवी सरस्वती' '[६]न प्राभवत्' अत्र जटायाम्। तदवर्णेति। परि-प्र-एवं पूर्वः अवर्णव्यवेतकः-अवर्णव्यवहितोऽपि नकारो णत्वं भजते। यथा-'[७]देवतानां पर्यणयत्' '[८]पर्याणीयाहवनीयस्यान्ते'। '[९]विकृतश्च पद' इत्युक्तत्वात् इकारस्य यत्वेऽपि नकारस्य णत्वं स्यात्।'[१०]प्रायणाय स्वाहा'। '[११]अनर्वा प्रेहि' अत्र जटायाम्। '[१२]अनुप्राण्यात्'। अवर्णव्यवेतक इति किम्? [१३]परि सिनुयात्'॥

## प्राधो वन्नुह्यमानोऽयन् यानं यवेन वाहनः ॥ १८८ ॥

वन्-उह्यमानः-अयन्-यानं-यवेन-वाहनः-एषु ग्रहणेषु प्राधः-प्रपूर्वो नकारः णत्वं भजते। यथा—'[१४]यदि वा तावत्प्रवणम्' '[१५]सा वनस्पतीन् प्र' इत्यत्र विलोमे। '[१६]प्रावणेभिस्सजोषसः' इति चोपलक्षणत्वात्। '[१७]प्रोह्यमाणोऽधिपतिः'। अयन्निति पदैकदेशो बहूपादानार्थः। '[१८]प्रायणं प्रतिष्ठाम्' '[१९]तस्मादादित्यः प्रायणीयः' '[२०]प्रायणीयं कार्यम्' '[२१]याः प्रायणीयस्य' '[२२]तस्मात्प्रायणीयेऽहन्' '[२३]यस्य प्रायणमन्वन्ये' '[२४]प्रयवेण पञ्च' '[२५]प्रवाहणो वन्हिः' 'विकृतश्च' इत्यस्मादोत्वमापन्नेऽपि णत्वं स्यात्। प्राध इति किम्? '[२६]हव्यवाहनः श्वात्रः' '[२७]उदयनं वेद'॥

---

१. तै० सं० ६. २. १.　२. तै० सं० ४. ५. १.　३. तै० सं० २. ५. १२.
४. तै० सं० २. २. १२.　५. तै० सं० १. ८. २२.　६. तै० सं० ६. ६. ११.
७. तै० सं० २. ३. ४.　८. तै० सं० ७. १. ६.　९. सू० ८३.
१०. तै० सं० ७. १. १९.　११. तै० सं० १. ३. ८.　१२. तै० सं० ५. ५. ५.
१३. तै० सं० ५. २. ६.　१४. तै० सं० २. ४. १२.　१५. तै० सं० ६. १. ४.
१६. तै. सं. ४. २. ४.　१७. तै० सं० ४. ४. ९.　१८. तै० सं० १. ६. ११.
१९. तै० सं० ६. १. ५.　२०. तै० सं० ६. १. ५.　२१. तै० सं० ६. १. ५.
२२. तै० सं० ७. २. ८.　२३. तै० सं० ४. १. १.　२४. तै० सं० ४. ३. ११.
२५. तै० सं० १. ३. ३.　२६. तै० सं० १. ३. ३.　२७ तै० सं० १. ६. ११.

## षुम्नान्योऽनित्यषत्वस्थ इन्द्रोऽध एनमत्र च ॥ १८९ ॥

षुम्नादन्यः-षुम्नान्यः, अनित्यं षत्वं यस्मिन् पदे तदनित्यषत्वम् । तस्मिन् तिष्ठतीति अनित्यषत्वस्थो नकारो णत्वं भजते। यथा—'[1]अधिषवणमसि' '[2]अभिषुणुयाद्यदाप्याययति' '[3]अभिपूयमाणस्य'। षुम्नान्य इति किम्? '[4]सुषुम्नस्सूर्यरश्मिः'। अनित्यषत्वस्थ इति किम्? '[5]युष्मानीतः'। इन्द्रोऽध इति। इन्द्र पूर्व एनमित्यत्र नकारो णत्वं भजते। यथा—'[6]इन्द्र एणं प्रथमः' '[7]तृप्त एवैनमिन्द्रः' अत्र जटायाम्। एवं पूर्व इति किम्? '[8]रुद्र एनं भूत्वा'। एनमिति किम्? '[9]इन्द्रो नेषत्' ॥

## केनेत्यत्रायजुः पूर्वो नृश्रीपूर्वो मना अपि ॥ १९० ॥

अयजुरित्येवं पूर्वः केनेत्यस्मिन् पदे नकारो णत्वं भजते। यथा—'[10]यदयजुष्केण क्रियते'। एवं पूर्व इति किम्? '[11]ब्रह्मवादिनः केन'। नृश्रीति। नृ श्री एवं पूर्वो मना इत्यस्मिन् पदे नकारो णत्वं भजते। यथा—'[12]नृमणा अजस्रम्' '[13]श्रीमणाश्शतपयाः'। एवं पूर्व इति किम्? '[14]सुमना उपागहि' ॥

## अङ्गानां ग्यानि गान्योने गानां यामेन षण्ण च ॥ १९१ ॥

अङ्गानां-ग्यानि-गानि-ओने-गानां-यामेन-षण्ण एषु इङ्ग्यान्तेषु सावग्रहेषु नकारो णत्वं भजते। यथा—'[15]यत्त्र्यङ्गाणाꣳसमवद्यति' '[16]सुवर्गाण्यासन्' '[17]सनः पर्षदति दुर्गाणि विश्वा' '[18]मीढुषे दुरोणे' '[19]पुरोगाणाञ्चक्षुषे' '[20]अन्तर्यामेणान्तरधत्त' '[21]अभिषण्णो यस्मात्' '[22]निषण्णा आसन्'। षण्ण [23]इत्यस्य 'षुम्नान्य' इति णत्वे प्राप्ते पुनरुक्तं प्रतिप्रसवार्थम्, 'नकारो द्वित्वगो लक्ष्यादि'ति निषेधात् ॥

---

१. तै० सं० १. १. ५. २. तै० सं० ३. ५. २. ३. तै० सं० ३. १. ८.
४. तै० सं० ३. ४. ७. ५. तै० सं० २. १. ११. ६. तै० सं० ४. ६. ७.
७. तै० सं० २. ५. ४. ८. तै० सं० ३. ४. १०. ९. तै० सं० ५. ७. २.
१०. तै० सं० ५. १. २. ११. तै० सं० ७. ४. १०. १२. तै० सं० १. ३. १४.
१३. तै० सं० ४. ६. ३. १४. तै० सं० ३. ३. ११. १५. तै० सं० ६. ३. १०.
१६. तै० सं० ५. ३. ५. १७. तै० सं० १. १. १४. १८. तै० सं० ३. ३. ११.
१९. तै० सं० ३. २. ४. २०. तै० सं० ६. ४. ६. २१. तै० सं० २. ४. २.
२२. तै० सं० ७. ५. २.
२३. ननु 'अनित्यषत्वस्थ' इति प्राप्तौ सत्यामत्र पुनरुक्ततया गौरवं स्यादिति चेत्— द्वितीयनकारस्य प्राप्त्यभावे तदर्थं षण्णेति गृह्यत इति क्वचित्पाठः।

रपः पूर्वो हवन्यन्हे हन्त्रुपूर्वो मयान्यनी ॥ १९२ ॥

हवनी-अन्हे-हन्-एषु नकारः र इत्येवं पूर्वः षपूर्वश्च णकारं भजते। यथा—'[1]अग्निहोत्रहवणी च' '[2]शरद्यपराह्णे'। हन्निति पदैकदेशोऽनेकार्थः। '[3]रक्षोहणः, रक्षोहणौ' '[4]वृत्रहणं पुरन्दरम्'। तत्पूर्वः किम्? '[5]साह्न एवास्मै' '[6]वलगहनः'। पूर्ण इत्यादौ समानपदे रेफपूर्वो णकारो वैकृत इति केचित्। रुपूर्व इति। मयानि-अनी अनयोर्नकारो रुपूर्वो णत्वं भजते। '[7]यानि दारुमयाणि पात्राणि' '[8]त्वे वसूनि पुर्वणीक'। रुपूर्व इति किम्? '[9]यानि मृन्मयानि' '[10]अग्नयेऽनीकवते'। रेफेण किम्? '[11]स्वनीकसन्दृक्'॥

न नूनं नृत्य नह्यत्यन्वान्यशब्दे न्य उच्चकः ॥ १९३ ॥
नकारो द्वित्वगो लक्ष्यात्तकारोर्ध्वोऽपि वान्तगः ॥ १९४ ॥

नूनं-नृत्यति-नह्यति-अन्व-एषु पदेषु नकारः, अन्यशब्दे न्य उदात्तश्चेन्नकारश्च लक्ष्यानुसाराद् द्वित्वं गच्छतीति द्वित्वगो नकारश्च तकारपरो नकारश्चअन्तं गच्छतीत्यन्तगः पदान्तो नकारश्च णत्वं भजते। यथा–'[12]प्र नूनं पूर्णवन्धुरः' '[13]परिनृत्यन्ति पदो निघ्नतीः'। अनयोः '[14]पारीपरि प्रपूर्वश्च' इति प्राप्तिः। '[15]वाससा पर्यानह्यति' '[16]अन्वारभ्य परि पर्यन्वारभ्यान्वारभ्य परि' '[17]प्रान्यश्शꣳसति' '[18]प्रान्यानि पात्राणि' '[19]प्रान्याभियँच्छति' '[20]अमथ्नादन्यं परिश्येनः' अत्र जटायाम्। न्य उच्चक इति किम्? '[21]अनुप्राण्यात्प्रथमाम्' इत्यत्र न्य इत्यस्यानुदात्तत्वान्नैष निषेधः प्रसरति। '[22]अन्नं प्र प्रान्नमन्नं प्र'। निषण्णायेत्यादौ कण्ठोक्तत्वादेषु निषेधो न स्यात। '[23]पर्यन्तरिक्षात्'। एषां 'तद्वर्णव्यवेतकः' इति प्राप्तिः। '[24]वृत्रहन् वृत्रहासि' 'रपः पूर्व' इति प्राप्तिः॥

---

१. तै० सं० १. ६. ८. २. तै० सं० २. १. २. ३. तै० सं० १. ३. २.
४. तै० सं० ३. ५. ११. ५. तै० सं० ६. ६. ११. ६. तै० सं० १. ३. २.
७. तै० सं० ६. ४. ७. ८. तै० सं० १. ३. १४. ९. तै० सं० ६. ४. ७.
१०. तै० सं० १. ८. ४. ११. तै० सं० ४. ३. १३. १२. तै० सं० १. ८. ५.
१३. तै० सं० ७. ५. १०. १४. सू० १८७. १५. तै० सं० ६. १. ११.
१६. तै० सं० २. ३. ११. १७. तै० सं० ७. ५. ९. १८. तै० सं० ६. ५. ११.
१९. तै० सं० ५. १. ६. २०. तै० सं० २. ३. १४. २१. तै० सं० ५. ५. ५.
२२. तै० सं० २. १. ३. २३. तै० सं० ३. १. १०. २४. तै० सं० २. ४. १४.

**उत्तमं प्रथमोऽन्त्योर्ध्वस्तृतीयं घोषवत्परः ॥ १९५ ॥**

**[1]अन्तोऽचि वा सवर्गीयं ककुदन्त्यश्च मोत्तरः ॥ १९६ ॥**

अन्त्योर्ध्वः-उत्तमपरः, अन्तः-पदान्त प्रथमः आत्मनस्सवर्गीयमुत्तममापद्यते। यथा—'[2]वाङ्म आसन्' '[3]पण्णवत्यै स्वाहा' '[4]तन्महेन्द्रस्य'। तत्परः किम्? '[5]वाक्ते' '[6]वषट्ते'। पदान्त इति किम्? '[7]उरसात्मना'। प्रथम इति किम्? '[8]मामेऽवाङ्नाभिमति'। अत्र 'विकृतोत्तम' इत्युदाहरणम्। '[9]अन्त्यः-उत्तमः ऊर्ध्वो यस्मादसावन्त्योर्ध्वः। तृतीयमिति। सन्निध्यात्प्रथमो लभ्यते। अचि परे घोषवत्परे वा सति पदान्तः प्रथमः स्वस्य-सवर्गीयं तृतीयमाप्नोति। यथा—'[10]ऋधगयाड्ढग्गुताऽशमिष्ठाः' '[11]विड्द्रविणम्' '[12]यद्वै' '[13]तज्जयानाम्' '[14]त्रिष्टुब्जगती' '[15]नियुद्भिर्वायो'। अन्त इति किम्? '[16]वाच्येव' '[17]भवत्येव' '[18]एत्वावसु' '[19]अप्येव' इत्यादौ तृतीयत्वं मा भूदिति। '[20]ननु 'धारयद्भ्यः[21]' इत्यादावपदान्तस्य प्रथमस्य तृतीयत्वं कथं भवेत्? उच्यते—वच्छब्देनान्त इति अन्तवर्गोद्भवः, भिः-भ्यां-भिः एवंपरस्यापि प्रथमस्य तृतीयत्वं स्यादिति वाशब्दार्थ इति वदामः। परवचने प्रवृत्ते सति पश्चात्पूर्ववचनप्रसरणं न युज्यते। 'पूर्वं पूर्वन्तु तत्रैव' इति नियमभङ्गप्रसङ्गात्। तस्मान्नैतदर्थं विशेषणं कर्तव्यम्। सत्यम्; 'पूर्वं पूर्वन्तु तत्रैव' इति न्यायात् वाचीत्यादीनां वा तृतीया-

---

१. 'अन्तोऽच्परस्सवर्गीयं तृतीयं घोषवत्परः' 'अन्तोऽचि वै सवर्गीयं तृतीयं घोषवत्पर' इति च पाठान्तरम्।

२. तै० सं० ५. ५. ९.   ३. तै० सं० ७. २. १५.   ४. तै० सं० ६. ५. ५.

५. तै० सं० १. ३. ९.   ६. तै० सं० २. २. १२.   ७. तै० सं० ४. १. ३.

८. तै० सं० ३. २. ५.

९. 'अत्राव्यवहितोत्तरवचनात् 'अन्तः सवर्गीयं' इति पदद्वयमुत्कृष्यते' इति सर्वलक्षणमञ्जरी।

१०. तै० सं० १. ४. ४४.   ११. तै० सं० १. ८. १३.   १२. तै० सं० ३. २. ९.

१३. तै० सं० ३. ४. ४.   १४. तै० सं० ५. २. ११.   १५. तै० सं० २. २. १२.

१६. तै० सं० ६. ४. ९.   १७. तै० सं० २. २. ८.   १८. तै० सं० २. ४. ५.

१९. तै० सं० २. ६. ३.

२०. पदसंहितावशादेवेष्टसिद्धेः पुनरत्रान्तग्रहणं मन्दधियां सन्देहनिवृत्त्यर्थम्। अन्ये तु व्याचक्षते—'परवचने प्रवृत्ते सतीत्यारभ्य विशेषणमिति भावः' इति पर्यन्तमुपन्यस्य, एतच्चिन्त्यम् इति सर्वलक्षणमञ्जरी।

२१. तै० सं० २. ३. १.

देशरूपकार्याभावस्सिध्यतु। '[1]महित्वना' '[2]आप्याययन्ति' '[3]दत्वते' इत्यादीनां कथं सिध्येत्? तादृशसाधनाभावात्। तस्मात्तदर्थं वा तद्वचनं सार्थकमिति सन्तोष्टव्यम्। तदर्थं वेति गुडजिह्विकान्यायः। तथाहि न्यायसाधनमिति गमनिकामात्रम्। कण्ठोक्तिस्तु विशेषः। ततः परपदसन्धिपदार्थमपि विशेषणमिति भावः। ककुदिति। ककुदित्यस्मिन् ग्रहणेऽन्त्यवर्णो मकारपरः चकारसमर्पितं सवर्गीयं तृतीयमाप्नोति। यथा—'[4]ककुद्मान्प्रतूर्तिः'। ककुदिति किम्? '[5]य उन्माद्येत्'। मोत्तर इति किम्? '[6]ककुच्छन्दः'। मकार उत्तरो यस्मादसौ मोत्तरः। '[7]उत्तमं प्रथमोऽन्त्योर्ध्वं' इत्यस्यापवादोऽयम्॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
णत्वप्रकरणम् ॥ ९ ॥

---

१. तै० सं० ४. १. ११. २. तै० सं० २. ३. ५. ३. तै० सं० ७. ५. १२.
४. तै० सं० १. ७. ७. ५. तै० सं० ३. ४. ८. ६. तै० सं० ४. ३. १२.
७. सू० १९५.

## रेफप्रकरणम् ॥ १० ॥

[1]अथ विसर्ग आप्नोति रेफमञ्घोषवत्परः ॥ १९७ ॥

अथ शब्दो विसर्जनीयं लक्ष्यत्वेनाधिकरोति, इत ऊर्ध्वं यद्वक्ष्यामः। '[2]अवर्णाद्यत्वमच्परः' इत्यवधिभूतोऽयमधिकारः। 'अः' इति हृदयस्थितवायुना कण्ठे उच्चरितो वर्णो विसर्गः-विसर्जनम्, तस्य सम्बन्धी विसर्जनीयः। अच्परः-स्वरपरः, घोषवत्परश्चानवर्णात्परे विसर्जनीयो रेफमापद्यते। यथा—'[3]तदग्निराह' '[4]अशीर्म्म ऊर्जम्' '[5]अग्नी ३ र्नोपस्थेया ३ इत्याहुः' 'वावृधुर्य्ये च देवान्' 'विभूर्म्मात्रा' 'पशू ३ र्नान्वारभ्या ३ इति' 'प्रजापतेराप्त्यै' 'विश्वैर्देवैः' 'गोरेवावम्' 'गौरसौ'। अञ्घोषवत्पर इति किम्? 'अग्निश्च मे'॥

द्वारेष्टरबिभर्वार्हारनन्तस्सवितस्त्वकः ॥ १९८ ॥

अजीगश्शमितस्त्वष्टः प्रातश्चाहरहस्त्वभाः ॥ १९९ ॥

नेष्टर्यष्टर्विवर्वस्तस्सनुतस्तनुतः पुनः ॥ २०० ॥

स्तोतर्होतः पितर्म्मातः करावरनुदात्तयोः ॥ २०१ ॥

द्वाः-एष्टः-अबिभः-वाः-हाः-अनन्तः-सवितः-अकः-अजीगः-शमितः-त्वष्टः-प्रातः-अहरहः-अभाः-नेष्टः-यष्टः-विवः-वस्तः-सनुतः-तनुतः-पुनः-स्तोतः-होतः-पितः-मातः-एषु पदेषु विसर्गो रेफमापद्यते स्वरघोषवत्परः। यथा-'माद्वार्मित्रस्य'। 'अशीयेष्टारायः' अशीयेष्टरेष्टरशीयाशीयेष्टः'। 'ताꣳसंवत्सरमबिभस्तम्'—अबिभस्तं तमबिभरबिभस्तम्। 'तस्माद्वार्णामवः' 'मामे प्रहारस्ति' 'यज्ञपुरुषोरनन्तरित्यै'। ननु 'अनाद्युच्चेऽन्तरिवहि' इत्यनेनैतदपि अन् कारादिवचनात्सिध्यति, तत्सहितस्यान्तरित्यस्य वर्णविभागवेलायामनुदात्तत्वादन् कारोच्चस्य च प्रयोजनाभावादिति चेत्, उच्यते-'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात् '[6]अन् कारादिति प्राप्त्या

---

१. इतः परमुदाहरणप्रत्युदाहरणानामाकरनिर्देशस्सर्वेषां न क्रियते, प्रकाशनविलम्बभिया संक्षिप्यत इति क्षन्तव्योऽहम्।

२. सू १८९ ३. तै० सं० ४. २. ८. ४. तै० सं० ३. २. ८. ५. तै० सं० १. ५. ९.

६. अनादीति वचनेन परिगृह्य अन् कारोच्चोऽप्रयोजकः' इति सर्व०।

परिगृह्य अनु कारस्वरोऽप्रयोजक इति कथनादप्येतदनाकर्षणमेव रमणीयम् । '[1]देव-सवितरेतत्' '[2]देवत्राकरजक्षीरेण' । 'करावनींचयोस्तथा' 'अकारात्' इति सिद्धेऽपि पुनरत्र गृहीतमाद्युच्चस्यापि प्राप्त्यर्थमिति विज्ञेयम् । यथा—'[3]वाज्यर्वाकः' 'अर्वा करकरर्वार्वाकः' । '[4]ओषधीरजीगरजीगरोषधीरोषधीरजीगः-अजीगरित्यजीगः । 'शृतꣳहवी३ शमितरि'ति । शिवस्त्वष्टरिहागहि' 'प्रातरुपसदः' 'अहरहर्ह्विर्धानि-नाम्' । अहरिति किम् ? 'अनिङ्ग्यान्तास्सुवश्च' इति निषिध्यत इत्येवंरूपस्यैवायं नियमः । 'योनावभारुखा' 'नेष्टः पत्नीं पत्नीन्नेष्टर्नेष्टः पत्नीम्' । 'अग्ने यष्टरिदं नमः' 'च विवर्विवश्च च विवः विवरिति विवः' 'दोषावस्तर्धिया वयम्' 'आराच्चिद्द्वेषस्सनुतर्युयोतु' । तनुतरिति शाखान्तरे । 'पुनरासद्य सदनम्' 'निगुतः पुनः पुनर्निगुतो निगुतः पुनः' 'एतगꣳस्तोतरेतेन' 'होतर्यविष्ठ सुक्रतो' 'सीद होतर्होतस्सीद सीद होतः' 'मरुतां पितः पितर्मरुताम्मरुतां पितः' 'पृथिवि मातर्मा मा' । अज्घोषवत्पर इति किम् ? '[5]अधिपामकस्समष्टथै' । 'अःकारश्चत्वकारोर्ध्व' इति क्वचिदोत्वप्राप्तिः, 'अवर्णाद्घोषवत्परः' इति क्वचिल्लोपप्राप्तिः, 'अवर्णा द्यत्वमच्पर' इति क्वचिद्यत्वप्राप्तिः । [6]ता एताः प्राप्तीः प्रतिषेद्धुं पुनरवर्णपूर्व-विसर्गार्थं 'द्वारेष्टः' इत्याद्ययमारम्भः । तस्मादेतद्व्यतिरिक्तावर्णपूर्वविसर्गस्य रेफो नास्ति । करावरिति । द्विवचनसामर्थ्यात् कः आवः इत्यनयोः पदकालेऽनु-दात्तयोर्वर्तमानो विसर्गो रेफमापद्यते स्वरघोषवत्परः । यथा—'[7]मिथुयाकर्भाग-धेयम्' 'वेन आवरावर्वेनो वेन आवः आवरित्यावः' । अनुदात्तयोः किम् ? '[8]कोऽस्येश्वरः' 'आवो वाजेषु' । तत्परः किम् ? 'मिथुया कः कर्मिथुया मिथुया कः' ।

[illegible] हि ॥ २०२ ॥

आवृत् इत्येवं परो विसर्जनीयो रेफमापद्यते । । यथा— 'जिन्वरा-वृत्स्वाहा' 'श्रुतरावृत्स्वाहा' 'उग्ररावृत्स्वाहा' 'भीमरावृत्स्वाहा' । अय-

१. तै० सं० ३. २. ७. २. तै० सं० ५. १. ७. ३. तै० सं० ४. १. २.

४. तै० सं० ४. ६. ७. ५. तै० सं० ६. १. ७.

६. 'ता एताः प्राप्तीः प्रतिषिध्य पुनः केषाञ्चिदवर्णपूर्वविसर्गाणां रेफप्राप्त्यर्थम्' इति सर्व० ।

७. तै० सं० १. ३. ७. ८. तै० सं० २. ६. ७.

मित्यूर्ध्वश्चेति। अयमावृत्परो विसर्ग इति शब्दपरोऽपि रेफमापद्यते। यथा—'इति श्रुतश्श्रुतरितीति श्रुतः'। अयमिति किम्? 'हवनश्श्रुतो हवम्[1]'। अनेन 'वर्षञ्जिन्वोजिन्वो वर्षन्वर्षञ्जिन्वः' इत्यत्र विसर्गस्य रेफो न स्यादित्युक्तम्। इतिशब्द ऊर्ध्वो यस्मादसावित्यूर्ध्वः। अनाद्युच्च इति। अनाद्युदात्तो अन्तरित्यस्मिन् पदे विसर्गो रेफमेति स्वरघोषवत्परः। यथा—'अन्तरग्ने रुचा त्वम्' 'अग्निमन्तर्भरिष्यन्ती[2]' 'अन्तर्यच्छ गृणते[3]' 'आमास्वन्तरन्तरामास्वामास्वन्तः'। अनाद्युच्च इति किम्? '[4]शुक्र एषोऽन्तोऽन्तं मनुष्यः'। तत्परः किम्? 'अन्तस्ते दधामि'। 'अन्तोऽच्च' इति वक्तव्ये बहुस्वरत्वं बहूपादानार्थम्, इतरथा अन्तोच्चस्यैव स्यात्—'अन्तर्यामे मघवन्' 'अन्तर्वेदि मिथुनौ'। आदावुच्चं यस्य तदाद्युच्चम्, नाद्युच्चमनाद्युच्चम्, तस्मिन्॥

## अनिङ्ग्यान्तास्सुवश्चाहास्त्वहर्नभ्यां भिरुत्तरः॥ २०३॥

सुवः, अहाः, अहः, एषु विसर्गा अनिङ्ग्यान्ताः स्वरघोषवत्परा रेफमाप्नुवन्ति। यथा—'सुवरसि सुवर्म्मे मे सुवश्च मे' अत्र विलोमे। 'पुनराहार्जातवेदाः' 'अहर्देवानामासीत्' 'अहस्तस्मिन्' अत्र विलोमे। कुत्रचित् 'अहः' इत्येतत्पदमनुस्वारमध्यं स्यात्। तत्र विसर्गस्य 'अनुस्वारयुक्पदम्' इति वचनात्प्राप्तो रेफस्तुशब्देन निषिध्यते। यथा—'अ ँ ह इन्द्रमेवा ँ होमुचम्'। अनिङ्ग्यान्ता इति किम्? देव सुव इति देवश्सुवः। 'षडहा भवन्ति' 'त्र्यहो भवति'। तत्परः किम्? 'सुवश्च मूर्धा च'। 'ह्वारेष्टः' इति वचने 'हाः' इत्यनेनैव 'अहाः' शब्दस्यापि 'अदादी' ति न्यायाद् रेफसिद्धौ सत्यामत्र पुनर्वचनमिङ्ग्यान्तस्याहाश्शब्दस्य प्रतिषेधार्थम्। न भ्यां भिरुत्तर इति। सान्निध्यादहरिति लभ्यते। अत्र विसर्गः भ्यां भिः एवं परो न रेफमापद्यते। यथा—'शमहोभ्याम्' 'उत्तरैरहोभिः'॥

## रेफोर्ध्वो लुप्यते रेफस्तत्पूर्वो दीर्घमाप्नुयात्॥ २०४॥

रेफपरो रेफो लुप्यते। तदा तत्पूर्वः—तस्माल्लुप्तरेफात् पूर्वः ह्रस्वस्वरो दीर्घं भजते। परवचने विशेषविधानात् अहः सुवः इत्युभाभ्यामन्यस्यैवायं विधिः। यथा—'[5]एष्टा रायः'। '[6]रूपमकरका रूप ँ रूपमकः' '[7]तित्तिरी रोहित्' '[8]चतूरा-

---

१. अत्र वेष्टनायामिति परत्वेऽपि रेफो माभूदिति सर्व०

२. तै० सं० २. १. १२. ३. तै० सं० १. ८. २२. ४. तै० सं० ७. २. ७.
५. तै० सं० १. २. ११. ६. तै० सं० २. ६. ४. ७. तै० सं० ५. ५. १६.
८. तै० सं० ७. १. ८.

त्रमपश्यत्'। अथ नित्यदीर्घाद्रेफलोपः—'[1]रेवती रमध्वम्' 'रक्षोघ्नी रक्षसाम्' 'यद्यू रसमेव' 'क्वलै राक्षसान्' 'विष्णो रराटमसि'। रेफपरः किम्? 'अन्तरग्ने रुचा त्वम्'। रेफ इति किन्? 'वा एष रसः'। लुप्यत इति किम्? 'प्रजापति रोदनम्'॥

**द्वन्द्वेऽह्नो रात्परे ओत्वं याति रोर्ध्वे सुवस्त्वपि॥ २०५॥**

द्वन्द्वे-अहश्शब्दे अकारेण सहितो विसर्जनीय ओकारमाप्नोति रात्परे सति। यथा—'अहोरात्राभ्याम्' 'अहोरात्राणि'। द्वन्द्व इति किम्? 'रात्रियाहरहा रात्रिया रात्रिया ह्नः' इत्यत्रोत्वं न स्यादिति। रोर्ध्व इति। सुवरित्यत्र अःकार ओत्वं भजते रेफपरे सति। यथा—'सुवो रोक्ष्यामि' 'सुवो रोहाव'। रेफपर इति किम्? सुवरसि॥

**[2]अःकारश्च त्वकारोर्ध्वो घोषवत्पर एव वा॥ २०६॥**

चकार ओकारमन्वादिशति। अःकारः-अकारेण सहितो विसर्ग ओकारमाप्नोति अकारपरे घोषवत्परे वा सति। यथा—'प्रोद्धो अग्ने' 'सोऽब्रवीत्' '[3]वयोनाधैः' '[4]मानो मित्रः'। तत्परः किम्? '[5]स आत्मा, यः कामयेत'। उभयत्राकारसहित इति किम्? यद्यधिकृतांशविसर्गमात्रस्य स्यादोत्वम्, तदा 'औत्वमोदौत्परः' इत्यौकारे कृते 'अहौरात्रयोः', 'मानौहिꣳसीत्' इति स्यात्। 'समिद्धो अञ्जन्' इत्यत्र तु इतः परं 'आयावावैत्तु औत्परः' इत्यावादेशः। तथा सति 'समिद्धावञ्जन्' इति स्यात्। तन्मा भूदित्यकारसहित इत्युक्तम्। नन्वत्र 'अः' इत्यस्य कारोत्तरत्वं कथं क्रियते? 'स्वरस्य करतोत्तरः' इति वर्णमात्रस्य कारोत्तरत्वविधानभङ्गप्रसङ्गात्। उच्यते—सत्यम्; एतच्छास्त्रबलान्न क्रियते, किन्तु पाणिनीयाः—एवकारः अपिकारः इत्यादीनां साधुत्वं कथयन्ति। एवमत्रापि चोद्यपरिहारौ विज्ञेयौ॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
रेफप्रकरणम्॥ १०॥

---

१. अः कार इत्याकारोर्ध्वेऽप्योत्वं घोषवदुत्तरे इति पाठः। २. तै० सं० १. ३. ७.
३. तै० सं० ४. ३. ४. ४. तै० सं० ४. ६. ८. ५. तै० सं० ७. २. ९.

## विसर्जनीयसन्धिप्रकरणम् ॥११॥

### क ख पे पं तथावर्ण पूर्वस्संयात्यवग्रहः ॥ २०७ ॥

अत्र परनिमित्तविशेषविधानादेतत्पर्यन्तम् 'अघोषवत्परः' इत्यस्यानुवृत्तिर्मन्तव्या। अवर्णपूर्वः अवग्रहवर्ती विसर्जनीयस्सकारमाप्नोति ककारे खकारे पकारे वा सति, अवर्णादन्यस्वरपूर्वश्चेत् षकारमाप्नोति। यथा—'[1]नमस्कारैरेव', '[2]पथस्पथः' '[3]अथोहविष्कृतानाम्' '[4]असितं निष्खिदति' '[5]बहिष्पवमानꣳ सर्पन्ति। अवग्रह इति किम्? 'नमः पितृभ्यः', 'पुष्पावतीः प्रसूवतीः' 'समनैषुः अस्कुक्षन्'। अवर्णः पूर्वो यस्मादसाववर्णपूर्वः॥

### अत्र देवरिषश्चाविर्निरिडश्शश्वतोऽपसः ॥ २०८ ॥

### विश्वतोंऽहसोऽतिदिवोऽश्मनस्तमसस्स्वति ॥ २०९ ॥

देवरिषः, आविः, निः, इडः, शश्वतः, अपसः, विश्वतः, अंहसः, अतिदिवः, अश्मनः, तमसः एषु पदेषु विसर्गः क ख पकारपरो यथाविहितं भजते—अवर्णपूर्वः सम्, अन्यस्वरः पूर्वः षञ्चेति। यथा—'उरोरा नो देवरिषस्पाहि'। देवेति किम्? 'सरिषः पातु नक्तम्'। 'आविष्कृणुष्व' 'कृणुतादाविरस्मै', अत्र विलोमे। 'घृतन्निष्पिबति' 'पशून्निरार्जत्' अत्र जटायाम्। 'इडस्पदे' 'परिधिरिड ईडितः' अत्र जटायाम्। 'शश्वतस्कर्हस्ते'। 'अपसस्पारे अस्य' 'इन्द्रं वो विश्वतस्परि' 'परिपातु विश्वतः' अत्र विलोमे। 'कृणुहि विश्वतो नः' अत्र च व्युत्क्रमे। 'दिव्यादꣳहसस्पातु' 'अदितिः पात्वꣳहसः' अत्र विलोमे। 'अति दिवस्पाहि'। अतीति किम्? 'दिवः पृष्ठꣳस्सुवः[6]'। 'त्वमश्मनस्परि' 'उद्वयन्तमसस्परि'। अनवग्रहार्थोऽयमारम्भः॥

### स क्र घान्योत्तरः पिन्व पथे कृध्युत्तरस्तथा ॥ २१० ॥

स क्र घ एभ्यः अन्यवर्णपरः पिन्व-पथे-कृधि-एवम्परो विसर्गो यथाविहितं

---

१. तै० सं० ५. ५. ७. २. तै० सं० १. १. १४. ३. तै० सं० ६. ४. ३.

४. तै० सं० ६. १. ९. ५. तै० सं० ६. ३. १.

६. 'दिवस्परिप्रथमम्' इत्यादिपरतरवचनेन सिध्यति।

भजते। यथा—'अपस्पिन्वौषधीर्जिन्व' 'पिन्वौषधीरोषधीष्पिन्व पिन्वौषधीः' 'सप्रथानमस्पथे' 'येनर्षयः' 'कृधि सुवस्सुवस्कृधि कृधि सुवः'। अत्र विलोमे निमित्तस्यासन्नत्वाभावात् सकारः सत्वं न निषेधत्येव। स क घान्योत्तर इति किम्? 'आमनसः कृधि स्वाहा' 'मन्या से शन्न नः कृधि' क्रत्वे। रेफेण किम्? 'मयस्कृधि क्षयद्वीराय' 'उरुक्षयाय नः कृधि' 'घृतं घृतयोने'॥

## पत्नीवे पतिशब्दे द्विः पुत्पर्यूर्ध्वे दिवोहसः॥ २११॥

पत्नीवे ऊर्ध्वे विसर्गो यथाविहितं भजते। यथा—'प्रैतु ब्रह्मणस्पत्नी वेदिम्'। वे इति किम्? 'रेतोधाः पत्नीव इत्याह'। पतिशब्दे द्विरिति। पतिशब्दे ऊर्ध्वे विसर्गो यथाविहितं भजते, स पतिशब्दो द्विश्चेत्। द्विरति बहुवचनवर्जमित्युच्यते। कुतः? द्विरिति वचनद्वयम्। एकवचनद्विवचन इत्यर्थः। यथा—'वाचस्पतिर्वाचम्' 'नराशꣳसोग्नास्पतिर्नः' '[1]पतिः पृथिव्याः पृथिव्यास्पतिष्पतिः पृथिव्याः' 'शुभस्पती इदमहम्' 'प्रच्यवस्व भुवस्पते' '[2]पते धनदा धनदास्पते पते धनदाः' '[3]वाचस्पतिं विश्वकर्माणम्' '[4]वाचस्पतये पवस्व'। बहुवचनबर्जमिति किम्? 'ऋतस्य नः पतयो मृडयन्तु' इत्यादौ माभूदिति। पुत्पर्यूर्ध्व इति। दिवः हसः अनयोर्विसर्गः पुत् परि एवंपरस्सकारमाप्नोति। पुदिति पदैकदेशोऽनेकार्थः। यथा—'दिवस्पुत्राय' 'सहसस्पुत्रः' 'दिवस्परि प्रथमम्'। अनयोरिति किम्? 'पुꣳसः पुत्राꣳउत' 'पृथिव्याः पर्योजः'। तत्परः किम्? 'दिवः पृथिव्याः'॥

## वसुष्कोर्ध्वश्च रायस्पोपरो नमस्करोपरः॥ २१२॥

वसुरित्यत्र विसर्गः ककारपरष्षकारं भजते। यथा—'[5]स इधनो वसुष्कविः'। वसुरिति किम्? 'विप्रश्शुचिः कविः'। तत्परः किम्? 'विश्वावसुः पर्यमुष्णात्'। राय इति। राय इत्यत्र विसर्गः पो इत्येवंपरः सत्वं भजते। पो इति पदैकदेशोऽनेकार्थः। 'पशवो वै रायस्पोषः' '[6]रायस्पोषं गौपत्यम्'। राय इति किम्? 'विभुः पोषे'। पो इति किम्? '[7]एष्टा रायः प्रेषे भगाय'। नम इति। म इत्यत्र विसर्गः करो इत्येवंपरस्सत्वं भजते। यथा—'एवौषधीभ्यो नमस्करोति' 'संवत्सरेण

---

१. तै० सं० ४. ४. ४.　२. तै० सं० १. ७. १०.　३. तै० सं० ४. ६. २.
४. तै० सं० १.४. २.　५. तै० सं० ४. ४. ४.　६. तै० सं० ४. १. ५.
७. तै० सं० १. १२.११.

नमस्करोमि'। नभ इति किम् ? '[1]एकहायनादेनः करोति'। करो इति किम् ' 'नमः कपर्दिने च' ॥

**नाध्वरं विश्वतोऽन्तश्च पुनस्तु विविशुः परुः ॥ २१३ ॥**

**जातोऽत्र धषवत्यूर्ध्वे परि वा प्रोत्तरे ननिः ॥ २१४ ॥**

अध्वरं विश्वतः, अन्तः, पुनः विविशुः परुः, जातः एषु पदेषु विसर्गो यथा विहितं न भजते। यथा—'यज्ञमध्वरं विश्वतः परिभूः'। अत्र 'देवरिषः' इति प्राप्तिः, अध्वरविशेषणान्निवृत्तिः। अध्वरमिति किम् ? 'इन्द्रं वो विश्वतस्परि'। 'महादेवमन्तः पार्श्वे न' 'पुनः पुनर्ह्यस्मात्' 'या आविविशुः परुः परुः'। विविशुरिति किम् ? 'कृणोत परुष्परुरनुघुष्य'। एषां 'क ख पेषम्' इति प्राप्तिः। 'भूतस्य जातः पतिरेक आसीत्'। 'पत्नीवेपति शब्दे द्विः' इति प्राप्तिः। धषवत्यूर्ध्व इति। धश्च षश्च धषौ, तावास्मिंस्त इति धषवत्, तस्मिन् धषवति पदे परे सति पूर्वो विसर्गो यथाविहितन्नापद्यते। यथा—'बहिः परिधि स्कन्दात्' 'परुषः परुषः परि' 'उभयतः दर्णूर्भवति' 'क ख पेषम् इति प्राप्तिः। ऊर्ध्व इति किम् ? 'अधस्पदं कृणुते' 'शुक्रस्य ज्योतिषस्पते'। परिवेति। परिवा-प्र एवं परो विसर्गो यथाविहितं नापद्यते। यथा—'दिवः परिवाजेषु'। वेति किम् ? दिवस्परि 'प्रथमम्' 'तस्मादितः प्रदानम्'। अत्र 'ह्रस्वग्रहणं दीर्घस्याप्युपलक्षणं स्यात्' इत्यात्रेयादि भाष्यकारैरुक्तम् 'प्र परिष्वथ ह्रस्वस्य दीर्घस्याप्युपलक्षणम्[2]' इति। 'अत एव 'बहिः प्राणो वै' इति चोदाहरणं स्यात्। ननिरिति। '[3]निरित्यत्र विसर्गस्य प्र-प्रा इत्यनयोः परयोस्सतोष्षत्वनिषेधो न भवति। किन्तु षत्वं भवतीत्यर्थः। यथा—'प्रवदितोर्निर्णिष्प्रवदितोः प्रवदितोर्निः' 'आत्मना परा निष्प्रशुक्रशोचिषा' 'प्राञ्चौ निर्णिष्प्राञ्चौ प्राञ्चौ निः'। 'पुनस्कृधि' इत्यत्र तु 'निषेधं यस्त्वतिक्रम्य न निषेधः पुनर्भवेत्' इत्यनेनैव सत्वम् ॥

**लुप्यते संयुतोष्मोर्ध्वोऽप्यवर्णाद्घोषवत्परः ॥ २१५ ॥**

संयुक्तश्चासावूष्मा च संयुतोष्मा, स ऊर्ध्वो यस्मात् स विसर्गो लुप्यते।

---

१. तै० सं० ६. ६. ३.

२. अत्रापि 'ह्रस्वस्यानित्यदीर्घं स्यात्तद्वास्याप्युपलक्षणम्' इति प्रमाणम्।

३. निरित्यत्र विसर्गस्यानवग्रहस्थत्वादिनित क्वचित्पाठः।

यथा—'तिस्रश्यामाः' 'ये शुक्ला स्युः' 'ऊर्जस्वती स्वधाविनीः' 'हरी स्थ हर्योर्धानाः' 'चतुस्तनां करोति' 'आयुष्टोमं तृतीयम्' 'अग्नेस्तोमं मनामहे'। अवर्णादिति। अवर्णात्परतः स्थितो विसर्गो घोषवत्परो लुप्यते। अत्र ह्रस्वपूर्वस्य विसर्गस्य 'घोषवत्पर एव वा' इत्योत्वमेव। दीर्घपूर्वस्य प्लुतपूर्वस्य चानेन लोपः। यथा—'देवा गातुविदः' विचित्यस्सोमा ३ न' ॥

ऊष्माणमप्यघोषोर्द्ध्वस्तस्य सस्थानमाप्नुयात् ॥ २१६ ॥

अघोषपरो विसर्गः, तस्याघोषस्य सस्थानं-समानस्थानमूष्माणं भजते। परत्र विशेषविधानादाद्युपान्तोष्मणोरत्र न दर्शयिष्यामः, 'स्पर्शस्थाना यमौष्मिकाः' इति वचनात् चवर्गपरश्शकारम्। यथा—'अग्निश्च मे' 'गौश्छन्दः' 'योवश्शिवतमो रसः'। '[1]टवर्गपरष्षकारम्, 'आयुष्टे' 'षोडशिनष्षोडशित्वम्'। तवर्गपरस्सकारम्, 'भ्रातस्तनेन' 'मानस्तोके' 'भुज्युस्सुपर्णः' ॥

[2]जिह्वामूलीयमाप्नोति उपध्मानीयमेव वा ॥ २१७ ॥

कखे पफे परे न क्षे अवर्णाद्यत्वमच्परे ॥ २१८ ॥

'अः' इति हृदयस्थितवायुना कण्ठे उच्चरितो वर्णो विसर्जनीयसंज्ञस्स्यात्, विसर्ग इति च। कश्च खश्च कखमिति द्वन्द्वैकवद्भावः। तस्मिन् परे सति विसर्जनीयो जिह्वामूलीयं प्रतिपद्यते। जिह्वामूलेनोच्चारणीयो विसर्गो जिह्वामूलीयः स्यादित्यर्थः। यथा—'य ᳵ कामयेत' 'बाहुमात्रा ᳵ खायन्ते'। पश्च फश्च पफमिति पूर्ववत्समासः। तस्मिन् परे सति विसर्ग उपध्मानीयमापद्यते। उपध्मानेन-ऊर्ध्वोष्ठसमीपे अधरोष्ठेनोच्चारणीयो विसर्ग उपध्मानीय इति। यथा—'य ᳶ पाप्मना, 'या ᳶ फलिनीः'। वर्णान्तरे सति संज्ञान्तरं भूत्वापि वायुसहितोच्चारणं स्यात्, अनयोर्विसर्गसम्बन्धात्। वाचकत्वादेषां स्थानसम्बन्धनामधेयं स्यादिति विज्ञेयम्। न क्ष इति। क्षकारे परे सति विसर्गः पूर्वविधिं जिह्वामूलीयं नाप्नोति। यथा—'देवैः क्षत्रस्य' 'द्यौः क्षमारेरिहत्' 'अष्टुः क्षीयते' 'महद्भ्यः क्षुल्लकेभ्यश्च'

---

१. अत्र 'ट वर्गपरपदान्तविसर्गस्यासम्भवान्नोदाहरणम्' इति सर्वं०।

२. जिह्वामूलं कखेक्षान्येऽप्युपध्मानमियात्पफे।
अवर्णात्परतो यत्वं प्राप्नुयात्स्वर उत्तरे ॥ इति पाठः।
'उपध्मानीयमेव च' इत्यपि पाठः।

'आवः क्षेमे' 'घनाघनः क्षोभणः'। क्षकारे खकारसम्भवात्पूर्वविसर्गस्य सस्थानोष्मत्वं प्राप्तमनेन निवर्त्यते। अवर्णादिति। अवर्णादूर्ध्वो विसर्गो यकारं भजते, अच्परे-स्वरे परे सति। यथा—'विश्वज्योतिष उपदधाति' 'ब्राह्मणा अभैषुः' नान्वारभ्या ३ इति'। अच्पर इति किम्? 'सरस्वतो निपक्षतिः'। अवर्णात्पर इति किम्? 'अग्निरेकाक्षरेण'॥

इति सूर्यनारायणसूरावधानिविरचिते
वेदतैजसाख्ये व्यासशिक्षाविवरणे
विसर्जनीयसन्धिप्रकरणम् ॥११॥

# यत्वप्रकरणम् ॥ १२ ॥

**ग्रहे[1] हिरण्यवर्णीये पृष्ठ्ये याज्योख्ययोरपि ॥ २१९ ॥**
**नित्याचिनो यमात्पूर्वमीदूत्पूर्वोऽन्त एति रम् ॥ २२० ॥**

ग्रहो नाम-अन्त्यचतुरोऽनुवाकान्वर्जयित्वा 'आ ददे ग्राव' इति प्रश्नः[2]। हिरण्यवर्णा इत्यनुवाको हिरण्यवर्णीयः। 'समिद्दिशाम्' 'जीमूतस्य' 'यदक्रन्दः' 'मा नो मित्रः' 'ये वाजिनम्' 'अग्नेर्मन्वे' 'समिद्धो अञ्जन्' 'गायत्री' 'कस्त्वा' इत्यनुवाकनवकं पृष्ठ्यमिति पठ्यते[3]। 'उभावामिन्द्राग्नी' प्रभृति 'अग्निर्वृत्राणि' पर्यन्ताः प्रश्नान्तानुवाकाः 'युक्ष्वा हि' इत्यनुवाकश्च याज्या इत्युच्यन्ते[4]। चतुर्थकाण्डस्याद्यप्रश्नद्वयम् उत्तमानुवाकवर्जम् 'उख्यम्' इत्याख्यायते[5]। एष्वनुवाकेषु आत्पूर्वः-आकारपूर्वः पदान्तो नकारो यकारमापद्यते नित्याचि वेदस्थस्वरे परे सति। स एव नकारः, ईत्-ईकारः, स च ऊत्-ऊकारः, स च तौ-ईदूतौ पूर्वौ यस्मात्सः-ईदूत्पूर्वः-ईकारपूर्व ऊकारपूर्वो वा रेफमापद्यते। ग्रहे यथा—'महाꣳइन्द्रः' 'जहि शत्रूꣳरपमृधः'। हिरण्यवर्णीये यथा—'सर्वाꣳअग्नीꣳरप्सुषदः'। पृष्ठ्ये यथा—'जघनाꣳउपजिघ्नते' 'शत्रूꣳरनपव्ययन्तः'। याज्यासु यथा—'देवहूतमाꣳअश्वाꣳ अग्ने' 'विद्वाꣳऋतूꣳऋतुपते'। उख्ये यथा—'स्वाꣳअहम्' 'ये वा वनस्पतीꣳ

---

१. 'याज्या पृष्ठ्यहिरण्योख्यग्रहेष्वन्तग एव नः।
नित्याचि यत्वमात्पूर्वं ईदूत्पूर्वश्च रं भजेत्' ॥ इति पाठः।

२. 'ग्रह इत्याददे प्रश्नस्सजोषान्तं विधीयते'।

३. 'समिद्दिशां समिद्धोऽग्नेर्मन्वेस्याः पृष्ठसंज्ञकाः।
जीमूतादि चतुष्कञ्च गायत्री द्वितयन्तथा ॥

यत्तत्पञ्चमकाण्डे चानुवाकत्रयं विना।
पृष्ठ्यमेव महापृष्ठ्यमिति वेदविदो विदुः' ॥

४. इषे प्रभृत्यपामन्तं प्रश्नानां युक्ष्वसंयुतम्।
अन्त्यानुवाका याज्याख्यास्त्रयोविंशतिरीरिताः ॥

५. 'काण्डोऽग्निसंज्ञो विज्ञेयश्चतुर्थस्तैत्तिरीयके।
उख्यमित्यग्निकाण्डस्य प्रश्नद्वितयमादिमम् ॥
अन्त्यानुवाकरहितं वेदविद्भिरुदाहृतम्' ॥

ꣳरनु'। एवं पूर्वः किम् ? 'ब्रहसिन्ननीकम्'। नित्याचीति किम् ? 'देवहूतमानिति देवꣳहूतमान्' 'अभवानित्यमꣳवान्' इत्यादावस्थिरस्वरे परे एतत्कार्यं न स्यादिति। पदान्त इति किम् ? 'विश्वानि देव वयुनानि' 'दाशुषे वसूनि'। ग्रहादिष्विति किम् ? 'तानिन्द्रोऽन्तर्यामेण' 'त्रीनिमाँल्लोकान्' 'पशूनेवावरुन्धे' ॥

**सोमान्यपूर्वन्दुर्यांस्तु मर्त्यान् पोषान्वशानरान् ॥ २२१ ॥**
**मधुमानविमान् गोमान्अमित्रानमृतान्महान् ॥ २२२ ॥**
**सो अस्मान् हविष्मान् कक्षीवानिडावांश्च बाणवान् ॥ २२३ ॥**
**चिकित्वान् हिपयस्वांश्च विदत्रानुदयान् हि यम् ॥ २२४ ॥**

सोमशब्दादन्यशब्दपूर्वं 'दुर्यान्' इति पदम्, मर्त्यान्, पोषान्, वशान्, अरान्, मधुमान्, अविमान्, गोमान्, अमित्रान्, अमृतान्, महान्, सो अस्मान् हविष्मान्, कक्षीवान्, इडावान्, बाणवान्, चिकित्वान्, हिपयस्वान्, विदत्रान्, उदयान्, एषु पदेषु नकारः स्थितस्वरपरे सति यत्वमेति। आकारपूर्वत्वादिविषयाननादृत्य सर्वार्थोऽयमितः परमारम्भः। यथा—'[1]भन्द्रान्दुर्याꣳअभ्येहि'। सोमान्यपूर्व इति किम् ? 'प्रचरा सोम दुर्यानदित्याः'। 'मर्त्याꣳआविवेश' '[2]स एतान्पोषाꣳअपुष्यत्' 'स्तुतो यासि वशाꣳअनु' '[3]अराꣳइवाग्ने'। मधुमाꣳइन्द्रियावान्' '[4]अविमाꣳअश्वी' 'गोमाꣳअग्ने'। मध्वविगो इति किम् ? 'पशुमानेव भवति' 'अमित्राꣳअपबाधमानः' उदस्थाममृताꣳअनु' 'अग्ने महाꣳअसि' 'सो अस्माꣳअधिपतीन् करोतु'। सो इति किम् ? 'इन्द्रो अस्मानस्मिन्' 'हविष्माꣳआविवासति' 'कक्षीवाꣳऔशिजः' 'इडावाꣳएषः' 'विशल्यो बाणवाꣳउत'। कक्षीडा बाणेति किम् ? 'रसवानेव भवति' चिकित्वाꣳअनुमन्यताम्'। 'समसृक्ष्महि' '[5]पयस्वाꣳअग्न आगमम्'। हीति किम् ? 'ऊर्जस्वान् पयस्वानित्याह'। '[6]सुविदत्राꣳअपीत' '[7]उदयाꣳअजस्रम्'। उदिति किम् ? 'वयोभिरेवायानवरुन्धे'। स्थितस्वरपर इति किम् ? 'इडावानितीडाङ्कवान्' ॥

---

१. तै० सं० १. ६. ३.   २. तै० सं० ७. १. ९.   ३. तै० सं० १. ५. ९.
४. तै० सं० ३. १. ११.   ५. तै० सं० १. ४. ४५.   ६. तै० सं० १. ८. ५.
७. तै० सं० ४. ६. ३.

इन्द्रोमाचोद्वमीडेन्यान् अप्येत्वकुर्वतादुहत् ॥ २२५ ॥
अधरान्त्सर्त्वगन्माकरग्रेऽलश्चादितिः परः ॥ २२६ ॥

इन्द्रोम, आच, ऊद्वम्, ईडेन्यान्, अप्येतु, अकुर्वत, अदुहत्, अधरान्त्स, ऋतु, अगन्म, अकः, अग्रे, अलम्, अदितिः, इत्येवं परः चकारसमर्पिताकारपूर्वः पदान्तो नकारो यत्वमेति। यथा—'अथासपत्नाँ॒इन्द्रो मे'। मकारेण किम्? 'युष्मानिन्द्रोऽवृणीत'। देवाँ॒आचवक्षत्'। चेति किम्? 'यानावह उशतः'। 'यूयं देवाँ॒उद्वम्' 'देवाँ॒ईडेन्यान्' 'घर्मो देवाँ॒अप्येतु'। एत्विति किम्? विद्वानपि जन्येषु'। 'वित्वा कामाँ॒अकुर्वत' 'यज्ञोऽसुराँ॒अदुहत्' 'अन्याँ॒अधरान्त्स-पत्नान्'। सेति किम्? 'भ्रातृव्यानधरान् पादयामि' 'वाजो देवाँ॒ऋतुभिः' सुवर्देवाँ॒अगन्म' 'निग्रभेणाधराँ॒अकः' 'अग्निस्ताँ॒अग्रे' 'पुरोडाशाँ॒अलङ्कुरु' 'विवस्वाँ॒अदितिः'। आकारपूर्व इति किम्? 'परिधीनकुर्वत'॥

नार्चीन् पतङ्गान् यजीयान् समानांश्च तथा यमान् ॥ २२७ ॥
रश्मीन् हि श्रपयांश्चात्र पदश्चेदुदथा परः ॥ २२८ ॥

अर्चीन्, पतङ्गान्, यजीयान्, समानान्, यमान्, रश्मीन्, श्रपयान्, एषु पदेषु नकारः शाश्वतस्वरे परेऽपि न खलु यकारं रेफं वा भजते। यथा—'अर्चीनिन्द्र ग्रावाणः' 'पतङ्गानसन्दितः' 'यजीयानुपस्थे मातुः' 'समानानुशन्त्सग्ने'। एषां याज्यात्वात्प्राप्तिः। 'सुयमानूतये' पृष्ठ्यत्वात्प्राप्तिः। 'पुरुत्रा च रश्मीननु' 'अदितिश्श्रपयानिति' अनयोरुच्यत्वात्प्राप्तिः। पदश्चेदिति। उत् इति पदम्, अथा इत्येवं परो नकारो यथाविहितं नापद्यते यकारं रेफं वा। यथा—'अमित्रानुन्नयामि' 'अबोयक्षि विद्वानथाभव'। उदिति पदमिति किम्? 'त्रीँ॒रुतव्यून्'। उपलक्षकत्वात् 'विद्वानथ' 'अथाभव'॥

उक्तौ विधिनिषेधौ च यत्वरत्वे स्वरे परे ॥ २२९ ॥
विलोमेऽप्येव तौ ज्ञेयौ प्रकृतौ नैव नो हलि ॥ २३० ॥

एतदुक्तस्थले नकारस्य यत्वरेफत्वयोर्विधिः प्रतिषेधश्च भवति हि स्वपाठे स्वरपरे सति-तौ-पूर्वोक्तौ कार्यभाङ्निषेधभाक्छब्दौ तथैव विलोमेऽन्यस्वरे परे सत्यपि प्रोच्येते इति विज्ञेयौ। आर्षे यथा—'इवा मवाँ॒इभेन' 'इवामवाँ॒ अमवाँ॒इवेवाभवान्' इति वलोमे स्वरस्य नित्यत्वादेव। 'अग्नीँ॒रप्सुषदो हुवे'

अग्नी ᳚ रप्सुषदो अप्सुषदोऽग्नी ᳚ रग्नी ᳚ रप्सुषदः' । ग्रहणस्य यथा—'अमर्त्यो मर्त्यां᳚आविवेश' 'अमर्त्यो मर्त्यान्मर्त्यां᳚अमर्त्योऽमर्त्यो मर्त्यान्' । एवं नैमित्तिकस्य ग्रहणस्य 'उदया᳚अजस्रम्' 'उदया᳚अया᳚उदुदयान्' । एवं ग्रहणस्य नैमित्तिकस्य 'अथा सपत्ना ᳚ इन्द्रो मे' 'अथा सपत्नान्त्सपत्ना ᳚ अथाथा सपत्नान्' । अत्र [1]"उदथापरः' इति निषेधो न विधेय इत्ययमारम्भः । एवं सर्वत्र नकारस्य यकाररेफोत्पत्तिर्द्रष्टव्या । एवं निषेधस्योदाहरणम्—'अमित्रानुन्नयामि' 'अमित्रानुदुदमित्रानमित्रानुत्' इत्यस्य स्वरे परेऽपि निषेधो न स्यादिति । न प्रकृताविति । प्रकृतौ नः नकारस्य हलि-व्यञ्जने परे विलोके नित्यस्वरे परेऽप्येतद्यत्वरत्वरूपकार्यन्न स्यादिति । प्रकृतिर्नाम मन्त्रः आर्षश्चेत्यर्थः । मन्त्रे यथा—'असि गरुत्मान्त्रिवृत्' इत्युख्ये । हल् परत्वेन यत्वाभावाद्विलोमेऽपि तथैव । 'असि गरुत्मान्गारुत्मानस्यसि गरुत्मान्' इति । 'सुपर्णोऽसि गरुत्मानित्यवेक्षते' इति पञ्चमकाण्डे पुनरुक्ते ब्राह्मणवाक्येऽपि यत्वं न स्यात् । 'मा वनस्पतीनित्याह' इत्यादि सर्वत्र विलोमेऽप्येवमेव 'अध्वरान्त्स सो अध्वरानध्वरान्त्सः' 'आशून् हुवे हुव आशूनाशून् हुवे' 'अपरीषु पश्यान् पश्यानपरीष्वपरीषु पश्यान्' । अहादित्वात्प्राप्तिः । पदद्वयनिमित्ते परेऽपि—'अधरान् त्सपत्नान्त्सपत्नानधरानधरान् त्सपत्नान्' । कण्ठोक्तपदस्यापि—'असीत्याह महान् ह्येषः' 'आह महान्महानाहाह महान्' । 'आपो हविष्मान् देवः' आपो हविष्मान् हविष्मानाप आपो हविष्मान्' इति कार्यद्वयमेवशब्दोऽवधारयति ॥

## अयवावेदोदायावावैत्वमौत्वं स्वरेऽनति ॥ २३१ ॥

अनति—अकारादन्यस्वरे परे पदान्तः एत्-एकारः, ओत्-ओकारश्च अयवौ भजतः । अय् च अव् च-अयवौ, तौ क्रमात् एकारः अय् इति विकारम्, ओकारः—अव इति विकारञ्चेत्यर्थः । यथा—'बहिष्पवमाने स्तुत आह' 'त एवैतया यजेरन्' 'विष्णवे हीदम्' 'कृशानवे ते वः' । अनतिपर इति किम्? 'मा ते अस्यान्तेऽब्रुवन्' 'समिद्धो अञ्जन्' 'तेनोऽवन्तु' इत्यादौ 'अयवावेदोत्' 'एदोत्पूर्वेऽप्यकारोर्ध्वं' इति वचनद्वये प्राप्ते पूर्वत्वात्प्रबलमिमं विधिं निषेद्धुमनतीत्यारम्भः । आयावाविति । स्वरे परे सति ऐकारः औकारश्च क्रमात् आयावौ भजतः । आय् च आव् च आयावौ । यथा—'समष्ट्या अथो' 'आसामहा एवेमौ' 'स्तोकावपतौ' 'तावेवास्मिन्' ॥

---

१ सू. २२८.

तत्तस्मादयुतादुत्वात्स्वकालाद्वः पदात्परः ॥ २३२ ॥

तत्, तस्मात् इत्येताभ्याम् अयुताद्–असंयुक्तात् पदादपृक्तात् अनन्यस्वर-सम्मिश्रात् स्वकालात् ह्रस्वात् उकारात्परो वकार आगमस्स्यात् पूर्ववचनस्थित-चकारसमर्पितेऽचि परे। अत एव उकारोऽत्र न वैकृतस्स्यात्। यथा—'स उ वेकवि ᳪ शवर्तनिः' 'अदत्न्युवेवास्य' 'तदु–उवाहुः' 'तस्मादु-उवाश्यम्'। अत्र तत्, तस्मात् इति पदद्वयस्य पूर्वनिमित्तत्वेन गृहीतत्वात् अत्र विभागे उकारः स्वकार्यभाक्स्यात्। ताभ्यामयुक्तादिति किम्'? 'तद्वाहुरुत्सृज्यम्' 'तस्माद्वाश्यम्'। 'यमिवर्णोऽसवर्णेवमुत्' इति परत्रास्य विधिर्वक्ष्यते। अत्र जटायाम्—'तद्व तद् तत्तद्व तस्माद्व तस्मात्तस्माद्व'। अत्र[1] 'आद्यष्टसु सवर्णोर्ध्वे' इति दीर्घस्स्यात्। 'ऊषुणो नस्सूषुणः' इति च। ननु पदं विकृतमिति न्यायादत्र वकारागमः किं न स्यात्? उच्यते—अत्रोकारस्य सु इत्यन्यस्वरसम्मिश्रत्वे कालव्यभिचरितत्वान्नापृक्तसंज्ञेति परिहारः। अनेनैव न्यायेन 'उ त्वा त्ववु त्वा' अत्रावादेशोऽवगन्तव्यः। पदादिति किम्? 'यज्ञपताऽ३विति यज्ञ* पता ३उ' इति, 'स्वपत्यायेति सु* अपत्याय-देव'। उकारादिति किम्? 'तमाहरत्'॥

यमिवर्णोऽसवर्णे वमुन्नश्येती मिथुन्यचि॥ २३३ ॥

पदान्तः असवर्णस्वरपर इवर्णो यकारं भजते, उत्–उकारश्च वकारं भजते। यथा—'यान्येवैनम्' 'अयस्मय्यवमा' 'आपूषा एत्वा वसु'। दीर्घस्य प्रग्रहविधानात् प्लुतस्य सन्धिनिषेधाच्च उदिति तपरकरणम् 'उन्नश्येती'ति। [2]'असवर्ण इति किम्? 'भवतीमम्' 'सूपस्थादेवः'। नश्येतीति। श्येती, मिथुनी अनयोरन्त्यस्वरः अचिपरे यकारं न भजते। यथा—'श्यैते नश्येती अकुरुत' 'न मिथुनी अभवन्'। अनयोः 'न स्वधामा' इत्यादिवदकारणसन्धिनिषेधादनार्षे न स्यादिति केचित्॥

'अत्रापूर्वविधिश्चैव निगमेषु हि कथ्यते।
अनुलोमेषु तत्कार्यं भवेदिति बुधैस्स्मृतः'॥

---

१. सू. २४१.

२. असवर्ण इति किम्? भवतीमम्–सूपस्थादेवः' इत्यादौ 'यमिवर्णोऽसवर्णः' 'आद्यष्टसु सवर्णोद्र्ध्वं' इति वचनद्वये प्राप्ते पूर्वत्वात्प्रबलमिमं निषेद्धुमसवर्ण इति गृह्यते इति क्वचित्पाठः।

इति वचनाच्च । 'अपि सीद मिथुन्यष्टौ च' 'अथ मिथुनी मिथुन्यथाथ मिथुनी' । 'बोधास बोधी'त्यादावकारे दीर्घत्वादेवानार्षे न स्यादेवेति ॥

यकारोऽवर्णपूर्वोऽचि ह्यादेशो यदि लुप्यते ॥ २३४ ॥

अवर्णपूर्व आदेशरूपो यकारो लुप्यतेऽचि परे । यथा—'आप उन्दन्तु' 'ध्रुवा अस्मिन्' 'उत्ताना ३ इति वयसाम्' 'उदस्थाममृताꣳअनु' 'इम एवास्मै' 'आप्त्या ऊनातिरिक्ताः' । एवं पूर्वः किम् ? 'अभ्यस्थात्' । आदेश इति किम् ? 'एष वाव यज्ञः' 'दक्षिणा यज्ञः' 'अतिष्ठिपा ३ यज्ञपता ३ उ' । अवर्णः पूर्वो यस्मादसाववर्णपूर्वः ॥

[1]न प्लुते प्रग्रहे सन्धिविधिर्यत्वे तु लुप्तके ॥ २३५ ॥

'पत्नीवाँश्चेतव्याः कार्याश्चित्याभ्यास्तथा उ च' इत्यादि लक्षणलक्षित-स्वरः प्लुत इत्युच्यते, न खलु प्लुतसंज्ञाक्षरे सान्निध्याल्लब्धे अचिपरे सन्धि-विधिर्भवति । यथा—'सुश्लोका ३ इति सु* श्लोका ३' 'अस्तु ही ३ इत्यब्रूताम्' । अयं प्रतिषेधो वक्ष्यमाणलक्षणस्य प्रग्रहे अच्परेऽपि न सन्धिविधिः । यथा—'कार्ष्णी उपानहौ' 'ऋतू इषश्च' 'ते एनमभि' 'हो इत्याह' इत्यादौ विधौ निषिद्धे अन्यस्मिश्चानारभ्यमाणे प्रकृतिवद्भवति । यत्वे-यकारे लुप्ते च सन्धि-विधिर्न भवति । यथा—'स इ धानः' 'ता अस्मात्' 'अग्र इमम्' 'आप्त्या इमा मे' । ननु लोपे सतीत्येतावतैवालम्, यकारस्येति किम् ? 'इन्वै' 'सेदु होता' इत्यादौ मा भूत् । किञ्चान्यवर्णपूर्वयकारनिवृत्तिपरस्तुशब्दः । यथा—'एकैकयास्तुतया' ॥

रोष्मभावात्तु नात्पूर्वं [2]लुप्तान्माच्च तदुत्तरात् ॥ २३६ ॥
नकाराद्याकृतेर्लुप्तादनुस्वारागमो भवेत् ॥ २३७ ॥

रेफश्च ऊष्मा च रेफोष्माणौ, तयोर्भावो यस्य तस्मात् नात्-नकारात्पूर्वं तदुत्तराद्रेफोष्मपराल्लुप्तान्मकारात्पूर्वं नकारात् यकाररूपात् लुप्तात्पूर्वञ्चानु-

---

१. 'न यलुप्ते प्रगृह्यञ्च प्लुतो नित्यं स्वरोत्तरे' इति पाठान्तरम् । तदनुसारेण क्वचित्पुस्तके एवमेव व्याख्यातम् । तन्मध्ये नित्यशब्दः किमर्थः ? अक्षरसंहितायामप्येष निषेधो भवतीति । यथा—'वाससी इव' 'बाहू उपस्तुत्यम्' 'ते अहोरात्रयोः' 'अथो अनभिजितम्' 'सुश्लोका ३ इति सु० श्लोका ३' 'त्वी ३ इत्यब्रवीत्' इत्यादिविधौ निषिद्धे अन्यस्मिश्चा-नारभ्यमाणे प्रकृतिवद्भवति इति पाठः ।

२. लोपादिति पाठः ।

स्वारागमो भवति । रेफभावाद्यथा—'अग्नी ँरफ्सुषदः' 'ऋतू ँर् ऋतुपते' । ऊष्मभावाद्यथा—'कर्णा ँश्चा कर्णा ँश्च' 'त्री ँस्तृचान्' । मकारलोपाद्यथा—'प्रत्युष्ट ँरक्षः' 'स ँशितम्मे' 'त ँवडहानि' 'स ँसमिद्युवसे' 'त्व ँह यद्यविष्ठ्य' । तदुत्तरादिति किम्, 'ईं मन्द्रासु प्रयसः' एकैकन्तस्य । नकारस्य यकारभावाल्लोपाद्यथा—'महा ँइन्द्रः' ॥

अनुस्वारो यजुष्येवमध्यायेऽपि यदा भवेत् ॥ २३८ ॥
तदा गकारसंयुक्तो न शान्तिश्शासरूपरः ॥ २३९ ॥

यजुषि अध्याये-यजुर्वेदेऽनुस्वारो यदा भवति, तदानुस्वारो गकारसंयुतस्स्यात् । उक्तान्येवोदाहरणानि । अस्यानुस्वारस्य गकारसंयुतत्वे "[1]स्वरोदये त्वनुस्वारो भवेदध्यर्धमात्रिकः' इति मात्राधिककालविधानात् तन्मध्यविरामस्य[2] 'विरामश्च तयोर्मध्ये वैशेषिका विदीर्घयोः' इति सपादमात्रिकत्वविधानाच्चानुस्वारस्वरयोस्सन्धिविधिर्न स्यादित्युक्तम् । ननु सर्वेष्वपि व्यञ्जनेषु स्थितेषु सत्सु गकारसंयुक्त इति कथं क्रियते ? अनयोर्घोषवत्वे सति ध्वन्याद्युच्चारणतुल्यत्वात् 'सन्देहे सन्निधिन्त्वपि' इति वचनेन गकारस्य मुख्यत्वात्, जकारादेरमुख्यत्वाच्चेति ब्रूमः । न शान्तिश्शेति । शान्तिश्शा, सरू, एवं परोऽनुस्वारो गकारसंयुतो न स्यात् । किन्तु ज्ञघ्न परानुस्वार इव केवलानुस्वार इति । यथा—'ओं शान्तिश्शान्तिश्शान्तिः' । शेति किम् ? 'अन्तरिक्ष ँशान्तिः' 'परमात्मं सरूपम्' । [3]रूपमिति किम् ? 'त ँसर्वन्दायात्' ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे यत्वप्रकरणम् ॥ १२ ॥

---

१. सू. ४५३. २. सू. ४५४.

३. रूपमिति किम् ? 'त ँसर्वन्दायात्' । 'ओं शान्तिः' इत्यत्र मकार एव शिष्टपाठानुसारिभिस्सर्वैरप्यङ्गीक्रियत इति चेत्—'ओमित्यत्र मकारो यः परे शान्तौ म एव हि' इति शिक्षान्तरबलान्मकारः, तदा इदं वचनं गकारमात्रनिवृत्तिपरमित्यनुसन्धेयम् । एवमपि 'रूप ँसरूप एव भूत्वा' 'प्रजां प्रजयन्ती ँसरूपाम्' इत्यत्र कथमिति चेदुच्यते—सरूपमिति मान्तस्यैव पदस्य निमित्तत्वेनोपादानमिति ज्ञायते । तथैव शिक्षान्तरमपि 'परमात्मं सरूपं प्राङ्मकारस्त्वनुनासिकः' इति । तथा च नोभयोर्विरोध इति सर्वमनवद्यम् इति सर्वं० ।

## अच्सन्धिप्रकरणम् ॥ १३ ॥

### अथ स्वरावुभावेकमाप्नुतोऽच्सन्धिरुच्यते ॥ २४० ॥

अथेत्ययमधिकारः। उभौ स्वरौ एकं रूपमित इत्यच्सन्धिः। अचौ सम्यग्धीयेते संयुज्येते इत्यच्सन्धिः कथ्यत इत्यधिकृतं वेदितव्यमित उत्तरं यद्वक्ष्यामः॥

### आद्यष्टसु सवर्णोद्ध्वे दीर्घमप्लुतपूर्वके ॥ २४१ ॥

[1]आदयश्च तेऽष्टौ चाद्यष्टौ तेषु अकाराद्युकारान्तेषु स्वरेषु अप्लुतपूर्वके प्लुतादन्यवर्णपूर्वे स्वरे आत्मनस्सवर्णे परे सति पूर्वापरभूतौ स्वरावेकं दीर्घमाप्नुतः। यथा—'गृह्लीष्वान्तरिक्षम्' 'रास्नासीन्द्राण्यै' 'सूपस्था देवः'। अप्लुतपूर्वः किमर्थः? 'अग्ना ३ इत्याह' इत्यत्रैकादेशः प्रसक्तः, तच्चानिष्टम्। ततः 'अप्लुतपूर्वके' इत्यनेन प्रतिषिद्धे सवर्णदीर्घे पारिशेष्यात् [2]'यमिवर्णोऽसवर्णेवमुत्' इति पूर्वस्य इकारस्य यत्वं स्यात्। स च यकारः[3] 'यकारोऽवर्णपूर्वोऽचि' इति लुप्यते। लुप्ते सति [4]'एत्वञ्चेवर्ण उत्तरे' इत्येकादेशः प्रसक्तः, सोऽपि प्रतिषिध्यते [5]'न प्लुते प्रग्रहे सन्धिविधिर्यत्वे तु लुप्तके' इत्यनेन। तस्माद 'अग्ना ३ इत्याह' इति सिध्यति। प्लुतः पूर्वो यस्मादसौ प्लुतपूर्वकः, प्लुतपूर्वको न भवतीत्यप्लुतपूर्वकः, तस्मिन्। सवर्णश्चासावूर्ध्वश्च सवर्णोर्ध्वः, तस्मिन्॥

### [6]अथात्रावर्णपूर्वे तावेत्वञ्चेवर्ण उत्तरे ॥ २४२ ॥

अथेत्ययमधिकारः। अवर्णपूर्वे सतीत्येतदधिकृतं वेदितव्यमित उत्तरं यद्वक्ष्यामः। इदमधिकारान्तरं [7]'एदोत्पूर्वेऽप्यकारोद्ध्वे' इति पर्यन्तं विज्ञेयम्।

---

१. 'आदिः अकारः तत्सहिताश्च ते अष्टौ च तेष्वाद्यष्टसु अकाराद्युवर्णान्तेषु नवसु नवस्वरेषु मध्ये अप्लुतपूर्वके प्लुतान्यपूर्वे यस्मिन् कस्मिश्चित्स्वरे आत्मनस्सवर्णपरे पूर्वपरभूतौ स्वरावेकं दीर्घमाप्नुतः। सर्व.

२. सू. २३३. असवर्णस्वरे परे सति इवर्णो यं भजते, उकारश्च वं भजत इत्यर्थः।

३. सू. २३४. ४. सू. २४२. ५. सू. २३५.

६. अथाप्यवर्णपूर्वे तावेत्वमिवर्ण उत्तरे इति पाठः।

७. सू. २४८.

अवर्णश्चासौ पूर्वश्चावर्णपूर्वः, तस्मिन्नवर्णपूर्वे इवर्णे च परे सति तावुभौ पूर्वपरभूतौ स्वरावेकमेकारमाप्नुतः । यथा—'हितेनेव जयामसि' 'अस्त्वथेमवस्य' ॥

उ वर्णोत्तर ओत्वञ्च ऐत्वमेदैत्परे तथा ॥ २४३ ॥

अ वर्णपूर्वे उ वर्णपरे सति तावुभौ स्वरौ ओकारमाप्नुतः । यथा—'वायवस्थोपायवस्थ' 'इषे त्वोर्जे त्वा' । उ वर्णश्चासावुत्तरश्चोवर्णोत्तरः, तस्मिन् । ऐत्वमिति । अवर्णपूर्वे एदैत्परे एकारे ऐकारे वा परे सति तावुभौ पूर्वपरभूतौ स्वरौ ऐकारमाप्नुतः । यथा–'[1]सम्ब्रह्मणापृच्यस्वैकताय'[2] 'सोमैन्द्रा बभ्रुललामाः' । [3]एत् एकारश्च, ऐत् ऐकारश्च एदैत् इति समाहारद्वन्द्वः । एदैच्च तत्परञ्च एदैत्परमिति कर्मधारयः, तस्मिन् एदैत्परे । एवमुपरितने वचनेऽपि समासः ॥

औत्वमोदौत्परेऽरमृत्यारं प्रोपावपूर्वके ॥ २४४ ॥

अवर्णपूर्वे ओकारे औकारे वा परे सति तावुभौ स्वरौ औकारमाप्नुतः । यथा–'ब्रह्मौदनं पचति' 'दाम्ना पौम्भन्' । अरमिति । अवर्णपूर्वे ऋति ऋकारे परे सति तावुभौ स्वरौ अरमिति विकारमाप्नुतः। यथा–'अर्धर्च एकाम्' 'तस्यर्क्सामानि' 'स्वाहर्क्सामयोः' । आरमिति । [4]प्र-आ-उप-अव एतेषु पदेषु वर्तमानो योऽवर्णस्तस्मिन् पूर्वे ऋकारे परे च सति तावुभौ स्वरौ आरमिति विकारमाप्नुतः । यथा–'ऋतुना प्र प्रार्तुनर्तुना प्र' 'नार्तिमार्च्छति' 'ऋत्वा सादयति सादयत्यार्त्वर्त्वा सादयति' 'ऋतेनार्तेनर्तेना' 'तमुपार्च्छत्यथ को देवान्' 'अवार्च्छत्येवम्' 'ऋतूनामवावार्तूनामृतूनामव' । तत्पूर्वः किम् ? 'नेन्द्रियेण वीर्येण व्यृध्यतेऽपवै' इत्यादौ जटायाम्माभूदिति ॥

न स्वधा मा प्रपास्यूर्ध्व आपूषाज्या प्रबुघ्नियाः ॥ २४५ ॥

[5]अमिनन्त स्वपाठेऽचि पदं मानो यदाषुसाम् ॥ २४६ ॥

स्वधा-मा-प्रपा एतेष्वन्त्यस्वरः स्वपाठे स्वयं पाठे असिपरः आपूषा-ज्या-प्रबुघ्नियाः-अमिनन्त एष्वन्त्यस्वर आर्षे स्वरपरस्सन् पूर्वविधिं न प्राप्नोति । यथा-

---

१. तै. सं. १. १. ८.   २. तै. सं. ५. ६. १५.

३. एच्च ऐच्च एदैतौ परौ यस्मात्तस्मिन् एदैत्परे इति सर्व०

४. प्र–आ–उप–अव एते पूर्वे यस्मात्तस्मिन् । प्राद्युपसर्गेषु अन्त्यावयविभूतावर्णपूर्वे इति यावत् । सर्व०

५. 'अमिनन्त स्वपठेऽचि पदं स्यान्नो यदाषुषू, पदं स्यान्मा यथा षुषू, पदं मा स्याद्यथाषुसाम्' इति च पाठः ।

'स्वधा अस्युर्वी'। [1]'स्वेति किम्?[2] 'ऋत श्रीरसि धा असि' इत्यत्र विसर्गस्य यत्वसूचनार्थमिति केचित्। [3]'सहस्रस्य प्रमा असि' 'धन्वन्निव प्रपा असि'। प्रेति किम्? [4]''त्वमग्ने व्रतपा असि' इति तद्वत्। असि परः किम्? 'सप्तधा अग्नेः प्रियास्तनुवः। 'स्तेतो मा पगात' 'आपूषा एत्वा वसु'। आ इति किम्? 'तं पूषा धत्त' 'ज्या इयम्' [5]''प्रबुध्निया ईरते'। प्रेति किम्? 'सबुध्निया उपत्रा अस्य' इत्यत्र विसर्गावबोधनार्थमिति च तद्वत्। 'अभिनन्त एवैः'।[6] आर्ष इति किम्? 'असि स्वधा स्वधास्यसि स्वधा' 'इव प्रपा प्रपेवेव प्रपा' 'आ पूषा पूषापूषा' 'सुपर्णा अभिनन्तामिनन्त सुपर्णास्सुपर्णा अभिनन्त' 'विमेति वि॰ मा' इत्यादावनार्षे मा भूदिति। [7]मा-नः-यदा-षु-साम् एषु प्रत्येकं पदग्रहणं जानीयात्। तस्मात् 'ऋतधामासि' इत्यत्रायं निषेधो न स्यात्॥

## ओष्ठेतनेव एष्टश्चे देमन्नोद्मन्परं पदम्॥ २४७॥

ओष्ठ-एतन-एवः—इष्टः-एमन्-ओद्मन् एवं परोऽवर्णपूर्वः परं-पररूपमेकादेशं भजते। 'अथात्रावर्णपूर्वं' इत्येवमनुवर्तमानादवर्णपूर्व इति लभ्यते। ओष्ठेति सर्वावस्थस्य ग्रहणम्। यथा—'स्वाहोष्ठाभ्याम्' 'अधरेणोष्ठेन' 'शमितार उपेतन' 'निरमिमतेवश्छन्दः' 'अशीयेष्टा रायः' [8]''अपान्त्वेमन्' 'अपान्त्वोद्मन्'। अवर्णपूर्व इति किम्? 'शित्योष्ठश्शिति भ्रुः'[9]॥

इति सूर्यनारायणसूराविधानिविरचिते वेदतैजसाख्ये व्यासशिक्षा-
विवरणे अच्सन्धिप्रकरणम्[10]॥ १३॥

---

१. स्वेति किम्? ऋत श्रीरसिधा असीत्यत्र मन्दधियां विसर्गस्य यत्वसूचनार्थमित्युक्तम् इति क्वचित्पाठः।

२. तै. सं. १. १. ६. ३. तै. सं. ४. ४. ११. ४. तै. सं. १. १. १४.

५. तै. सं. ४. ३. १३.

६. आर्ष इति किम्? 'असि स्वधा स्वधास्यसि स्वधा' 'प्रमा अस्यसि प्रमा प्रमासि' प्रपा अस्य सि प्रपा प्रपासि' 'पूषा एत्वेतु पूषा पूषैतु' 'ज्या इयमियञ्ज्या ज्येयम्' इत्यादावनार्षे मा भूदिति क्वचित्पुस्तके। अत्र यद्यप्याद्योदाहरणवर्जमुदाहृतपाठो न बह्वादृतः। मतमेतत् जटासिद्धान्तचन्द्रिकाव्याख्यातुरित्यपि तत्रैव व्याख्याने विशेषतो द्रष्टव्यम्।

७. अत्र यदाषु सामितिवत् मा शब्दः पदं स्यात् इति सर्व०। न इति यथा षु षू इति प्रत्येकं पदग्रहणं स्यादित्युक्तम् इति क्वचित्पाठः।

८. तै. सं. ४. ३. १.

९. उत्तरत्र पूर्वनिमित्ताविशेषविधानाद्वर्णपूर्वोऽधिकारो निवृत्त इति सर्व०।

१०. व्यासशिक्षाविवरणे एकवाक्यप्रकरणम् इति क्वचित्पाठः।

## अनैक्यप्रकरणम् ॥ १४ ॥

एदोत्पूर्वेऽयकारोदूर्ध्व एकं पूर्वसमन्वितः ॥ २४८ ॥

एकारपूर्वे ओकारपूर्वे वा अकारे च परे सति तावुभौ स्वरावेकमेवादेशं पूर्वसमं पूर्वरूपमेकारभावमोकारभावञ्चेतः आप्नुतः। यथा—[1]'तेऽशीय सामे' [2]'ततोऽजस्तूपरः' [3]एच्च ओच्च एदोतौ तयोस्समाहारद्वन्द्वः। तच्च तत् पूर्वञ्च तस्मिन्। अकारश्चासावूर्ध्वश्च तस्मिन् ॥

अथ प्राकृत उख्येयुर्याज्या द्रापे हिरण्यव ॥ २४९ ॥
धाता जुष्टो विकर्षोऽग्निर्मूर्बिहव्येयमे नमः ॥ २५० ॥
वाजपेय महापृष्ठ्य श्योनायोप ध्रुवक्षितिः ॥ २५१ ॥

अथेत्ययमधिकारः। प्रकृतोऽकार उच्यत इत्येतदधिकृतं वेदितव्यमित उत्तरं यद्वक्ष्यामः। उख्यम्, ईयुष्टेये, याज्या, द्रापे अन्धसः, हिरण्यवर्णाः, धातारातिः, जुष्टो वाचः, विकर्षः, अग्निमूर्द्धा दिवः, विहव्यम्, इयमेवसाया, नमस्ते रुद्र, वाजपेयम्, महापृष्ठ्यम्, श्योनायत्वेन, उपप्रयन्तः, ध्रुवक्षितिः—एष्वनुवाकेषु एदोत्पूर्वे सत्यकारः स्वभावात्तिष्ठति,[4] एतयोरेकादेशाभावात्। एच्च एकारश्च ओच्च ओकारश्चेत्यर्थः। उख्ये यथा—'श्रृण्वन्ति विश्वे अमृतस्य' 'यो अग्निरग्ने'। ईयुष्टेये इत्यत्र यथा—'ये अपरीषु पश्यान्'। याज्यासु यथा—'सुपथा राये अस्मान्' 'को अद्य युङ्क्ते'। 'द्रापे अन्धसस्पत' इत्यत्र यथा—'उत मानो अर्भकम्'। हिरण्यवर्णा इत्यत्र यथा—'एको देवो अप्यतिष्ठत्' 'मन्ये भे जानो अमृतस्य' 'श्रयस्वान्तरिक्षे अन्तरिक्षे श्रयस्व श्रयस्वान्तरिक्षे'। वकारेण किम्? 'हिरण्यपाणिमूतये' इत्यत्र माभूत्। धातारातिरित्यत्र यथा—'निधिपतिर्नो अग्निः' 'प्रयति यज्ञे अस्मिन्'। जुष्टो वाच इत्यत्र यथा—'उत्सन्दुह्रते अक्षितम्' 'यो द्रप्सो अंशुः'। अश्मन्नूर्जमित्याद्यनुवाकपञ्चकस्य विकर्षसंज्ञा[5]।

---

१. तै. सं. १. ६. ३.    २. तै. सं. २. १. १.

३. एच्च ओच्च एदोतौ तौ पूर्वौ यस्मात्तस्मिन्, अकार ऊर्ध्वो यस्मात्तस्मिन् इति सर्व०

४. अत्रोख्य याज्या पृष्ठ्यसंज्ञावचनानाम् 'ग्रहे हिरण्यवर्णीये' इत्यत्र द्रष्टव्यम्।

५. 'पञ्चानुवाकमश्मन्नित्यस्य प्रश्नस्य चादिकम्। विकर्षसंज्ञमित्याहुः ऋषयो वेदवादिनः' ॥

तत्र यथा–"अन्यन्ते अस्मत्तपन्तु' [1]"अभि वीरो अभि सत्वा'। अग्निर्मूर्द्धेत्यत्र यथा–'[3]स योजते अरुषः' 'एना वो अग्निन्नमसा'। मूर्धेति किम् ? 'अग्निर्मा दुरिष्टात्' इत्यत्र माभूत्। 'वाजोन' इत्यनुवाकत्रयस्य विहव्यसंज्ञा[4]। तत्र यथा—'विश्वे अद्य मरुतः' 'विश्वे देवासो अधिवोचता मे'। इयमेवसायेत्यत्र यथा–'चतुष्टोमो अभवत्'। ए इति किम् ? इयन्ते शुक्रेत्यत्र मा भूत्। नमस्ते रुद्रेत्यत्र यथा – 'अथो ये अस्य' 'ताम्रो अरुण उत'। देवसवितः प्रसुवेत्यादि षडनुवाकानां[5] वाजपेयसंज्ञा। तत्र यथा—'ते अग्रे अश्वम्' 'धरुणो मध्वो अग्रम्'। समिद्दिशाञ्जीमूतस्य यदक्रन्दो मानो मित्रो ये वाजिनमग्नेर्मन्व इत्यनुवाकषट्कस्य महापृष्ठ्यसंज्ञा[6]। तत्र यथा—'विवस्वद्वाते अभिनः' 'सोमो अधि ब्रवीतु'। महेति किम् ? 'पृथिवी तेऽन्तरिक्षेण'[7]। श्येनायेत्यत्र यथा—'अथ विश्वे अरपाः' 'अक्रुशासो अस्य'। उप प्रयन्त इत्यत्र यथा–'आरे अस्मे च शृण्वते' 'उत्सन्दुदुह्रे अह्रयः'। ध्रुवक्षितिरित्यत्र यथा—'विश्वे अभिगृणन्तु' 'ऊर्म्मिर्द्रप्सो अपामसि'। क्षितिरिति किम् ? ध्रुवेत्यकारान्तस्य यदि ग्रहणं स्यात्तर्हि 'ध्रुवोऽसि' इत्यत्रापि भवेदिति ॥

तेष्वहन्यनिष्टृवद्यादवन्त्वसंहसोंऽहतिः ॥ २५२ ॥

अहनि-अनिष्टृतः-अवद्यात्-अवन्त्वस्मान्-अंहसः-अंहतिः एष्वकारः प्राकृतः स्याद् एदोत्पूर्वः। तेषु-उख्याद्यनुवाकेष्वेव। यथा[8]—'शुचिश्शुक्रे अहन्योजसीना'[9] 'वर्धन्तां ते अनिष्टृतः' 'अनिष्टृतो विराड्विराडनिष्टृतो अनिष्टृतो विराट्' 'मित्रमहो अवद्यात्' 'ते अवन्त्वस्मान्'। अस्मानिति किम् ? 'तेनोऽवन्तु पितरः' 'प्रमुञ्चन्तो नो अꣳहसः' 'मुञ्चत्वꣳहसो अꣳहसो मुञ्चतु मुञ्चत्वꣳहसः'

---

१. तै. सं. ४. ६. १.  २. तै. सं. ४. ६. ४.  ३. तै. सं. ४. ४. ४.

४. विहव्योऽपि च वाजो नः प्रभृतीनां विधीयते।
त्रयाणामनुवाकानामिति वेदविदो विदुः' ॥
'धाता जुष्टो विकर्णोऽग्निर्मूर्धा हव्ये यमेनमः' इति पाठं स्वीकृत्य नामैकदेशे नामग्रहणमिति न्यायेन विहव्य इत्यस्य हव्य इत्यपि संज्ञेति सर्व०

५. पाकयज्ञमिति प्रश्ने देवसवितरादिषु। वाजपेयाभिधानं षडनुवाकं समीर्यते ॥
देव सवितरारभ्य उपमायान्त संज्ञिकम्। वाजपेयाभिधानं षडनुवाकं विपश्चितः ॥

६. यत्तत्पञ्चमकाण्डे च अनुवाकत्रयं विना। पृष्ठ्यमेव महापृष्ठ्यमिति वेदविदो विदुः ॥

७. पृष्ठ्यसंज्ञक 'कस्त्वाच्छ्यती' त्यनुवाकगतत्वान्नात्रैक्यमिति भावः।

८. तै. सं. ४. ४. १२.  ९. तै. सं. ४. १. ७.

'परिद्वेषसो अꣳहतिः' अꣳहेत्येतावतैवालम् । आभ्यां किम् ? 'हवामहेऽꣳहो मुचम्' । यवनहपरत्वादेषु प्राप्यमाणेषु एकादेशेषु तदपवादोऽयं विहितः । तेष्विति किम् ? 'पाप्मनोऽꣳसः' ॥

[1]अन्वापस्त्वो वातोऽर्मासो मर्तो दत्ते रथस्त्वघः ॥ २५३ ॥

अत्र विसर्गान्तानाम् ओत्वमापन्नानां पूर्वनिमित्तत्वं विज्ञेयम् । आपः-त्वः-वातः-धर्मासः-मर्तः- दत्ते-रथः एवमधः पूर्वः अन्वित्यत्राकारः प्राकृतः स्थितः । यथा—'तस्मादापो अनुस्थन' 'पीयति त्वो अनुत्वः'[2] 'धनुस्तद्वातो अनुवातु ते' 'त्रयो घर्मासो अनुज्योतिषा' 'यदा ते मर्तो अनुभोगम्' 'शुक्रमादत्ते अनुहाय' 'अनुत्वा रथो अनु' । तत्पूर्वः किम् ? 'अनुगावोऽनुभगः' । अन्विति किम् ? 'वातोऽभिपवते' । यवनहनिषेधार्थोऽयमारम्भः ॥

वातः पूर्वोऽभिवापश्च अपः पूर्वोऽगमत्त्वनु ॥ २५४ ॥

अभिवातु-अपः-अनयोरकारो वातः पूर्वो दृश्यते । यथा—[3]'मयोभूर्वातो अभिवातु' । वा इति किम् ? 'वातोऽभिपवते' [4]'यद्वातो अपः' । तत्पूर्व, किम् ? 'अवरुन्धेऽपोऽग्रे' । अपः पूर्व इति । अगमत्-अनु अनयोरकारो दृष्टः, अपः पूर्वः । यथा—'अपो अगमदिन्द्रस्य' 'अपो अन्वचारिषम्' । तत्पूर्वः किम् ? 'पशवोऽनूदायन्' । अनयोरिति किम् ? 'अपो ३ ऽभ्यम्रियत' ॥

आपः पूर्वोऽद्भिरस्मांश्चेदपान्न पात्तथैव च ॥ २५५ ॥

अद्भिः-अस्मान्-अपान्नपात् एष्वकारो दृष्टः आपः पूर्वः । यथा—[5]'समापो अद्भिरग्मत' [6]'आपो अस्मान्मातरः' 'देवीरापो अपान्नपात्' । नपादिति किम् ? 'वारुणीरापोऽपाञ्च' । तत्पूर्वः किम् ? 'सोऽस्मान्पातु' ॥

अदूर्ध्वोऽस्मान् स इन्द्रोऽधस्तेऽधोऽग्नेऽन्धोऽशुरद्य च ॥ २५६ ॥

सः इन्द्रः एवंपूर्वः अस्मानित्यत्राकारो दृष्टः अकारे परे । यथा—[7]'मा सो अस्माꣳअवसाय' [8]'इन्द्रो अस्मानस्मिन्' । तत्पूर्वः किम् ? 'सोऽस्मानमुत्र' ।

---

१. अनुघर्मास आपस्त्वो रथो मर्तश्च पूर्वकः ।
अन्यत्र त्वनुदत्तोऽपो वातोऽधोऽपोऽभिवातु च ॥ इति पाठः ।

२. तै. सं. ५. ५. ७.

३. तै सं. ५. ५. ७. ४. तै. सं. ७. ४. १७. ५. तै. सं. ७. ४. २०.

६. तै. सं. १. १. ८. ७. तै. सं. १. २. १. ८. तै. सं. ५. ७. ६.

९. तै. सं. ३. १. ६.

अदूर्ध्वं इति किम् ? 'सोऽस्मान् पातु'। तेऽध इति। अग्ने-अन्धः-अंशुः-अद्य-एष्वकारो दृष्टस्तेपूर्वः। यथा–'यत्ते अग्ने तेजः' 'उपो ते अन्धः' 'अꣳशुना ते अꣳशुः' 'पशुं पशुपते ते अद्य'। एष्विति किम् ? 'तेऽग्नये पवते'। तत्पूर्वः किम् ? प्रथमोऽꣳशुः'॥

ग्न्यूदूर्ध्व आविन्नस्सोमोऽधोमेऽधोऽग्नेऽस्याश्विनापरा। २५७॥

आविन्नः-सोमः एवं पूर्वः अकारो दृष्टः ग्निपरः। यथा-'[1]आविन्नो अग्निर्गृह-पतिः' '[2]सोमो अग्निरुपदेवाः'। ग्नीत्यनेकार्थः। यथा–'यद्यग्निष्टोमस्सोमः'। अत्र जटायाम्–'अग्निष्टोमस्सोमस्सोमो अग्निष्टोमोऽग्निष्टोमस्सोमः'। तत्पूर्वः किम् ? 'सोऽग्निर्जातः'। ग्न्यूर्ध्व इति किम् ? 'नैन ꣳ सोमोऽति पवते'। मेध इति। अग्ने-अस्य-अश्विना-अपरा-एष्वकारो दृष्टो मेपूर्वः। यथा–'इमा मे अग्न इष्टकाः' 'समिद्धो अग्ने मे' अत्र विलोमे। 'हविषो मे अस्य' 'पुनर्मे अश्विना युवम्' 'यद्वा मे अपरागतम्'। एष्विति किम् ? 'प्राणश्च मेऽपानः'। मेपूर्वः किम् ? 'तेन त्वादधेऽग्ने' 'एतेऽस्यामुष्मिन्'॥

नः पूर्वोऽघाद्यपथ्यस्मिन्नसदभ्यग्निरन्तमः॥ २५८॥

अघ-अद्यपथि-अस्मिन्-असत्-अभि-अग्निः-अन्तमः-एष्वकारो दृष्टो न इत्येवं पूर्वः। यथा—'[3]रक्षा मा किर्नो अघशꣳसः' तेभिर्नो अद्यपथिभिः'। पथीति किम् ? 'अमावै नोऽद्यवसु' 'शिक्षा नो अस्मिन्' 'सुपारा नो असद्वशे' 'स्विष्टिन्नो अभिवसीयः' 'सरस्वत्यभि नो नेषि' अत्र व्युत्क्रमे। 'अयं नो अग्निर्व-रिवः' 'अग्ने त्वन्नो अन्तमः'। एष्विति किम् ? 'अप्येव नोऽत्रास्त्विति'। नः पद-मिति किम् ? 'प्रणीयमानोऽग्निः'। नः पूर्वः किम् ? 'उत्तरतोऽघायुः' 'तेऽस्मिन्नै-च्छन्त' 'गर्दभोऽसत्तरः'॥

[4]नमः पूर्वोऽग्रियाग्रे त्वश्वेभ्यश्चेतरत्र तु॥ २५९॥

अग्रियाय-अग्रे-अश्वेभ्यः एष्वकारो दृष्टो नमः पूर्वः। यथा–'[5]नमो अग्रियाय च' 'नमो अग्रेवधाय च' '[6]नमो अश्वेभ्यः'। एष्विति किम् ? 'नमोऽग्नये प्रति

१. तै. सं. १. ८. १२. २. तै. सं. ३. २. ४. ३. तै. सं. ४. ६. ६.

४. 'नमः पूर्वोऽग्रियाग्रेऽश्वेभ्योऽपः पूर्वतो गमत्' इति पाठः।

५. तै. सं. ४. ५. ५. ६. तै. सं. ४. ५. ३.

विद्धाय'। तत्पूर्वः किम्? '[1]अपोऽग्रेऽभिव्याहरति'। विषयेभ्योऽन्यत्राभिवातः पूर्वाद्यारम्भ इति ज्ञातव्यः॥

धीरासोऽदब्धासोऽषाढ एकादशास एव च॥ २६० ॥
ऋषीणां पुत्रश्शार्याते पृथिवी यज्ञ एव च॥ २६१ ॥
पितार आसते ये गो समिद्ध ऋषभः पुवः॥ २६२ ॥
युवयोर्यो गृह्णाम्यग्रे जज्ञे वानेष एव च॥ २६३ ॥
पतिर्वः पृष्ठे संस्फानश्शुष्मो वृष्णो वचस्तथा॥ २६४ ॥
वर्षिष्ठे जुषाणः पाथो यो रुद्रः पूर्व इत्यपि॥ २६५ ॥

धीरासः-अदब्धासः-अषाढः-एकादशासः-ऋषीणां पुत्रः-शार्याति पृथिवी यज्ञे-पितारः-आसतेये-गो-समिद्धः-ऋषभः-पुवः-युवयोर्यः-गृह्णाम्यग्रे-जज्ञे-वानेषः-पतिर्वः - पृष्ठे-संस्फानः-शुष्मः-वृष्णः-वचः-वर्षिष्ठे-जुषाणः-पाथः-यो रुद्रः एवं पूर्वोऽकारो दृष्टः। यथा—[2]'तान्धीरासो अनुदृश्य' '[3]अदब्धासो अदाभ्यम्' 'अषाढो अग्निर्बृहद्वयाः' 'एकादशासो अप्सुषदः' 'ऋषीणां पुत्रो अधिराजः'। ऋषीणामिति किम्? 'यस्य पुत्रोऽजातः स्यात्तेजस्वी'। 'उरुधारा पृथिवी यज्ञे अस्मिन्'। पृथिवीति किम्? 'ते मास्मिन् यज्ञे' इत्यत्र जटायां मा भूत्। 'त्वत्पिता अग्ने' 'अध्यासते ये अन्तरिक्षे'। आसत इति किम्? 'ये पृथिव्यां येऽन्तरिक्षे'। 'गो अर्घमेव सोमम्' 'अगो अर्घं यजमानम्' इति च 'अदादि' इति वचनात्। 'समिद्धो अञ्जन्' 'द्यामृषभो अन्तरिक्षम्' 'अश्वऋषभो वृष्णिः' इत्यत्र जटायाम्। 'अग्रे पुवो अग्रे पुवः' 'युवयोर्यो अस्ति'। युवयोरिति किम्? 'वपति योऽप्सु भस्म'। 'मयि गृह्णाम्यग्रे अग्निम्' अत्र विलोमे समस्तनिमित्तसद्भावात्। 'गृह्णाम्यग्रे अग्रे गृह्णामि गृह्णाम्यग्रे'। गृह्णामीति किम्? 'अष्टौ कृत्वोऽग्रेऽभिषुणोति' 'अग्रे अग्निमग्निमग्रे अग्निम' इति च। 'इतः प्रथमञ्जज्ञे अग्निः' 'इडावा ॐ एषो असुर'। वानिति किम्? 'शुक्र एषोऽन्तोऽन्तम्मनुष्यः' 'यज्ञपतिर्वो अत्र'। पतिरिति किम्?

१. 'अपोऽग्रेऽभिव्याहरति'। इतरत्र-उत्तरत्रेत्यर्थः। एदोत्पूर्वस्याकारस्य प्रकृतिभावार्थं पूर्वोत्तरयोः पदयोर्निमित्तत्वेन ग्रहणं पूर्वत्र। उत्तरत्र त्वन्यतरस्यैव ग्रहणमिति ज्ञापयितुमितरत्रेति यत्नः। सर्व०

२. तै. सं. १. १. ६. ३. तै. सं. १. १. १०.

'नवोऽभागानि'। 'नाकस्य पृष्ठे अधिरोचने' 'अन्तरिक्षस्य पृष्ठे पृष्ठे अन्तरिक्ष-स्यान्तरिक्षस्य पृष्ठे' 'सग्ँ स्फानो अभिरक्षतु' 'उच्छ्मो अग्ने यजमानाय' 'वृष्णो अश्वस्य सन्दानम्' 'उग्रं वचो अपावधीम' 'वर्षिष्ठे अधिनाके' जुषाणो अप्तुराज्यस्य' 'प्रियं पाथो अपीहि' 'यो रुद्रो अग्नौ'। य इति किम्? 'यदुपतृन्द्याद्-द्रुद्रोऽस्य'॥

अरतिमस्य यज्ञस्य त्वतिद्रुतोऽतियन्ति च ॥ २६६ ॥
अविष्यन्ननमीवश्च अन्नेष्वर्चिस्तथानृणः ॥ २६७ ॥
अप्सु योऽज्यानिमर्वन्तमजीतानन्हियास्तथा ॥ २६८ ॥
अम्बाल्यस्त्वङ्गिरोऽङ्गे च अस्कभायत्तथा कृणोत् ॥ २६९ ॥
अश्वसनिरशिश्रेच्च अच्युतोऽस्थभिरघ्निय ॥ २७० ॥
अध्वर स्वर ऊर्ध्वे चेदेष्वकारस्स्वभावतः ॥ २७१ ॥

अरतिम्-अस्य यज्ञस्य-अतिद्रुतः-अतियन्ति-अविष्यन्-अनमीवः-अन्नेषु-अर्चिः-अनृणः-अप्सुयः-अज्यानिम्-अर्वन्तम्-अजीतान्-अन्हियाः-अम्बा-अस्तु-अङ्गिरः-अङ्गे-अस्कभायत्-अकृणोत्-अश्वसनिः अशिश्रेत्-अच्युतः-अस्थभिः-अघ्निय-एषु पदेष्व-कारः स्वरपरे अध्वरेत्यस्मिन्नकारश्च प्राकृतस्तिष्ठति। यथा—'मूर्धानन्दिवो अरतिम्' '[2]यन्मे अग्ने अस्य यज्ञस्य'। यज्ञस्येति किम्? 'एतेऽस्यामुष्मिन्'। 'प्रत्यङ्ङ्खसोमो अतिद्रुतः' 'तयोः पश्यन्तो अतियन्त्यन्यम्'। आभ्यां किम्? 'नैनग्ँ सोमोऽतिपवते' 'नयवसे अविष्यन्' 'स्वावेशो अनमीवः' 'ये अन्नेषु विविध्यन्ति' 'जातवेदो यो अर्चिः' 'तदग्ने अनृणो भवामि' 'एष वा अनृणः' अत्र जटायाम्। 'यो अप्सु य ओषधीषु'। य इति किम्? 'वा अश्वोऽप्सुजो वेतसः'। 'तेषां यो अज्यानिम्' 'स नो रास्वाज्यानिग्ँरायः' अत्र विलोमे। 'यो अर्वन्तम्' 'शरदो अजीतान्' 'तिरो अन्हियामा' 'अम्बे अम्बालि' 'बहिस्ते अस्तु बालिति' 'अस्तु मेऽत्रापि' अत्र विलोमे। 'अग्ने अङ्गिरो योऽस्याम्' 'अङ्गिरोभ्यः स्वाहा' अत्र जटायाम। 'अपो नो अङ्गे अङ्गे' 'यो अस्कभायदुत्तरम्' 'इत इन्द्रो अकृणोत्' यो भक्षो अश्वसनिः'। सनिरिति किम्? 'योऽश्वमेधेन यजते'। वरुणो अशिश्रेत्' 'मदाय रसो अच्युतः' 'चाच्युतो भवति' अत्र जटायाम्। 'इन्द्रो दधीचो अस्थभिः'।

---

१. तै. सं० १.४.१३. २. तै० सं० १.६.२.

भिरिति किम् ? 'शमस्थभ्योमज्जभ्यः' इत्यत्र जटायाम्माभूत् । अघ्निय, अध्वर इत्यकारान्तग्रहणमनेकार्थम् । 'एतानि ते अघ्निये' 'यदापो अघ्नियाः' 'पयो अघ्नियासु हृत्सु' 'हविष्मान्देवो अध्वरः' 'सत्यधर्माणो अध्वरे' 'अध्वरे विशो विशो अध्वरे अध्वरे विशः'। स्वरे परे इति किम्? "[1]'अन्धोऽध्वर्युः' [2]'सोऽध्वर्युम्' ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे अनैक्यप्रकरणम् ॥ १४ ॥

## ऐक्यप्रकरणम् ॥ १५ ॥

### अथैतद्विषयेष्वेकमेदो.दितस्त्वसीति च ॥ २७२ ॥

अथेति प्रतिप्रसवरूपोऽयमधिकारः । एतद्विषयेषु-याज्योख्यादिविषयेष्वनुवाकेषु पूर्वः ए ओ परः अकारश्च तावेकादेशमितः प्राप्नुतः, इत्यधिकृतं वेदितव्यमित उत्तरं यद्वक्ष्यामः । असीत्यस्मिन् ग्रहणे अकारः पूर्व एकार ओकारश्च पूर्वरूपमेकम्-एकादेशमितः । यथा–[3]'आयुर्दा अग्नेऽस्यायुः' [4]'सुपर्णोऽसि गरुत्मान्' 'वसुपतिर्हिक मस्यग्ने' अत्र विलोमे । 'असितवर्णाहरय' इत्यत्र विलोमे पदैकदेशत्वान्न भवति ॥

### न गर्भश्च यमोनद्धो भद्रः पूर्वस्त्वसीति च ॥ २७३ ॥

गर्भः-यमः-सन्नद्धः-भद्रः एषु वर्तमान ओकारःअसीत्यत्राकारश्च नैकादेशमितः। यथा–[5]'गर्भो अस्योषधीनाम्' 'असियमो अस्यादित्यः' 'गोभिस्सन्नद्धो असि' [6]'त्वं भद्रो असि क्रतुः' ॥

### यवनहेष्वजूर्ध्वेषु ग्नजोर्ध्वोऽकार उच्चकः ॥ २७४ ॥

स्वरोत्तर य व न हकारेषु परेषु सत्सु अकारः पूर्व एकार ओकारश्चैकादेशमितः । यथा–[7]'हिरण्यशृङ्गोऽयो अस्य' [8]'वनस्पतेऽवसृज' [9]'वरेण्योऽनुप्रयाणम्'

---

१. सकारान्तश्शब्दः । २. दकारान्तश्शब्दः । ३. तै० सं० १.५.५. ४. तै० सं० ४.१.१०. ५. तै० सं० ४.२.३. ६. तै० सं० ४.३.१३. ७. तै. सं. ४.६.७. ८. तै. सं. ४. १. ८. ९. तै. सं.४. १. १० ।

[१]'जम्भयन्तोऽहिं वृकम्' । अजूर्ध्वेष्विति किम् ? 'शुक्रन्ते अन्यत्' 'अग्ने अन्हांऽ॑ हितः' । ग्न जोर्ध्वे इति । ग्न परो ज परो वा उदात्तः अकारः पूर्वैकादेशमेति । यथा—[२]'शुचिः पावकवन्द्योऽग्ने' 'यो अन्त्यग्न' इत्यत्र जटायाम् । [३]'ओजोऽजायथा वृषभ' 'भानुरजस्रोऽजस्रः' । उच्चक इति किम् ? 'चक्रे अग्निर्जनुषा' 'न ततृषाणो अजरः' ॥

## मो वचस्स्थे दधानोऽधो अग्नेत्यकार ऐक्यतः ॥ २७५ ॥

मः-वचः-स्थे-दधानः-अत्र एङ् अग्नेत्यत्राकारश्चैकादेशमितः । म इति पदैकदेशस्संक्षेपार्थः । यथा—[४]'अङ्गिरस्वदच्छेमोऽग्निम्' 'अङ्गिरस्वद्भरिष्यामोऽग्निम्' 'अग्नेऽवमोऽवमोऽग्ने अग्नेऽवमः' [५]'वचोऽग्नये भरताबृहत्' [६]'सधस्थेऽग्निं पुरीष्यम्' 'प्रेरयस्वे अग्ने सधस्थे' अत्र व्युत्क्रमे । 'दधानोऽग्निर्होता' । तत्पूर्वः किम् ? 'पुरो अग्निर्भवेह' । अग्ने इति किम् ? 'सधस्थे अध्युत्तरस्मिन्' । ग्न इत्यस्यानुदात्ताकारार्थोऽयमारम्भः ॥

अभ्यावर्तिन्नभिद्रोहमधाय्यपि दधामि च ॥ २७६ ॥
अदितिश्शर्माग्नेर्जिह्वामग्नयः पप्रयोऽस्थाः ॥ २७७ ॥
अद्यान्वस्माकमरिष्टा अश्माश्वाश्रुतिरव्यथ ॥ २७८ ॥
अस्मत्पाशानस्मिन् यज्ञे अङ्गिरस्वदथो अदः ॥ २७९ ॥
अस्तास्मेधत्त चादुग्धा अर्चन्त्यत्रस्थचार्यमन् ॥ २८० ॥
अन्तरस्याममापूपमश्यामान्नाय चाकरम् ॥ २८१ ॥

अभ्यावर्तिन्-अभिद्रोहम्—अधायि—अपिदधामि—अदितिश्शर्म—अग्नेर्जिह्वाम्—अग्नयः पप्रयः-अस्थाः-अद्यानु-अस्माकम्-अरिष्टाः-अश्मा-अश्वाश्रुतिः-अव्यथमाना—अस्मत्पाशान्-अस्मिन्यज्ञे-अङ्गिरस्वत्-अथो-अदः-अस्ता-अस्मेधत्त-अदुग्धाः--अर्चन्ति-अत्रस्थ-अर्यमन्-अन्तरस्याम्-अमा-अपूपम्-अश्याम-अन्नाय-अकरम् एषु ग्रहणेषु अकारः पूर्वैकादेशमियात् । यथा—[७]'अग्नेऽभ्यावर्तिन्' [८]'जनेऽभिद्रोहम्' । आभ्यां

---

१. तै० सं० १.७.८. २. तै० सं० १.३.१४. ३. तै० सं० १.६.१२
४. तै० सं० ४.१.२. ५. तै० सं० ३.२.११. ६. तै० सं. ४.१.३
७. तै. सं. ४. २. १. ८. तै. सं. ३. ४. ११.

किम् ? 'बृहस्पते अभिशस्तेः' । 'सुमन्मेऽधायि' 'अग्नेऽपिदधाम्यास्ये' । दधामीति किम् ? 'ग्रीवायां बद्धो अपि कक्षे' 'नोऽदितिश्शर्म यच्छतु' । शर्मेति किम् ? यथा नो अदितिः करत्' 'अध्वरं नोऽग्नेर्जिह्वाम्' । जिह्वामिति किम् ? 'व्रतादद्न्ते अग्नेः' उरुव्यचसः । 'तेनोऽग्नयः पप्रयः' 'अग्नयः पप्रयः पप्रयो अग्नयोऽग्नयः पप्रयः' इति च पदद्वयनिमित्तसद्भावात् । पप्रय इति किम् ? 'पुरीष्यासो अग्नयः प्रावणेभिः' 'पवयोऽरथा इन्द्रे षिताः' 'अनुनोऽद्यानुमतिः' । अन्विति किम् ? 'प्रतत्ते अद्यशिपिविष्ट' 'नोऽस्माकमिन्द्र' 'अस्माकमग्ने अग्नेऽस्माकमस्माकमग्ने' 'पूर्वेऽरिष्टास्स्याम' 'परिवृङ्धिनोऽश्मा भवतु' । अश्वा इति यत्र यत्र श्रवणमस्ति तत्र तत्र पूर्वैकादेशः । 'वृषपाणयोऽश्वारथेभिः' । श्रुतिरिति किम् ? 'प्रचेतसो अश्वान्' 'भरन्तोऽश्वायेव' "ये तवाश्वासो देव' अत्र जटायाम् । दीर्घेण किम् ? 'चषालं ये अश्वयूपाय' 'क्षत्रं नो अश्वः' 'अश्वाजनि प्रचेतसः' अत्र जटायाम्[2] । 'मा सुपर्णोऽव्यथमाना' 'तेऽस्मत्पाशान्' । पाशानिति किम् ? 'अन्यन्ते अस्मत्तपन्तु' 'यः पिता तेऽस्मिन् यज्ञे' । यज्ञ इति किम् ? 'ते अस्मिञ्जवमादधुः' 'सधस्थेऽङ्गिरस्वत्' 'अङ्गिरस्वद्भरामो भरामोऽङ्गिरस्वदङ्गिरस्वद्भरामः' 'मह्यमग्नेऽथो सीद' 'येऽदो रोचने' 'यददोऽदो यद्यदः' 'प्रसितिन्द्रूणानोऽस्तासि' 'विश्वेऽस्मे धत्त' । धत्तेति किम् ? 'द्रविणं वाजो अस्मे वाजस्य' 'शूरनोनुमोऽदुग्धाः' 'गायत्रिणोऽर्चन्ति' 'येऽत्रस्थ पुराणाः' । स्थेति किम् ? 'त्वष्टा नो अत्र वरिवः' 'ये तेऽर्यमन्बहवः' 'अभि शूशुचोऽन्तरस्याम्' । अस्यामिति किम् ? 'रुक्मो अन्तर्विभाति' 'पुनस्ते मैधाम्' 'भद्रशोचेऽपूपन्देव' वाजयन्तोऽश्याम 'रायस्पोषोऽन्नायत्वा' 'अहन्तेभ्योऽकरन्नमः' ॥

गाहमानो जायमानो मन्यमानस्त्रिधोऽग्नयः ॥ २८२ ॥
तपसो भामितो धावः स्पतिभ्यो हेतयः पते ॥ २८३ ॥
आयोऽध्वर्यो क्रतोऽधश्चेन्नान्य प्रग्रह पूर्वकः ॥ २८४ ॥

गाहमानः-जायमानः-मन्यमानः-त्रिधः-अग्नयः-तपसः-भामितः-स्वधावः-वनस्पतिभ्यः-हेतयः-पते-आयो-अध्वर्यो-क्रतो एवमेदोत्पूर्वेऽकारे च परे सति तावभौ

१. 'ये तवाश्वासो देव' 'अश्वाजनि प्रचेतसः' इत्यत्र व्युत्क्रमे इति सर्व० ।

२. 'अश्वाजनि प्रचेतसः' इत्यत्र जटायामनेन प्रकारेणाभियुक्तपाठविरोधो दृश्यते । मतमेतज्जटाचन्द्रिकायामपि ( ४६-४७ ) तमार्धे द्रष्टव्यम् ।

पूर्वरूपमेकादेशं भजतः। यथा—[1]'गाहमानोऽदायः' [2]'जायमानोऽन्हाम्' 'कीरिणा मन्यमानोऽमर्त्यम्' 'अतिक्षिध्रोऽस्य[illegible]' 'यानग्नयोऽन्वतप्यन्त' अत्र उकारस्य वकारविक्रियायां हल् परत्वात् 'यवनहेषु' इत्येकादेश[illegible]दयमारम्भः। 'अग्नेस्तपसोऽधिजातः' 'इन्द्रभा[illegible]ऽस्य' 'देवस्वधावोऽमृतस्य'। स्वधेति किम्? 'अन्यावो अन्यामवतु'। 'वनस्पतिभ्योऽधि सम्भृताम्'। वनस्पतीति किम्? 'नमः पितृभ्यो अभियेनः'। 'इतयोऽन्य[illegible]' 'अन्नपतेऽन्नस्य नः' 'अन्धसस्पते पतेऽन्धसो अन्धसस्पते' 'अग्नेऽदब्धायोऽशीततनो' 'अध्वर्योऽवेरपा३ः' 'शतक्रतोऽनुतेदायि'।[3] आयो अध्वर्यो क्रतो इति [illegible]त्रयस्य परेणाकारेण यवनहादिलक्षणेनैवैकादेशे प्राप्ते सति 'न प्लुते प्रग्रहे' इति निषेधं प्रति प्रतिप्रसवार्थोऽयमारम्भः। तथा सति 'नान्यप्रग्रहपूर्वकः' इति पुनर्वचनं कण्ठोक्तपदार्थमित्युच्यते। यथा—'इमो अग्ने' 'विद्या हि सूनो असि' 'अथो यो योऽथो अथो यः' इत्यादि॥

## ग्रन्थान्तरेऽप्यनार्षेऽयं स्वेच्छया वर्तते त्विति ॥ २८५ ॥

ग्रन्थान्तरे-इतरग्रन्थे परायाते आरण्यकेऽपि अनार्षे पौरुषेये पदसङ्ख्येयादिसूत्रेषु च, अपिशब्दज्ञापितेऽस्मिन् लक्षणशास्त्रे हल्विसर्जनीयाच्सन्धिषु, अयमुक्तो विधिः प्रतिषेधश्च स्वेच्छया वर्तते—कुत्रचित्प्राप्तः कुत्रचिन्न प्राप्त इत्यर्थः। ग्रन्थान्तरे यथा—'[illegible]' 'द्वादशाग्निष्टोमस्य' 'वार्णवातः' 'इन्द्र एणं पराशरीत्' 'प्रमाणञ्च पुर इत'। पौरुषेये यथा—[4]'उश्नसी पोषम्' 'औषदश्वसहसावन्' इत्यादौ लक्षणं प्राप्तम्। तदप्राप्तं यथा—[5]'सईम्ममाद' 'प्र नक्षत्राय' 'प्रानति दृश्जम्' 'महि साममन्वत' 'महि सप्तदशेनावस्युज्ञाताः' 'चतुःपञ्चाशत्' 'उत्तिष्ठन्तरणिः' 'परियात अभ्यर्या' 'ब्रह्म इत्यार्षम्' 'नाहं कारयिता

१. तै. सं. ४. ६. ४.  २. तै. सं. २. ४. १४.

३. ननु 'एदोत्पूर्व' इति 'यवनहेपु' इति च वचनाभ्यामेकादेशे सिद्धे किमर्थोऽयमारम्भः? सत्यम्; 'न प्लुते प्रग्रह' इति निषेधबाधनार्थमिति ब्रूमः। एवमपि 'अथो ये अस्य' इत्यत्र जटायामथो पूर्वस्याथोशब्दस्य कण्ठोक्तत्वात् प्रग्रहपूर्वत्वेऽपि 'न प्लुते प्रग्रह' इति निषेधस्याप्रवृत्या प्रकृतिभावः कथं सिध्येदित्याशङ्कायामाह-'नान्यप्रग्रहपूर्वकः' इति। आयो अध्वर्यो क्रतो व्यतिरिक्तप्रग्रहसंज्ञकपूर्वभूत एकार ओकारश्च परभूतः पदादिरकारश्च यथाविहितमेकादेशं न भजत इत्यर्थः। यथा—'इमो अग्ने वीततमानि' 'विद्या हि सुनो असि' 'अथो ये येऽथो अथो ये' इति सर्व०

४. तै. सं. १. ३. ६. (शृङ्खला)  ५. तै. ब्रा. २. ५. ८

उच्चसन्धिर्भवेदुच्चः स्वरितः स्वारनीचयोः ॥ २९५ ॥

उदात्तसन्धेः पूर्वतः परतः उभयतो वा विद्यामानस्स्वर उदात्तश्चेत् तयोरचोर्योगे-सन्धीयमाने सति तस्य सम्मिश्रस्याक्षरद्वयस्यैक एवोदात्तधर्मस्स्यात्। सवर्णदीर्घमारभ्य सर्वस्मिन्नेकीभावे क्रमादुदात्तानुदात्तस्वरितपूर्वे उभयोदात्ते चोदाहरणानि दर्शयिष्यामः—यथा, 'प्रार्पयतु' 'ब्रह्मयच्छाऽपाग्ने' 'याज्येवैनम्' 'यो मा प्राऽवोचः' 'तं पूषाऽऽधत्त' 'दिवीव चक्षुः' 'अद्य वसु वसतीतीन्द्रो हि' 'मैत्रावरुणीत्याह'।

ननु 'सूत्रीयमिव' 'तेऽब्रुवन्' इत्यत्रोदात्तेनैकादेशे सति किं न स्यादयं विधिः? एवम् उकारे एङि च उदात्तपूर्वे सति "[1]उच्चोत्वान्नीच उत्त्वे स्यात्' '[2]नीचोर्ध्वोऽकारसम्मिश्रः' इति वचनाभ्यां स्वरितस्य विशेषविधानादिति ब्रूमः। 'रेतो दधातूत्सक्थ्योः' '[illegible]' 'दिक्षूपाऽदधत'। 'सेमान्नः' 'ह्रियेतेति' 'कार्येति' 'सेदु होता'। 'प्रोक्षितं गोपायत' 'ऊर्जः स्थोर्ज वः' 'स्वायुषोदोषधीनाम्' 'एवोपधत्ते'। 'नैनं प्रत्योषति' 'एक एव यजेतैकः' 'अथैकमुत्थालम्' 'यन्नैकाꣳरशनाम्' 'इन्द्रियमेवैन्द्रेण' 'विहितदवैर्यतेति' 'देवेभ्य ऐन्धैन्ध देवेभ्यो देवेभ्य ऐन्ध'। 'क्षत्रस्य त्वौजसे' 'स्वाहौषधीभ्यः' 'सौषधीरनु' 'प्रौक्षीः केनापः' 'हस्माऽऽहौपवेशिः'। 'आग्नेय्यचर्चाग्नीध्रम्' 'सैवास्यर्द्धिः' 'ऐन्धर्विष्टुतः' 'एष वार्षिरस्वदयत्' 'आर्तिमाऽऽर्च्छेत्' 'अवार्च्छत्येवम्'। 'अशीयेष्टः' 'स्वाहोष्ठाभ्याम्'। 'प्राणेषु मेऽप्यसदिति' 'गवेऽश्वाय' 'यज्ञेऽनवक्लृप्तः'। 'नोऽदितिश्शर्म' 'ओजोऽजायथाः' 'उक्थ्योऽथातिरात्रः' 'योऽपरुद्धः' एवमादि। स्वरितः स्वारनीचयोरिति। स्वारनीचयोः-स्वरितानुदात्तयोर्योगे तस्य सम्मिश्रस्याक्षरद्वयस्यैक एव स्वरितधर्मस्स्यात्। यथा—'अथ क्वास्य' 'कन्येव तुन्ना' 'छन्द्योपाकृताय स्वाहा' 'त्रिष्टुब्याज्यैषा वै'। इह स्वरितस्याविशेषेण ग्रहणेऽपि नित्यस्वरित एव गृह्यते, पदावयवानां सर्वव्यञ्जनानामक्षराणाञ्चोत्पत्तिकाल एव सम्भवात्। तस्मान्नित्यस्यैव मुख्यत्वम्। 'सामान्योक्तौ च सत्यां मुख्ये सम्प्रत्ययः' इति तस्यैव स्वीकारो युक्तः। अथाब्रवीदित्यादौ एकादेशस्योदात्तानन्तरभावित्वात् '[3]उच्चादुत्तरतो नीचः स्वरितं प्रतिपद्यते' इत्यनेनैव स्वरितो विज्ञेयः। अत एव 'अभ्यज्याधस्तादुपेत्य' इत्यादौ न स्यात्॥

नीचोर्ध्वाकारसम्मिश्र उच्च एङ् स्वरितो भवेत् ॥ २९६ ॥

---

१. सू० ३००. २. सू० २९६. ३. सू० ३०८.

अत्राभिनिहितश्चायमिति संज्ञायते बुधैः ॥ २९७ ॥

नीचेनानुदात्तेनोर्ध्वेन परेणाकारेण सम्मिश्र उच्च उदात्त एङ्-एकार ओकारो वा स्वरितमाप्नुयात् । असौ स्वरितः अभिनिहत इति बुधैः संज्ञायते । यथा—'तेऽब्रुवन्' 'सोऽब्रवीत्' । उच्च इति किम् ? 'ओजोऽसि' ॥

यवत्वे ह्युच्चयोर्यत्र इवर्णोकारयोरपि ॥ २९८ ॥

परतः स्वर्यते नीचः स्वरितः क्षैप्र उच्यते ॥ २९९ ॥

उदात्तयोरिवर्णोकारयोः स्थाने यथासङ्ख्यं यकारवकारयोस्सतोः, तस्मात् यवकाररूपावधेः परतः अनुदात्तः स्वर्यते, सः क्षैप्र इति वेदितव्यः । यथा—'अभ्यस्तात्' 'दिक्ष्वृद्धनुवन्ति' 'यज्ञं प्रत्यतिष्ठिपा ३ :' । उच्चयोरिति किम् ? 'वस्वसि' 'अन्वेनन्देवाः' ॥

उच्चोत्वान्नीच उत्वे स्यात्प्रश्लिष्टस्सन्धितो यमः ॥ ३०० ॥

उच्चञ्च तद् उत्वञ्च उच्चोत्वम् । तस्मादुदात्ताद् उकारात् नीचेऽनुदात्ते उकारे परतः स्थिते सति उभयोस्सन्धिविधिना ऊकारभावो यमः-स्वरितो भवेत् 'द्वियम एके द्वियमपरे' ( प्राति० २.७.३. ) इति स्वरितस्य यमशब्दप्रयोगात्, सः प्रश्लिष्ट इति प्रत्येतव्यः । यथा—'दिक्षूपदधाति' 'मासूत्तिष्ठन्' 'ऊ तु तू तु' 'ऊ नु नू नु' । उच्चादिति किम् ? 'सूपस्थाः' ॥

अखण्डे सयवो नित्यो नीचपूर्वः स्वयश्च वा ॥ ३०१ ॥

समानपदे वर्तमानः सयकारः सवकारः स्वरः नीचपूर्वः पूर्वाभावो वा प्रत्येकं यत्र स्थितः स्वर्यते स नित्यस्वरित इति विज्ञेयः । तस्मात्संहितासंहितयोर्वर्तते । यथा—'वायव्यम्' 'ततो बिल्वः' 'न्यञ्चम्' 'कस्व' । अखण्ड इति किम् ? 'अपशव्योऽपशुः' 'द्वन्नः' । नीचपूर्वः किम् ? 'मर्त्यां॑ आविवेश' 'सर्वां॑ अग्नीन्' । [1]तर्हि 'याज्यैवैनम्' 'उक्थ्योऽयातिरात्रः' इत्यादौ संहितायां स्वरितः किं न स्यात् ? नित्यस्वरितश्चेत्सर्वदा वर्तत इति चेत्-सत्यम्; अत्रान्यविशेषविधानादुदात्तत्वमिति ब्रूमः ॥

---

१. अत्र 'याज्यैवैनम्' 'उक्थ्योऽयातिरात्रः' इत्यादौ स्वरितस्य संहितायां उच्चत्वे सति अनित्य इति केचित् । तदसाधु; नीचपूर्वत्वे सति अन्यस्वरितस्यानुपपन्नत्वादत्रापि नित्य इत्येव निश्चीयते इति सर्व०

**स्थितस्वारस्य चान्त्योऽणुर्नीचः स्यात्प्रवणोत्तरे ॥ ३०२ ॥**

स्थितस्वारस्य-अभिनिहतः, क्षैप्रः, प्रश्लिष्टः, नित्य इत्युक्तस्वरितचतुष्टयस्यान्त्योंऽशः अणुकालोऽनुदात्तस्स्यात् प्रवणोत्तरे स्वरितपरे सति ॥

**स्वरद्वयस्य चैकस्मिन् [1]कम्पसंज्ञास्ति दीर्घता ॥ ३०३ ॥**

एकस्मिन्नचि स्वरधर्मद्वये सति तस्य कम्पसंज्ञा स्यात् । तत्र नीचस्याणुत्वे सति द्रुतवृत्तित्वात्कम्पवदुच्चारणे कम्पसंज्ञा स्यादिति केचित् । स कम्पस्वरो ह्रस्वश्चेत्तस्य दीर्घत्वं भवति ॥

**क्षैप्रकम्पश्चतुर्धैवमादूदेदैद्भिरुच्यते ॥ ३०४ ॥**

आकारोकारैकारैकारैरिति चतुर्भिः क्षैप्रस्वरितस्य कम्प उच्यते । यथा—'न्या ३ न्येऽन्ये निन्यन्ये' । 'अस्युर्व्यू ३ र्व्यस्यस्युर्वी' । 'विश्वानि ह्ये ३षोऽभिधामानि' 'एष्वे वै वैष्वे ३ ष्वेव' । 'अस्यैन्द्र्यै ३ न्द्र्यस्यस्यैन्द्री' ॥

**प्रश्लिष्टो नित्य ऊदाद्भ्यामेङाभिनिहतस्स्मृतः ॥ ३०५ ॥**

प्रश्लिष्टकम्प ऊकारेण कथितः । यथा—'उत्खिदत्युरू ३ रूत्खिदत्युरु' 'उर्वन्तरिक्षमन्तरिक्षमुरू ३ र्वन्तरिक्षम्' । नित्यकम्प आकारेण । यथा—'पितृदेवत्या ३ ऽँ ह्येतत्' 'न्यङ्ङग्निरग्निन्या ३ ङ्न्यङ्ङग्निः' 'क्व तर्हि तर्हि क्वा ३ क्व तर्हि' । पृथक्करणान्नित्य एङाप्युच्यते । यथा—'यदर्ये ३ ऽर्ये यद्यदर्यें' 'बहुदेवत्यो३ ह्येषः' । एङाभिनिहत इति । एङा-एकारेण ओकारेण चाभिनिहतकम्प ईरितः । यथा—'ते ३ऽन्योऽन्यम्' 'सो३ऽपो३ऽभ्यम्रियत' 'अर्के३ऽर्को३ऽर्कोऽर्केऽर्कः' इत्यादि ॥

**उच्चोद्ध्वौ यददीव्यादि त्रिके न कश्चनेति च ॥ ३०६ ॥**

**उच्चकम्पौ स्थितेङ्रूपौ [2]स्वाराः कम्पाश्च सांहिताः ॥ ३०७ ॥**

'यददीव्यं नृणम्' 'आयुष्टे विश्वतः' 'वैश्वानराय प्रति' इत्यनुवाकत्रये 'न कञ्चन वसतौ' इत्यनुवाके च । स्थित इति नित्यस्वरितश्च एङ्रूप इत्यभिनिहतस्वरितश्चेति[3] तौ स्वरितावुदात्तपरौ उदात्तकम्पौ स्तः । तद्वदत्राप्यन्त्याणुर्नीच इत्युक्तः, अन्यथास्य वैय्यर्थ्यात् । यथा—'ते३ऽस्मद्यक्ष्मम्' 'तन्वो३यद्दलिष्टम्'

१. कम्पसंज्ञा च इति पाठः ।

२. स्वारकम्पस्तु सांहिताः इति पाठः ।

३. 'तौ स्वारौ स्वरितत्वं विहायोदात्तपरौ सन्तौ इति पाठः ।

'वीर्या३बलम्' 'तन्वा३ॅं स्वायाम्' 'अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः' इत्याद्युदात्तकम्पा आरण्यके प्रोक्ताः। अत्र किम्? 'योऽपां पुष्पम्'। स्वारा इति। संहितायां स्वरितकम्पा इति पूर्वमेवोक्तम्। एवं द्विविधाः कम्पा मन्तव्याः[1] ॥

उच्चादुत्तरतो नीचः स्वरितं प्रतिपद्यते ॥ ३०८ ॥

उदात्तात्परोऽनुदात्तस्स्वरितं भजेत्। यथा—'माते गृध्नुः' 'ता अस्मात्' 'वाजोनः' ॥

स्वारोऽयं प्रचयश्चैव नोदात्तस्वरितोत्तरे ॥ ३०९ ॥

अयं स्वरितः प्रचयश्चोदात्तपरे स्वरितपरे वा सति स्वरितप्रचयौ न स्याताम्, किन्तु पूर्ववदनुदात्ताविति यावत्। यथा—'इषे त्वोर्जे त्वा' 'स इमान् लोकान्' 'वा एषोऽस्मात् वा एषोऽस्मात् इति सोऽब्रवीत्' 'अस्मिन् लोकेऽस्मिन्'। प्रातिहतपादवृत्ततैरोव्यञ्जनविषयमेतम्। स्वारोऽयमिति किम्? 'सर्वदेवत्यं यत्' 'वर्ज्यूतुभिः' 'तेऽप एवाभि' 'मासूत्तिष्ठन्'। प्रचयप्राप्तौ यथा—'भवन्त आ' 'योऽस्य स्वो ऽग्निः' ॥

स्वारादुपरि नीचानां प्रचयः परिकीर्तितः ॥ ३१० ॥

स्वारादिति जात्यपेक्षमेकवचनम्। अत्र सप्तस्वरितानां यस्मात्स्वरितादुत्तरतः अनुदात्तानामनुदात्तयोरनुदात्तस्य हि प्रचयस्स्यात्। यथा—'अथ क्वास्य' 'सोऽब्रवीत्' 'अग्नेदुद्ध्रगह्य किं शिलवन्य'। स्वारादिति किम्? 'कुसुरबिन्दः'। नीचानामिति किम्? 'कोऽस्येश्वरः' ॥

यस्समानपदे स्वारस्तैरोव्यञ्जन उच्यते ॥ ३११ ॥

अखण्डपदे यदि सोऽयमुच्चपूर्वस्स्वरितः तैरोव्यञ्जन इत्यभिधीयते। यथा—'स्वाहाशिताय' 'प्र उगम्' 'अथाब्रवीत्' 'स इन्द्रोऽमन्यत' 'वस्व्यसि'। वर्णविभागा-

---

[1] एवञ्च—

'पदान्ते च तथा कम्पा अन्ततो निहताणुकाः।
शेषस्योदात्तता वा स्यात्स्वारता वा व्यवस्थया ॥
आरण्यके तूदात्तादिः स्वरितादिश्च संहिते।
पारक्षुद्रे न कम्पस्स्याद्द्विधा कम्पो न तु त्रिधा ॥
संहितायां स्वारकम्प उच्चस्त्वारण्यके मतः' ॥

इत्यादीन्यपि शिक्षान्तराणि सङ्गच्छन्ते। सर्व०

वस्थायामनुदात्तत्वे सत्येव पुनस्तत्संहितायां स्वरितत्वं प्रउगम् इत्यादौ विज्ञेयम्। उच्चपूर्व इति किम्? 'परिचाय्यन्ति न्वीत'॥

[1]पादवृत्तस्तयोर्व्यक्तावन्यः प्रातिहतस्स्मृतः। ३१२॥

यस्तु स्वरितस्तयोः पदयोर्विवृत्तौ दृश्यते स पादवृत्तस्स्यात्। यथा—'स इधानः' 'इत इतः'। तयोरिति किम्? 'प्र उगम्'। अन्य इति। एतदन्यस्वरितः प्रातिहतस्स्यात्। संहिताविधाने यः स्वर्यते एष विधिः 'उच्चादुत्तरतः' इत्यनेनैवोक्तः। पारिशेष्यात्पदयोरव्यक्तावित्यर्थः। यथा—'गच्छन्त्वाहुतिं घृतस्य' 'प्रार्पयतु श्रेष्ठतमाय' 'नास्येन्द्रियम्' 'वीक्षिताय स्वाहा'। पदयोरिति किम्? 'यन्न्यञ्चम्॥

[2]नित्योऽत्युच्चनीचः क्षैप्रस्तत्समो न्यूनतः परः॥ ३१३॥

उच्चश्च नीचश्चोच्चनीचौ। अत्यन्तमुच्चनीचौ यस्य सः नित्यस्स्यात्। सान्निध्यात् क्षैप्रश्च स्यादित्युक्तम्, अनयोर्मध्ये तत्प्रयत्नोक्तेः। तदुच्चनीचौ समानौ

१. 'पादवृत्तस्तयोर्व्यक्तौ' यस्तु स्वरितस्तयोः पदयोः व्यक्तौ दृश्यते स पादवृत्तसंज्ञस्स्यात्। यथा—'स इधानः' 'इत इतः'। तयोरिति किम्? 'प्र उगम्'। पदयोरिति कथम्? पदमध्यस्थस्वरितस्य सत्यामपि व्यक्तौ अखण्डपदत्वेन तैरोव्यञ्जनविषयत्वात्। 'अन्यः प्रातिहतस्स्मृतः' उक्तादन्यस्वरितः प्रातिहतसंज्ञस्स्यात्। अत्राभिनिहतक्षैप्रप्रश्लिष्टनित्यानां पूर्वमेव स्वरितत्वविधानात् तदनन्तरोक्तः 'उच्चादुत्तरतो नीचः' इत्येष विधिरेषां त्रयाणामेव। तत्रापि तयोः पदयोर्व्यक्तौ पादवृत्तसंज्ञाभिधानात् तयोः पदयोरव्यक्ताविति पारिशेष्याल्लभ्यते। तदेवं पदयोरव्यक्तौ 'उच्चादुत्तरतः' इत्यस्य विषयभूतो यस्स्वरितस्स एवास्य विषय इति स्पष्टमवगम्यते। यथा—'प्रार्पयतु' 'वीक्षिताय' 'नास्येन्द्रियम्'। 'उच्चदुत्तरतः' इत्यस्य विषयभूत इति किम्? 'यन्न्यञ्चम्'। अत एवैषां त्रयाणामुदात्तपूर्वं इति व्याख्यातम् सर्व०।

२. अत्युच्चः नीचः अत्यन्तौ अधिकौ उच्चनीचौ उच्चनीचप्रयत्नौ यस्य स नित्यस्स्यात्। एवं क्षैप्रेऽपि। ननु नित्यस्वरितमुद्दिश्य विहितः प्रयत्नः क्षैप्रस्य कथं प्रतीयते? इति चेदुच्यते—अनयोर्मध्ये तत्प्रयत्नोक्तेः कारणात् तत्समः—तावुच्चनीचौ उच्चनीचप्रयत्नौ च समौ न्यूनाधिकभावरहितौ यस्य सः तत्समः। प्रश्लिष्टाभिनिहतसंज्ञस्वरित इति कथं प्रतीयते? इतरेषां तत्समत्वाभावात्। परः—स्थितस्वारादन्य इत्यर्थः। न्यूनतः—उक्तप्रयत्नाभ्यां न्यूनतः अत्यल्पोच्चनीचप्रयत्नाभ्यामुपलक्षितः अन्यः तैरोव्यञ्जनपादवृत्तप्रातिहतसंज्ञक स्वरित इत्यर्थः। सर्व०

यस्य सः सन्धिः स्वारस्स्यात् । प्रश्लिष्टोऽभिनिहतश्चेत्यर्थः । ननु क्षैप्रस्य प्रधानस्य किं न स्यात्? परत्रास्य विशेषविधानादिति ब्रूमः । परः—उक्तादन्यस्स्वारः अल्पोच्चनीचस्स्यात् । अत एव—

[1]दृढतरप्रयत्नस्स्यान्नित्ये क्षैप्रे च वा दृढः ॥ ३१४ ॥

नित्यस्वारे प्रयत्नो दृढतरस्स्यात् । यथा—'वीर्यम्' । क्षैप्रे प्रयत्नो दृढस्स्यात् । यथा—'द्व्रन्नः' । तेनास्य दृढतरः किं न स्यादिति चेत्—पृथक्करणादिति ब्रूमः ॥

प्रश्लिष्टे[2] चाभिनिहते मृदुता स्वल्पतान्यतः ॥ ३१५ ॥

प्रश्लिष्टेऽभिनिहते च प्रयत्नस्य मृदुत्वं स्यात । यथा—'सून्नीयमिव' 'सोऽब्रवीत्' । असंयोगपरे सति किञ्चिद्दृढतरप्रयत्न इति चशब्दार्थः । 'दिक्ष्ूपदधाति' 'सोऽभवत्' । स्वल्पतेति । अन्यस्वारे प्रयत्नस्याल्पत्वं स्यात् । अन्यत इत्युक्तेः[2] पारिशेष्यात्प्रातिहतपादवृत्ततैरोव्यञ्जनसंज्ञस्स्वरित इत्यर्थः । यथा—'एवास्य' 'स उ' 'वा आज्यम्' ॥

नादानुस्वारयोः पूर्वस्स्वारभागुच्चवत्स्थितः ॥ ३१६ ॥

स्वर्येतेऽस्मात्परावेव नादानुस्वारकावपि ॥ ३१७ ॥

[3]नादः-अवसाने उत्तमः अनुस्वारश्च नादानुस्वारौ, तयोः पूर्वस्स्वरितभागज् उदात्तवत्स्थितः । अस्मादचः स्वरात्परौ नादानुस्वारकावेव स्वर्येते । यथा-

---

१. नित्ये क्षैप्रे च प्रयत्नो दृढतरस्स्यात् अथवा दृढस्स्यात् । एवमुक्ते पक्षद्वये यथासङ्ख्यं व्यवस्थाश्रीयते—नित्ये दृढतरः क्षैप्रे दृढ इति । यथा—'वीर्यं वृङ्क्ते द्व्रन्नः' । नन्वस्य वचनस्य पूर्ववचनेन विरोधस्स्यात्, नेत्युच्यते; पूर्ववचने एतमर्थं ज्ञापयितुमेव पृथक्करणात् इति सर्व०

२. वेदतैजसवदेव व्याख्याय पृथक्पृथगुदाहरणानि प्रदर्शितानि मञ्जरीकारेण । तैरोव्यञ्जनस्य यथा—'वायवस्थोपायवस्थ' 'आप उन्दन्तु' 'देवस्य त्वा' 'प्र उगम्' । पादवृत्तस्य यथा—'स इधानः' 'ता अस्मात्' 'या आविविशुः' 'मो एषाम्' । प्रातिहतस्य यथा—'इषे त्वा' 'आददे' 'सन्त्वा' 'नास्येन्द्रियम्' 'नास्माद्राष्ट्रम्' इत्यादीन्युदाहरणानि बहुशो द्रष्टव्यानीति ।

३. 'अवसानेऽन्त्यवर्णाश्च नादाः' इति वचनोक्तावसानस्थवर्गान्त्यवर्णो नादः । स चानुस्वारश्च, तयोः परभूतयोस्सतोः पूर्वः स्वरितभाग् अच् उच्चवत् उदात्तवद्भवेत् ।

'अश्मन्नूर्जम्' 'वायव्य ꣳ श्वेतम्' 'मर्त्या ꣳ आविवेश' 'हि ꣳ सिषमुरूरु हि ꣳ सिष ꣳ हि ꣳ सिषमुरु' 'अ ꣳ होमुचं वृषभम् वृषभम ꣳ होमुचम ꣳ होमुचं वृषभम्' ॥

'भक्तिस्वारात्तदङ्गानज् धृतवदृपरे च रः ॥ ३१८ ॥

स्वरितात्परतः स्वरभक्तिश्च स्वारभाक् पूर्वस्वारस्याङ्गं व्यञ्जनञ्च प्रचयवदुच्यते, एवंरूपस्वरितद्वयस्यासन्नत्वात्। यथा—'दोषावस्तोर्हविष्मती' 'मैत्रावरुणायर्षभम' 'उभयोर्ल्लोकयोः' 'व्रजेभजात्वन्नः' 'कुरुते तस्मात'। ऋपर इति। ऋकारे परे सति रेफश्च धृतवत्स्यात्। यथा—'पुनर् ऋतुनाह' 'तन्नैर् ऋतम्' 'ऋषेर् ऋषेर्वै वै निर्ऋत्यै' ॥

---

स्थितोऽपि स्थितस्वारोऽपीत्यर्थः। अभिनिहत-क्षैप्र-प्रश्लिष्ट-नित्यसंज्ञस्वरितोऽपीति यावत्। अस्मादचः परौ नादानुस्वारकावेव स्वर्येते। यथा–'यद्रियङ्' 'तद्रियङ' 'विष्वङ्' 'अवाङ्' 'ब्रह्मण्वन्त इति ब्रह्मण्* वन्तः' 'अश्मन्' 'जनान्' 'राजन्यम्' 'देवानाम्' 'मर्त्या ꣳ आविवेश' 'हि ꣳ सिषमुरूरु हि ꣳ सिषम्' 'अ ꣳ होमुचं वृषमं वृषभम ꣳ होमुचम्' 'वायव्यग् ꣳ श्वेतम्' 'योऽꣳशुं गृह्णाति' 'जनान् यातयति' 'तस्मिन् ह्यात्मानम्' इत्यादौ तु नादकार्यम् 'विरामे व्यञ्जनस्यैव' इत्यस्य व्याख्याने स्फुटीकरिष्यत इति पूर्वमेवोक्तम्। स्वर्येतेऽस्मादित्यत्र सन्धिस्तु आर्षः सर्व०

१. स्वरितात्परा या स्वरभक्तिः तस्य स्वरितस्याङ्गभूतव्यञ्जनञ्च ऋकारे परे सति स्वरितात्परो रेफश्च धृतवत्-प्रचयवत्स्यात्। यथा–'मैत्रावरुणायर्षभम्' 'सदर्शतस्य' 'शतवल्शं विरोह' 'सशीर्षामुष्मिन्' 'वषट्' 'तस्मात्' 'धियः' पुनर् ऋतुनाह' इत्यादि। ननु 'ऋपरे च रः' इति व्यर्थम्, 'तदङ्गानच्' इत्यनेनैव सिद्धेः, अत्रोच्यते– 'सिद्धे सत्यारम्भो नियमाय' इति न्यायात् अविरामस्थव्यञ्जनस्य यदि प्रचयत्वं स्यात्तदा ऋकारपरे रेफस्यैव नान्यस्येति। एवञ्च सति 'नमः क्षत्तृभ्यः' 'रेवतीः क्षत्रम्' 'मर्कटः' 'क्षिप्रश्येनस्य' इत्यादौ प्रचयत्वसिद्धिः। 'उभयोर्लोकयोः' 'शरव्ये ब्रह्मस ꣳशिता' 'मधुश्च माधवः' इत्यादौ तदभावश्चेतीष्टसिद्धिः। अत्र केचित्—'यद्रिङ् वायुः' 'चर्मन् हविषा' 'अख्यन् यज्ञकृतः' इत्यादावनया शिक्षया द्वित्वाभावेऽप्यसंयुत्य विधानात् विरामाभाव इति कृत्वा 'लोकान् कल्पयति' 'कल्माषी भवति भवति कल्माषी कल्माषी भवति' इतिवत् स्वरिताङ्गभूतस्य नकारस्य द्वित्वाभावं स्वरि-

## आयपूर्वेऽथ चोच्चः स्याद्भक्तेर्नीचो ङधू अधः ॥ ३१९ ॥

आयशब्दे पूर्वे सति स्वरभक्तेरुच्चस्स्यात् । यथा—'विधायर्‌षिः' 'इन्द्रिया-यर्‌विभ्यः' । ङपूर्वे धूपूर्वे वा सति भक्तेः नीचस्स्यात् । यथा—'अरुणाः काण्डर्‌षय' 'ऋतस्य धूर्‌षदम्' ॥

## स्वारश्चारण्यके भक्तेरत्र शीर्षं स्रपूर्वके ॥ ३२० ॥

आरण्यके 'शीर्‌षम्' इत्यत्र भक्तेस्स्वरितस्स्यात् स्रपूर्वके सति । यथा—'सहस्र शीर्‌षन्देवम्'[1] ॥

## स्वर्यते चादितो ह्रस्वो दीर्घमध्यं तथैव च ॥ ३२१ ॥

[2]ह्रस्वो वर्णः आदितश्च स्वर्यते । यथा—'न रिष्येत्' । दीर्घमध्यमिति । दीर्घस्य मध्यं स्वर्यते । तत्र दृढत्वमिति यावत् । यथा—'लोकास्त्र्यालिखितेभ्यः' 'सोऽब्रवीत्' 'सोऽभवत्' 'सोऽबिभेत्' 'ऊभुणो नस्सूषणः' ॥

---

तत्वञ्चाभ्युपेत्याधीयते । तदसाधु; कुत इति चेत्—'लोकान् कल्पयति' इत्यादौ लकारस्य पादमात्रिकत्वात् संयोगकार्यं भवेत् । नकारस्य त्वर्धमात्रत्वविधानाद-संयुत्य विधानेऽपि असंयोगोऽवश्याभ्युपगन्तव्यः, अर्धमात्रिकव्यञ्जनस्य तथात्वात् । अत एव 'विभूदावन्ने' 'दधिक्रावण्णः' 'आग्रावण्णः' इत्यादौ सर्वदेशेषु असंयुति पूर्वकपाठो दृश्यते । न तत्रासंयुतिविधायकशास्त्रमस्यां शिक्षायां किञ्चिदप्यस्ति । अपि च शिक्षान्तरेणासंयुतिरप्यस्ति । अत्रासंयुत्य विधानन्तु नादकार्यनिवृत्त्यर्थम्, न तु शिक्षान्तरप्राप्तासंयुतितत्प्रवृत्तविरामनिवृत्त्यर्थम् । तेन नादकार्यमात्रं परित्यज्यानेन वचनेन प्रचयत्वसिद्धिः । तथा ङकारस्यापि नकारवत् शिक्षान्तरेण विधानात् सोऽप्यस्य विषय इत्यास्तामेतत् सर्व०

१. यथा—'सहस्रशीर्‌षन्देवम्' । अत्र वचनद्वये विहितानामुच्चनीचस्वारशब्दानां भाव-प्रधाननिर्देश इति विज्ञेयम् सर्व०

२. ह्रस्वो वर्ण आदित आरभ्य स्वर्यते । यथा—'न रिष्ये त्वावतस्सखा' 'अन्तरस्याम्' 'दीर्घो मध्यात्तथैव च' । दीर्घः मध्यात्तथैव । दीर्घो मध्यादारभ्य स्वर्यत इत्यर्थः । तत्र दृढत्वमिति यावत् । यथा—'लोकास्त्र्यालिखितेभ्यः' 'स ई मन्द्रासु' 'दिक्षूपदधाति' 'य एकादेशः' 'सोऽभवत्' सर्व०

[1]संयुतोद्ध्र्वे तु दीर्घश्चेदन्त्यस्वारो भवेत्तदा ॥ ३२२ ॥
[2]ऋकारोत्तररेफोद्ध्र्वेऽवसाने दीर्घ एव च ॥ ३२३ ॥

---

१. संयुतोद्ध्र्वे तु—संयोगे परे सति दीर्घश्चेदन्त्यः स्वरितः स्यात् । यथा—'वा अह्रियमाणायाम्' 'कृष्णोऽस्याखरेष्ठोऽग्नये' इत्यादि । 'वसतीवरीर्ह्होतृचमसम्' 'आनश्शूर्षाहौ' 'दोषावस्तोर्हविष्मती' इत्यादिषु स्वरभक्तेः स्वातन्त्र्याभावेन संयुतत्वात्पूर्वस्यान्त्यस्य स्वरितत्वम् । 'यद्गार्हस्पत्यः' 'स शीर्षाऽमुष्मिन्' 'कोऽर्हति' 'अर्हति मनो मनोऽर्हति' 'ऋषभमुपोपार्षभ' इत्यादिषु स्वरभक्तेः स्वातन्त्र्यविधानान्न संयुतता । नापि पूर्वस्यान्त्यस्वरितत्वम् । किन्तु 'दीर्घो मध्यात्तथैव च' इति मध्यस्वरितत्वमिति ग्रन्थकारस्याशयः । वस्तुतस्तु-स्वरभक्तेः स्वातन्त्र्यविषय उपपन्नमेवैतत् । अस्वातन्त्र्ये तु

'स्वाराद्दीर्घात्परश्चान्तस्था स्वरभक्तिस्तु या भवेत् ।
सा तु पूर्वस्वराङ्गं स्याद्दोषावस्तोर्हविष्मती ॥
प्राकृता वैकृता चेति स्वरभक्तिर्द्विधा मता ।
वैकृता स्वरभक्तिस्तु स्वर्यते पूर्व उच्चवत्' ॥

इति शिक्षान्तरस्थवचनद्वयेन स्वरभक्तेः पूर्वाङ्गत्वं स्वरितग्राहित्वं पूर्वस्योच्चवत्वञ्चेति विशेषविधानात् तन्मतानुसारेण शिष्टपाठसद्भावाच्च नान्त्यांशस्वरितत्वमित्यलं प्रपञ्चेन ।

२. ऋकार परे रेफे परे सति पूर्वो दीर्घोऽन्त्यस्स्वरितस्स्यात् । यथा—'तन्नैर्ऋतम्' 'ऋषेर् ऋषेवै' इत्यादि । अत्र—

'दीर्घस्वारात्परो रेफो ह्रस्वस्वारात्परस्तथा ।
उच्चाच्च ऋपरो रेफस्स्वरितप्रचयोच्चगाः ॥
अनीचाद्रेफ उच्चस्स्यादृकारे परतः स्थिते ।
सन्ध्यक्षरात्तु स्वरितात् स्वरितः पूर्व उच्चवत्' ॥

इति शिक्षान्तरवचनाभ्यामृकारपररेफस्य स्वरितग्राहित्वं पूर्वस्योच्चवत्वञ्च विधीयते । उभयोस्तुल्यबलविरोधात्किमत्र ग्राह्यमिति चेदुच्यते—

'शिक्षा च प्रातिशाख्यञ्च विरुध्येते यदा यदा ।
प्रातिशाख्यं बलीयस्स्यादवकाशो न चेत्सदा ॥
शिक्षासु क्वचिदन्योन्यं विरोधः स्फूर्यते यदि ।
व्यासशिक्षाप्रमाणं स्याद्विशेषैर्यद्यबाधिता ॥
शिष्टपाठविरुद्धं यच्छास्त्रं बह्वपि सन्त्यजेत् ।
अपि स्वल्पं प्रमाणं स्याच्छिष्टपाठानुसारि यत् ॥
लक्षणज्ञैर्न्यायविद्भिश्शिष्टपाठानुसारिभिः ।
एतत्सर्वं समालोच्य सर्वलक्ष्याणि साधयेत्' ॥

संयुतश्चासावूर्ध्वश्च संयुतोर्ध्वः, तस्मिन् संयोगपरे रेफपरे वा सति तस्मिन् रेफे ऋकारपरे यदि तर्ह्यन्त्यः स्वरितस्स्यात्। अवसानवर्ती दीर्घश्च। यथा—'वपायां वा आह्रियमाणायाम्' 'सून्नोयमिव' 'तथ्सवितुर्वरेण्यम्' 'वस्तोर्हविष्मती' 'धूर्षाहावनश्व अनश्वू धूर्षाहौ धूर्षाहावनश्वू' 'ऋषेर् ऋषेवैं' 'तन्नैर्ऋतम्' 'यथ्संज्ञपयन्ति' इत्यादौ केवलानुस्वारस्याप्यन्त्यस्वरितस्स्यात् दीर्घकालत्वात्। अत्र किम्? 'सहारियोजनीः' 'एवास्मै पशून्' 'ऋषिभ्यार्षेभ्यः' 'ऋषभमुपोपार्षभमृषभमुप' इत्यादौ दीर्घमध्यं स्वरितमिति पूर्वमेवोक्तम्॥

यो जटाम्नाङ्घ्रिद्धिङ्गलिङ्गो विष्णुरुच्यते॥ ३२४॥
ईश्वरस्सर्वसन्धिज्ञ इत्येवर्षिभिरीरितः॥ ३२५॥

स्पष्टोऽर्थः॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षा-
विवरणे स्वरसन्धिप्रकरणम्॥

---

इत्यनेन सर्वमपि लक्ष्यं प्रातिशाख्येन वा अनयैव शिक्षया वा शिक्षान्तरेण वा एकेनैव लक्षणेन निर्वाह्यमिति न निर्बन्धः। अपि तु यल्लक्षणं प्रातिशाख्याविरुद्धं शिष्टपाठानुसारि च तदेव प्रमाणमित्यवगम्यमुपलक्षणं लक्षणज्ञैः न्यायविद्भिश्शिष्टपाठानुसारिभिः प्रामाणिकैः।

'अवसाने दीर्घ एव च'

अवसानवर्ती दीर्घश्चान्त्यस्वरितस्स्यात्। यथा—'रुन्त्वा,' 'ग्रावा,' 'सुवर्गाय शक्त्यै' 'तस्मात्' 'पथ्येव सूराः' 'रेवतीः क्षत्रम्' इत्यादौ।

'अन्त्यांशे स्वर्यते दीर्घो विरामे व्यञ्जनेन च।
संयोगे चावसानस्थो यथा तन्नैर् ऋतादिकम्'॥

इति शिक्षान्तरवचनेन 'विरामे व्यञ्जनेन च' इति पृथग्ग्रहणादन्त्यांशस्वरितत्वम्। अथवा स्वरितविधौ व्यञ्जनस्यानुपयुक्तत्वाद्विरामव्यञ्जनपरो दीर्घोऽपि विरामस्थ एवेति पक्षेऽनेनैव वचनेनेष्टसिद्धिः। नन्वेवं सति पूर्ववाक्यस्थस्य दीर्घ इत्यस्योत्तरत्रानुवृत्त्यैव कार्यसिद्धेः पुनर्ग्रहणं दीर्घकालस्यापि सङ्ग्रहार्थम्। तेन 'इध्संज्ञपयति' 'समन्थ्सादयामि' 'अहन्थ्षष्ठे' 'उदङ्ङ्स्सयोनित्वाय' इत्यादावनुस्वारादीनां द्विमात्रत्वादन्त्यांशस्वरितत्वं पूर्वस्योच्चवत्त्वञ्च सिध्यति। तथा च शिक्षा—

'सयोगे द्विमात्रत्वं नङयोर्ह्रस्वपूर्वयोः।
स्वरितत्वं तयोरेव स्वरितः पूर्व उच्चवत्'॥

इत्यास्तामेतत्। इति सर्व०

## हस्तस्वरविन्यासप्रकरणम् ॥ १८ ॥

हल् विसर्जनीयाच्च् स्वरसन्धिप्रकरणानीमानि द्वादश संहिताजटयोर्लक्षणम् । हस्तस्वरलक्षणं तावदथोच्यते—

[1]कनिष्ठानामिकामध्या तर्जनीषूत्तमे करे ॥ ३२६ ॥
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत् ॥ ३२७ ॥
आद्यन्तमध्यामध्यासु तद्रेखासु च तान् क्रमात् ॥ ३२८ ॥

कनिष्ठेति । गोश्रवणसमानाकारे उत्तमे करे-दक्षिणहस्ते तद्रेखासु तासामङ्गुलीनां रेखासु मूलप्रभृतिषु नीचादिस्वरान् क्रमात्-आनुपूर्व्या अङ्गुष्ठाग्रेण निर्दिशेत । कनिष्ठिकाया आदिरेखायामनुदात्तम्, अनामिकाया अन्त्यरेखायां स्वरितम् मध्यमाङ्गुल्या मध्यरेखायां प्रचयम्, तर्जन्या मध्यरेखायामुदात्तञ्च निर्दिशेदित्यर्थः । यथा-'इति योऽपगुरातै' 'इति सोऽब्रवीत्' ॥

[2]पृथक् तदङ्गुलिस्थानं भक्तेर्यस्स्वर उच्यते ॥ ३२९ ॥

---

१ 'उच्चं प्रदेशिन्युरुमध्यरेखां कनिष्ठिकाग्रां निहतं पराग्रतः ।
अनामिकान्त्यां स्वरितञ्च निर्दिशेत् सुमध्यमामध्यगतां धृतं परे' ॥

गोश्रवणसमानाकारे परे दक्षिणहस्ते प्रदेशिन्याः-तर्जन्या उर्वी-मध्यरेखा या तां प्रति पराग्रतः-एतासामङ्गुलीनां श्रेष्ठाङ्गुल्यग्रेण-अङ्गुष्ठाग्रेणेत्यर्थः । उच्चम्—उदात्तम् निर्दिशेत् । निहतमनुदात्तं प्रति च निर्दिशेदिति सर्वत्र सम्बध्यते । यथाक्रममुदाहरणम्—'इति योऽपगुरातै' 'इति सोऽब्रवीत्' । अत्र केचित्—एतद्वचनं परित्यज्य तत्स्थाने 'कनिष्ठिकानामिकामध्या' इत्यादि वचनान्तरं स्वीकृत्य व्याचक्षते, तथात्वेऽपि न दोषः, अविरोधात् इति सव. ।

२. पृथगिति । स्वरभक्तेः यत्स्वरः—यदङ्गुलिस्वरः पृथक्—पार्थक्येन विहितः तदङ्गुलिस्थानं तदङ्गुलिरेखास्थानमिति वेदितव्यम् । स्वतन्त्रस्वरभक्तेः पृथङ् निर्देश इति यावत् । यथा-'विधायर्षिरवोचत्' 'इन्द्रियायर्षिभ्यः' अत्र स्वरभक्ति तर्जनीमध्ये निर्दिशेत् । 'ऋतस्य धूर्षदम्' 'अरुणाः काण्डर्षयः' अत्र कनिष्ठिकादौ । 'सहस्रशीर्षन्देवम्' अत्रानामिकान्ते । 'मैत्रावरुणायर्षभम्' अत्र मध्यमाङ्गुलिमध्ये । स्वतन्त्रेषु सर्वेष्वपि व्यञ्जनेषु मध्ये स्वरभक्तिमात्रस्य पृथङ्निर्देशस्स्वरसम्बन्धप्रयुक्तो विज्ञेयः । अत्र केचित्—'पृथक्तदङ्गुलिस्थानम्' इत्येतदन्यथा कृत्वा 'पृथक्तदिष्टरेखा स्यादङ्गुलीयोत्तरस्य हि' इति वदन्ति । तदसाधु; सम्प्रदायविरोधात् इति सर्व.

पृथक् स्वरभक्तेर्यस्स्वर उदात्तोऽनुदात्तः स्वरितः प्रचयो वा भवेद्यदि तदङ्गुलिरेखास्थानं स्यादित्यर्थः। यथा-'विधायर् ऋषिरवोचत्' 'इन्द्रियायर् ऋषिभ्यः'। अत्र स्वरभक्ति तर्जनीमध्ये निर्दिशेत। 'ऋतस्य धूर्षदम्' 'अरुणाः काण्डर्षयः' अत्र कनिष्ठिकादौ। 'सहस्रशीर्षन्देवम्' अत्रानामिकान्ते। 'मैत्रावरुणायर्षभम्' अत्र मध्यमाङ्गुलिमध्ये। ननु तर्हि 'एताभिर्हताः' इत्यादौ स्वरभक्तेः पृथक्करणं किं न स्यात्? अस्यास्संयुतत्वे सति तत्परमविरामात्पृथङ्न्यासस्यावकाशाभाव इति ब्रूमः। अस्यास्स्वरपदान्वितत्वात्तत्समानधर्मोऽस्तीति प्रत्येकाङ्गुलिर्विधीयते ॥

स्वारमुच्चमिवोर्ध्वश्च ह्यनामिकान्तरान्त्ययोः ॥ ३३० ॥

उदात्तमिव तिष्ठन्तं स्वरितं तत्परवर्णञ्चानामिकायाः मध्यान्त्यरेखयोः क्रमान्निर्दिशेत्। यथा-'गोमा ॐ अग्ने' 'योऽॐ शुम्' ॥

स्वारकम्पे स्वरावेतावनामिकोत्तमाद्ययोः[1] ॥ ३३१ ॥

स्वरितकम्पे इमौ पूर्वोक्तौ स्वरितानुदात्तावनामिकाया अन्त्याद्यरेखयोः क्रमान्निर्दिशेत्। यथा-'सो३ऽयो३ऽभ्यम्रियत ॥

निर्दिशेदुच्चकम्पे च [2]तर्जनीमध्यमाद्ययोः ॥ ३३२ ॥

उदात्तकम्पे तावुच्चनीचौ तर्जन्या मध्यमाद्यरेखयोर्निर्दिशेत्। यथा-ते३ऽस्मत्' 'तेनयो३ऽस्मत्'[3] ॥

---

१. अनामिकान्तिमाद्ययोरिति क्वचित्पाठः।

२. प्रदेशिन्यन्तराद्ययोरिति क्वचित्पाठः।

३. हस्तस्वरविन्यासावसरे परस्य वर्णस्य यदङ्गुलिस्थानं स्यात्, हि यस्मात्कारणात्तदङ्गुल्यामुचितरेखा (तस्मात्) पृथग्वर्णस्य स्थानमित्युच्यते। यथा-'ऋतस्य धूर्षदम्' 'अरुणाः काण्डर्षयः' अत्र स्वरभक्ति तर्जन्यादौ निर्दिशेत्। 'विधायर्षिरवोचत्' यथर्षभस्य' अत्र कनिष्ठिकामध्ये। 'इन्द्रियायर्षिभ्यः' अत्रानामिकामध्ये। 'सहस्रशीर्षन्देवम्' अत्र मध्यमाङ्गुल्यन्ते। प्रातिशाख्यमतानुसारेणैतादृशां परांशे सतीत्ययमारम्भ इति केचित्। प्रचयात्परत उदात्तत्वात् उदात्तात्परतः प्रचयाच्च तेनैवमनुपपन्नमित्यन्ये इति क्वचित्पुस्तके दृश्यते। एतदेव सम्प्रदायविरोधादनुपपन्नमिति 'पृथक्तदङ्गुलिस्थानम्' ३२९ इत्यर्धव्याख्यानावसरे सर्वलक्षणमञ्जरीकारेणोक्तम्। टिप्पणीस्थेनैतत्पाठभेदानुसारिणि पुस्तके 'पृथक्तदङ्गुलिस्थानम्' इत्यर्धन्न दृश्यत इत्यपि विज्ञेयम्।

**विरामे व्यञ्जनस्यैव पृथक्स्थानं न विद्यते ॥ ३३३ ॥**

**[1]अवसाने व्यञ्जनस्य पृथक्स्वरत्वात्पृथक्स्थानमित्याकाङ्क्षायां तन्निषिध्यते विराम इत्यनेन, विरामे व्यञ्जनस्य पृथक्स्थानं न स्यात्। तत्पूर्वस्वरस्थानं स्यादित्यर्थः। यथा—'वषट्' 'तस्मात्'। स्वरितादुत्तमात्पूर्ववर्णस्यानामिकान्त्यरेखैव स्थानमित्ययमारम्भः। यथा—'अवाङ् नाभिम्' 'अश्मन्'॥**

---

१. अवसानवर्तिनो व्यञ्जनस्य पृथक्स्वरत्वात्तदङ्गुलिनिर्देशे प्राप्तेऽनेन निषिध्यते। विरामे विद्यमानस्य व्यञ्जनस्य पृथक्स्थानम् पृथक्स्थाननिर्देशो न विद्यते। यथा—'वषट्' 'धियः' 'तस्मात्' 'नमः क्षत्तृभ्यः' 'रेवतीः क्षत्रम्' 'मर्कटः क्षिप्रश्येनस्य' इत्यादि। नन्विदमनुपपन्नम्; 'पृथक्तदङ्गुलिस्थानम्' इत्यनेन स्वरभक्तिमात्रस्य निर्देशविधानात् इतरेषां पृथक्स्वरभाजां व्यञ्जनानां निर्देशस्यानभिधानादेवानिर्देशे सिद्धे किमर्थोऽयमारम्भः? सत्यम्; पूर्वप्रयुक्तोदाहरणेषु चोद्यमुपपद्यते, तथापि 'अश्मन्' 'ऊर्जम्' 'अवाङ्' 'नाभिम्' 'वृषण्वानिति वृषण० वान्' 'जनान् यातयति' इत्यादौ 'स्वारमुच्चमिव' इति पार्थक्येन पृथङ्निर्देशविधानात् तन्निषेधार्थोऽयमारम्भः। तथा च 'एमन्' इत्यादीनां नादानां 'स्वारमुच्चमिव' इति यो निर्देशस्स न भवति। अपि तु स्वरितादुत्तमेभ्यः पूर्ववर्णस्यानामिकान्त्यरेखैव स्थानम्। उत्तमानान्तु न पृथङ् निर्देशः। नन्वेवमपि 'जनान् यातयति' इति कथमुदाहृतम्? नादत्वाभावादिति चेत्, उच्यते—नादमात्रनिषेधाभिप्राये ग्रन्थकारो 'विरामो व्यञ्जनस्य' इति न ब्रूयात्। किन्तु 'अवसाने व्यञ्जनस्यैव' इति ब्रूयात्। अतो विरामशब्दग्रहणसामर्थ्याद्विरामस्यावसानत्वेऽप्युत्तमवर्णो निषेधकार्यं लभते। अतोऽत्र ज्ञायते 'जनान् यातयति' इत्यादौ नादत्वमस्तीति। अन्यथा विरामपदस्य प्रयोजनाभावात्। तथा च शिक्षा—

'विरामपञ्चमानान्तु नादसंज्ञा प्रकीर्तिता।
नादानुस्वारकावेव स्वर्येते पूर्व उच्चवत्'॥ इति।

नादविषये विरामावसानयोर्भेदो नास्तीति यावत्। अत्र शिक्षा—

'गोकर्णाकृतिहस्ते तु निर्दिशेद्दक्षिणे स्वरम्।
निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनु चिन्तयन्॥
कनिष्ठानामिकामध्या तर्जनीमध्यपर्वसु।
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत्॥

एवं हस्तस्वरन्यासे कथितश्च विनिर्णयः ॥ ३३४ ॥

अनेन प्रकारेण हस्तस्वरविन्यासे निर्णय उदाहृतः ॥

सुहस्तस्वरविन्यासान्निर्मलाध्ययनं भवेत् ॥ ३३५ ॥

तत्पूतो ब्राह्मणो यस्तु ब्रह्मणा सह मोदते ॥ ३३६ ॥

स्पष्टोऽर्थः । शम्भुशिक्षायामप्युक्तम्—

'हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते' ॥ इति ।

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षाविवरणे हस्तस्वरविन्यासप्रकरणम् ॥ १८ ॥

---

तर्जन्यादौ कनिष्ठादौ तथैवानामिकान्तिके ।
मध्यमाङ्गुलिमध्ये च स्वरन्यासो विधीयते ॥
पुरुषो हि व्रजेन्नारीं न नारी पुरुषं व्रजेत् ।
तथाङ्गुलीषु सर्वासु नयेदङ्गुष्ठमेव च ॥
शिरःकम्पं विहायैव स्वरन्यासो विधीयते ।
हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ॥
ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते ।
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितः ॥
ऋग्यजुस्सामभिर्दग्धः वियोनिमधिगच्छति ।
सव्यहस्तेन योऽधीते तस्य तन्निष्फलं भवेत् ॥
हस्ताद्भ्रष्टः स्वराद्भ्रष्टः न वेदफलमश्नुते ।
सुहस्तस्वरविन्यासो निर्मलाध्ययनो भवेत् ॥
तत्पूतो ब्राह्मणो यस्तु ब्रह्मणा सह मोदते ।
अतोऽन्यथा तु यो मर्त्यो निर्दिशेन्मतिमोहितः ॥
स गच्छेन्नरकं घोरं पापयोनिषु जायते ।
निर्दिशेद्यः स्वरं सौम्यं मध्यमे पर्वणि स्वयम् ॥
इह कीर्तिमवाप्नोति प्रेत्य स्वर्गे महीयते ।
एवं हस्तस्वरन्यासे कथितश्च विनिर्णयः ॥ इति सर्वलक्षण० ॥

## द्वित्वप्रकरणम् ॥ १६ ॥

### स्वरपूर्वं इयाद्द्वित्वं व्यञ्जनं व्यञ्जनोत्तरे ॥ ३३७ ॥

[1]स्वरश्चासौ पूर्वश्च स्वरपूर्वः, तस्मिन् स्वरपूर्वे सति व्यञ्जनं द्वित्वम्—द्वयोर्भावो द्वित्वं समानवर्णद्वयत्वम्नुयात् व्यञ्जनपरे सति। यथा—'इषे त्त्वा' 'ऊत्यश्श्याम' अहृुतमसि' 'भुज्ज्युस्सुपर्णः' 'इरज्ज्यन्ता वसव्व्यस्स्य' 'समक्ख्-भिरज्ज्यते' 'ऋक्क्च मे' 'क्लृप्ति व्वेद' 'अभूद्ध्याम'। 'पतयस्स्याम' इत्यादावपि '[2]लुप्यते संयुतोष्मोर्द्ध्वः' इत्यनेन विसर्गलोपान्निमित्तद्वये प्रसक्ते सति द्वित्वमिति निश्चितम्। स्वरपूर्व इति किम्? 'प्रजननम्'। व्यञ्जनोत्तर इति किम्? 'अहृत एवास्य'। व्यञ्जनमिति किम्? 'प्रउगम्'॥

### लपूर्वे च वपूर्वे च द्वित्वं स्पर्श उपाप्नुयात् ॥ ३३८ ॥

लकारपूर्वे वकारपूर्वे वा सति स्पर्शो द्वित्वं प्राप्नुयात्। यथा—'पर्णवल्क्कैः' 'कल्म्माषी भवति' 'दधिक्काव्ण्णः' 'विभूदाव्न्ने'। एवं पूर्व इति किम्? 'रुक्म-सुप'। स्पर्श इति किम्? कल्याणी' 'वायव्यम्'॥

### अच्पूर्वाद्रादियाद् द्वित्वं वर्णमात्रोदये[3] च हल् ॥ ३३९ ॥

अच्-स्वरः पूर्वो यस्मादसावच्पूर्वः। तस्माद् रात्-रेफात् परो हल्-व्यञ्जनं द्वित्वं भजेत् वर्णमात्रोदये, स्वरे व्यञ्जने वा परे सति। यथा—'अर्च्चन्त्यर्क्क-मर्क्किणः' 'अन्वर्ज्जेग्गुर्य्यथा' 'ऊर्क्च मे'। अच्पूर्वादिति किम्? 'त्र्यम्बकम्'। रेफादिति किम्? 'कल्याणी' वर्णमात्रोदय इति किम्? 'परावर्क्'। हलिति किम्? 'मारधाम'॥

### ह्रस्वादन्तौ नङौ द्वित्वमाप्नुतो ह्यच्परावपि ॥ ३४० ॥

ह्रस्वात्परावन्तौ-पदान्तौ अच्परौ-अच्स्वरः परो याभ्यान्तौ। अपिशब्दाद् व्यञ्जनपरावपि नकारश्च ङकारश्च नङौ द्वित्वमापद्येते। यथा—'निरवपन्निन्द्राय'

---

१. स्वरः पूर्वो यस्मात्तस्मिन् स्वरपूर्वे। व्यञ्जनमुत्तरं यस्मात्तस्मिन् व्यञ्जनोत्तरे इति सर्व०

२. सू. २१५.

३. मात्रोत्तार इति पाठः। वर्णमेव वर्णमात्रम्, स्वरो वा व्यञ्जनं वेत्यर्थः। तस्मादुत्तारं यस्मात्तस्मिन्निति सर्व०

'अब्रुवन्नृघ्नवत्' 'युङ्ङसि' । ह्रस्वादिति किम् ? 'तानेव' 'पराङैत्' । अन्ताविति किम् ? 'तनुवौ' । अपिशब्देन किम् ? 'तन्मे' 'अन्वङ्ङ्मातिर्यक्' । '[1]स्वरपूर्व इयात्' इति प्राप्तौ सत्यामत्रानयोर्नकारङकारयोर्विशेषविधानादन्यत्र द्वित्वं न स्यादित्याशङ्कयापिशब्दः प्रयुक्तः ॥

ह्रस्वाद् द्वित्वमनुस्वारः प्राप्नुयात्संयुते परे[2] ॥ ३४१ ॥

ह्रस्वात्परोऽनुस्वारो द्वित्वमापद्यते । यथा—'सग्ँश्वाह' । ह्रस्वादिति किम् ? 'त्रीँस्तृचान्' । तत्परः किम् ? 'सँशितस्मे' 'वायव्यग्ँश्वेतम्' ॥

तदनुस्वारपूर्वश्च संयोगादिर्द्विरुच्यते ॥ ३४२ ॥

तदनुस्वारः-स द्विर्भावानुस्वारः पूर्वो यस्मात्सः-तदनुस्वारपूर्वः संयोगस्यादिर्हल् द्विरुच्यते । यथा—'वायव्यग्ँश्श्वेतम्' 'सग्ँश्श्वाह' । ननु पूर्वं पूर्वमिति न्यायात् 'त्वँह यद्यविष्ठ्ये'त्यादानुस्वारस्य 'स्वरपूर्व इयात्' इति द्वित्वं किं न स्यात् ? अत्रास्य विशेषविधानादिति ब्रूमः ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षाविवरणे द्वित्वप्रकरणम् ॥ १९ ॥

---

## पूर्वागमप्रकरणम् ॥ २० ॥

व्यञ्जनं यन्निमित्तेन द्विवर्णमिति वर्णितम् ॥ ३४३ ॥
द्वितीयतुर्ययोस्तेन भवेत्पूर्वागमस्त्विह ॥ ३४४ ॥

येन निमित्तेन पूर्वोक्तेन-स्वरपूर्वव्यञ्जनपरत्वेन वा, लवकारपूर्वत्वेन वा, स्वरोत्तररेफपूर्वत्वेन वा व्यञ्जनं द्विवर्णम्—द्वयोर्वर्णयोस्समाहारो द्विवर्णम्-द्वित्वमाप्नोतीति वर्णितम्-प्रकीर्तितम्, इदानीं तेनैव निमित्तेन तयोः द्वितीयचतुर्थयोः पूर्वागमः-आगमनमागमस्सन्निधिः, पूर्वयोरागमः पूर्वागमः-यथा क्रमं द्वितीये परभूते सति प्रथमः, चतुर्थे परभूते सति तृतीय इति विवेकः । यथा-'यस्य मुक्ख्यवतोः'

१. सू. ३३७.

२. संयुतोत्तरे इति पाठः ।

'मेद्ध्यं कृत्वा' 'अपां पूरयित्वा गुल्फदघ्नम्' प्रगल्भोऽस्य'। मूर्ध्वाल्तज्जघन्याम्' 'अर्द्धमासे देवाः'। तेनेति किम् ? 'वषट्‌स्वाहा' 'पद्भ्यां द्वे सवने' इत्यादौ मा भूदिति ॥

[1]धामाननूपसर्गाश्च भूते थ एष आति च ॥ ३४५ ॥
परमैभ्यः पराः पूर्वञ्छखि भुजा इयुस्तथा ॥ ३४६ ॥

अननूपसर्गा अनुशब्देतरस्वरान्तोपसर्गाः तेभ्यो धाम-भूते-पाथ-एषः-आति-परम एतेभ्यश्चोर्ध्वाः छ-खि-भुज इत्येते शब्दाः क्रमात् पूर्वं पूर्वागमं प्रथमं तृतीयञ्च प्राप्नुयुः। यथा—

'आच्छृणत्ति'। अत्रोपसर्गोऽन्यस्वरसम्मिश्रोऽप्येतत्कार्यं करोतीति च शब्दार्थः। 'वसवस्त्वाच्छृन्दन्तु' 'छन्दसाच्छन्दसा छन्दसा' 'अन्कारादि' इति वचनात्, 'अनाच्छृण्णञ्चेति' 'विच्छृणद्मि विधृतीभ्याम्' 'अविच्छेदायैन्द्रा' इत्यपि, 'अदादी'ति वचनात्–'अतिच्छन्दसमुप' 'उपच्छायामिव' 'छादयित्वोपायन्' इत्यत्र पदं विकृतमिति न्यायात् जटायां पूर्वागमः। 'छदिरधि निदधाति' 'तेषाञ्छिन्नं प्रति' 'छाया परि त्वा' 'छन्दाꣳस्यवरुन्धे' 'छन्दाꣳस्युपदधाति' 'ज्यायश्छन्दोऽभि' एषां विलोमे आगमः, 'अपच्छिद्यादधात्' 'आखिदते च प्रखिदते च'। खीति किम् ? 'निखातादारशनायाः' 'अधि खादति' 'अयक्ष्मया परिभुज'। जेति किम् ? 'विभु च मे' एतान्युपसर्गपूर्वाणि। अन्यान्यप्युच्यन्ते—'धामच्छदिव खलु वै' 'यद्भूतेच्छदाम्' 'अप्येति पाथः' 'एषच्छागः'। पाथ इति किम् ? 'ऋतुभिर्वा एष छन्दोभिः' 'सवित्र आतिच्छन्दसाय' 'परमच्छदोवरे'। एभ्यः परा इति किम् ? 'स छन्दा या च'। अनन्विति किम् ? 'तदनुछन्दाꣳसि' ॥

समाने स्वरयोर्मध्ये लक्ष्याद्द्वित्वं हलः क्वचित् ॥ ३४७ ॥
द्वितीयस्य चतुर्थस्य तथा पूर्वागमस्स्मृतः ॥ ३४८ ॥

कुत्रचिद्वेदभागे समानपदे-अखण्डपदे स्वरयोर्मध्ये वर्तमानस्य हलो व्यञ्जनस्य द्वित्वं वर्णद्वयं लक्ष्यादुच्चारणवशात् वैदिकसम्प्रदायेन व्याकरणेन वा भवतीति

---

१. 'धाम तदुपसर्गाश्च' इति पाठं स्वीकृत्य तदुपसर्गाः तस्मिन् प्रसिद्धे प्रातिशाख्ये उक्ता उपसर्गाः—आ प्र अव उप अभि अधि प्रति परि वि नि इत्युपसर्गाः तेभ्य इति व्याख्या क्वचिदुपलभ्यते।

विज्ञेयम्। यथा–'किक्किटा ते मनः' 'अत्त्वक्काय' 'बलम्मज्जभिः' 'राज्जुदालम्' 'इष्ट काया आतृण्णाम्' 'वियत्तोऽस्याम्' 'संयत्ता आसन्' 'अत्ता हवीꣳषि' 'नमः क्षत्तृभ्यः' 'अन्नं प्रयच्छति' 'पिप्पकाते' 'निचाय्य' 'परिचाय्यम्' 'अवसाय्य' 'अनपजय्यम्' 'त्रय्यस्सूच्यः' 'अयस्मय्यः' 'तेनोदय्यासुरान्' 'एव हृदय्येग्नौ' 'वषट्कारोभ्यैय्य' 'रय्यै पोषाय' 'शुनश्शेपम्'। लक्ष्यादिति किम्? '[1]रूपसामान्यान्न स्यादिति। यथा—'तृणानिसम्' 'सुयतोनार्वा' 'अग्निर्यत्संयतः' 'तꣳश्रूतमासन्नम्' 'अपानं द्वितीयेन' 'अवसाय पद्वते' 'विजयमुपयन्तः' 'त्रय इमे' 'अयस्मयम्' 'मनो हृदये'। द्वितीयस्येति। एकपदे स्वरयोर्मध्यस्थस्य द्वितीयस्य चतुर्थस्य च लक्ष्यानुसारात् पूर्वागम इत्यत्रापि तत्पूर्ववर्ण एव स्यादित्ययमारम्भः। यथा—'समविख्खदत्' 'अच्छिन्नत्सा' 'बहुधाव्यैच्छन्' 'इत्थं वेत्थं वा' 'अद्धि त्वं देव' 'अवरुद्धगꣳह्यस्य' 'त्र्युद्धि करोति' 'तस्या विद्धन्निः' 'प्रसिद्धमेव' 'त्रिष्षमृद्धत्वाय' 'यज्ञस्य व्यृद्धेन' 'समिद्धो अञ्जन्'। इह तु न स्यात्—'समिथे बभूथ' 'अधिषवणे जिह्वा' 'मृधोऽप' 'समिधो यजति' 'तदवरुद्धन्न'। एकपद इति किम्? 'तच्छन्दसां छन्दस्त्वम्' 'इति छदिरधि' 'तस्मान्माꣳसेनास्थि छन्नम्' 'सदो नव छदि'। तर्हि वचनमेतत कथं क्रियते! श्रुतेरनादित्वात् स्थितस्य गतिश्चिन्तनीयेत्यभिप्रायेणेदं वचनं नयामः॥

काठके तु पृणच्छिद्रञ्छकारः पूर्वमाप्नुयात् ॥ ३४९ ॥

'भद्रञ्च सह संज्ञानं लोकस्तुभ्यमिति क्रमात्।
एते काठकसंज्ञास्स्युः पञ्च प्रश्ना न चेतरे'॥

इत्यारण्यशिक्षायामुक्तम्। तत्र विषये 'पृण च्छिद्रम्' इत्यत्र छकारः पूर्वागममाप्नुयात्। यथा–'भूयाꣳश्चास्यग्ने' 'लोकं पृण च्छिद्रं पृण'। 'यास्तिस्रः परमजाः'। काठक इति किम्? 'लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्'। 'गायत्रिया गायत्रीच्छन्दः' इत्यत्र चागमो भवतीति चकारार्थः। एतल्लक्षणारम्भसामर्थ्याद्वर्णलक्षणं सर्वग्रन्थेषु प्रवर्तत इत्युक्तम्। तस्मात्तत्र तत्रोदाहरन्ति॥

शात्तैत्तिरीयके नस्य ञो भवेत्काठके न चेत् ॥ ३५० ॥

यजुश्शाखिनः पक्षे काठकव्यतिरिक्तस्थले शकारात्परस्य नकारस्य ञकारादेशस्स्यात्। यथा–'नवतिञ्चश्ञथिष्टम्' यत्प्राश्ञीयात्। शादिति किम्? अस्ता-

१. रूपसाम्यादिति पाठः।

रक्षः'। नस्येति किम् ? 'अश्मन्नूर्जम्'। काठके न चेदिति किम् ? 'ब्रह्मचारिणे प्रश्नान्' 'रात्रिमाश्ना इति' 'अश्नुते तं कामम्' 'अन्नमश्नीत मृज्मीत' 'भद्रमश्नुते' 'अपाश्न्युष्णिम्' ॥

हकारान्योष्मणः स्पर्श उत्तरे सकृदेव हि ॥ ३५१ ॥

तन्मध्ये प्र[1]थमः स्यात्तत्स्पर्शसस्थान आगमः ॥ ३५२ ॥

हकारव्यतिरिक्तादूष्मणः स्पर्शे परे सति तयोरघोषोमस्पर्शयोर्मध्ये तस्य परभूतस्य स्पर्शस्य सस्थानः प्रथमः सकृदागमो भवति। यथा–य⌒क्कामयेत 'बाहुमात्रा⌒क्खायन्ते' 'कामश्चचमे' 'निष्टपामि' 'यदखष्ट्णया' 'स्त्तेगान्' 'वायवस्त्थ' 'अश्त्नुते तं कामम्' 'हविषस्तत्मना यज' 'य⌒प्पाप्मना' 'शुनश्र⌒प्फालाः' 'ते स्पमत्पाशान्'। सकृदिति किम्? आगमोष्मणोर्मध्ये पुनर्न भवतीति। अघोषोष्मण इति किम् ? 'अह्नां केतुः'। स्पर्श परे इति किम् ? 'ओहि मनुष्यस्य' ॥

[2]ङकारादेव चानन्त्यात्तपरे धपरे सति ॥ ३५३ ॥

ककारश्च गकारश्चेत्यागमस्स्याद्यथाक्रमम् ॥ ३५४ ॥

अन्त्यो न भवतीत्यनन्त्यः। तस्मादपदान्तात् ङकारात् तकारे परे सति ककारः, धकारे परे सति गकार इति यथाक्रममागमस्स्यात्। यथा–'योषेव शिङ्क्ते' 'परिवृङ्ग्धि हरसा'। तत्परः किम् ? 'अग्निर्वृत्राणि जङ्घनत्'। अनन्त्यादिति किम् ? 'प्रत्यङ्क्त्यहः' 'प्रत्यङ्धिष्णियान्'। ङकारादिति किम्? 'अन्तरमृतम्' 'अन्धोऽध्वर्युः'॥

[3]यत्रोष्माविकृते स्पर्शादुत्तमोर्ध्वेत्वनुत्तमात्॥ ३५५ ॥

आनुपूर्व्याद्यमानेतान्वर्णयन्त्यागमान् बुधाः ॥ ३५६ ॥

यत्र स्थले ऊष्मणः अविकृतिः विकृतिर्न भवतीत्यविकृतिः-अनादेशः तस्मादनुत्तमात् उत्तमव्यतिरिक्तात् स्पर्शात् उत्तमे परे सति विचक्षणाः आनुपूर्व्यात् स्पर्शक्रमात् यमान् यमसंज्ञकान् नासिक्यानागमान् वर्णयन्ति। प्रथमस्पर्शात्प्रथमयमः, द्वितीयाद् द्वितीयः, तृतीयात् तृतीयः, चतुर्थाच्चतुर्थः। तत्र 'तत्तद्ध्वनेरुत्पन्न'

---

१. प्रथमस्यादिस्पर्श इति पाठः।

२. ङकारादपदानन्तात्तधयोस्तु यथाक्रमम्।
ककारश्च गकारश्चागमः परयोर्यथा ॥ इति पाठः।

३. अत्रेति पाठः। अत्र-यजुषीत्यर्थः।

इत्युक्तत्वात् । तस्मात् (एक) पञ्चविंशतिर्यमा इति शिक्षान्तरमतमत्र न प्रसरति । उदाहरणानि-'यक्क्ना रुद्रम्' 'अग्ग्ने तेजस्विन्' 'अग्घ्न्या देवाभागम्' 'याच्च्ञैवास्य' यज्ज्ञस्य स्विष्टम्' 'आदृ्णारः' 'सप्रत्त्नवत्' 'ग्रत्थ्नाति' 'विघ्नाते' 'दद्ध्नातनक्ति' 'पाप्प्मना' 'इमामगृभ्भ्णन्' । स्पर्शादिति किम् ? 'कल्माषी भवति' । ऊष्मान्विकृते-रिति किम् ? 'यच्छन्श्नुपत्तत्' । ऊष्मण इति किम् ? 'ककुद्मानित्यादौ यमस्या-प्राप्तत्वात्[1] । अनुत्तमादिति किम् ? 'वाङ्म आसन्' । उत्तमपर इति किम् ? 'प्राणानाᳪंस्पृत्यै' 'अक्त ᳪं रिहाणाः' 'सं बद्दस्सगरः'[2] ॥

ऊष्मोत्तरे द्वितीयः स्यादादेशः प्रथमस्य तु ॥ ३५७ ॥

'हकारः प्रथमादूर्ध्वं तत्सस्थानं चतुर्थकम् ।
स्पर्शपूर्वः शकारश्छं लन्तश्चाप्नोति लोत्तरः' ॥

इति पूर्वमेव पदसंहितालक्षण उक्तेः 'अर्वाग्घ्येनम्' 'तच्छंयोः' इत्यादौ हश-कारयोर्घत्वछत्वादन्य ऊष्मा परिगृह्यते । तत्परे सति प्रथमस्यात्मनस्सवर्गीयो द्वितीय आदेशस्स्यात् । यथा-'अर्वाख्सन्ते' 'तथ्षोडशी' 'तथ्सवितुः' 'इदम्राथ्स्मेति' 'ङपूर्वः कस्सखोदृर्ध्वश्चेट्टुन्पूर्वश्चतो भवेत' इत्यागमनप्रथमस्यापि एतेन द्वितीयत्वे सति तदुदाहर्तव्यम् । यथा-'प्रत्यङ्ख्षडहः' 'षट्थ्सम्पद्यन्ते । तान्थ्सुब्धान्' । शपरेऽपदान्तस्यैव प्रथमस्य अप्राप्तत्वात् 'विसृपो विरफ्शिन'[3] ॥

---

१. ककुद्मानित्यादौ यमप्राप्त्यर्थमूष्मग्रहणमिति सर्व० ।

२. अत्र केचित्-'तᳪंसंप्रश्नम्' 'कृष्णोऽसि' 'इन्द्रः प्रस्नौ तु' 'अश्मन्नूर्जम्' 'वर्ष्मन्दिवः' 'अस्मिन् ᳪं श्र' 'पत्न्यन्वारभते' 'राझ्यसि' 'अधिपत्न्यसि' 'पोषयित्न्वा सनः' इत्यादी-न्यप्युदाहरन्ति । तदसारम्; शिक्षान्तरविरोधात् । तथाहि—

'वर्गान्तं शषसैस्सार्धमन्तस्थाभिश्च संयुतम् ।
दृष्ट्वा यमा निवर्तन्ते सिंहं दृष्ट्वा यथा गजाः' ॥ इति सर्व० ॥

३. विसृपोविरफ्शिन्' अस्मिन्विषये—

'पदादौ पदमध्ये वा स्थितस्योष्मपरस्य वै ।
प्रथमस्य द्वितीयत्वं पूर्वं कुर्वीत पण्डितः'

इति शिक्षान्तरेण विशेषविधानात् 'अपक्ख्षुधम्' 'यथात्थ्सारी' संवत्थ्सरम्' इत्यादौ द्वित्वात्पूर्वमेव द्वितीयादेशः । 'तत्थ्सवितुः' 'तत्थ्षोडशिनः' इत्यादौ प्रथमं द्वित्वे कृते द्वित्वोत्तरावयवस्य तकारस्य द्वितीयादेश इति विवेकः । तथा सति 'यथात्थ्सारी' इत्यादौ आगमतकार-थकार इति, 'तत्थ्सवितुः' इत्यादौ तकारथक र इति च वर्णक्रमो वेदितव्यः इति सर्व० ।

ह्रस्वाद्द्विरूपवन्नादो [1]यद्येनं सकृदुच्चरेत् ॥ ३५८ ॥

ह्रस्वात्परो नादः अवसाने पञ्चमवर्णः द्विरूपवत्-द्वित्ववर्णवद्भवति, तथापि वर्णक्रमोक्तिकाले एनं नादमेकवारमेव ब्रूयात्। अस्य न द्विरुच्चारणम्, न द्विरूपञ्चेत्यर्थः। यथा-'युङ्' यकार उकारङकारा इति। 'यन्' यकार अकार नकारा इति। 'तम्' तकार अकार मकारा इति ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे [2]पूर्वागमप्रकरणम् ॥

## द्वित्वनिषेधप्रकरणम् ॥ २१ ॥

[3]अथैतस्य प्रसक्तस्य प्रतिषेधस्तु कथ्यते ॥ ३५९ ॥

अथेत्ययमधिकारार्थः। एतद्द्वित्वलक्षणे प्राप्ते यस्य व्यञ्जनस्य द्वित्वं न स्यात्तस्यैव निषेध उच्यते। आगमस्याप्येवमेव ॥

ईदैत्पूर्वो यकारश्च विसर्गो रेफ एव च ॥ ३६० ॥

ईकारपूर्व ऐकारपूर्वो वा यकारो द्वित्वं नापद्यते लक्ष्यानुसारादपि। यथा—'घृताची यज्ञः' 'अथ ह्रसीया ँ सम्' 'सून्नीयमिव' 'पीयूषः' 'अतवीयान्' 'चीयते' 'मनश्चार्तीयेताम्' 'समव्लीयन्त' 'अस्मै य आसाम्' 'नैयग्रोधः' 'प्रैयङ्गवम्' प्रैयमेधा आसन' 'व्याघ्रो वैयाघ्रेधि' 'दोहै यज्ञम्'। तत्पूर्वः किम्? 'तेनोदय्यासुरान्' 'रय्यै पोषाय'। ननु द्वित्वलक्षणेऽप्रसक्ते यकारस्य निषेधः कथं क्रियते? उच्चारणज्ञापनार्थमिति ब्रूमः[4]। विसर्ग इति। विसर्गो रेफश्च द्वित्वं नाप्नुतः। यथा—'आ वः क्षेमे' 'मर्त्येष्वग्निः' ॥

प्रथमोद्र्ध्वेऽच्परे चोष्मा वकारस्स्पर्श उत्तरे ॥ ३६१ ॥

---

१. यदेतम् यदेनमिति च पाठः।

२. इत्यागमनप्रकरणम्, आगमवर्णप्रकरणम्, इत्यागमवर्णक्रमलक्षणम् इति च पाठभेदाः।

३. 'अथवैतत्' 'अथैवैतत्' इति च पाठः।

४. असन्देहार्थमिति ब्रूम इति पाठः।

[1]प्रथमपरे स्वरपरे वा सति ऊष्मा द्वित्वं नापद्यते। यथा—'अष्टाभ्यस्स्वाहा' 'प्रतिष्ठायै' 'वायवस्स्थ' 'आत्मानगृंस्पृणते 'स्विन्नस्स्नात्वी' 'अदश्श्म' 'दर्श-पूर्णमासौ' 'तद्बर्सन्नह्यति । तत्परः किम् ? 'दाश्श्य यज्ञम्' 'स्वाहा शयिष्यते । वकार इति। स्पर्शे परे सति वकारश्च द्वित्वं नेयात्। यथा—'आग्राव्णणः । तत्परः किम् ? 'नव्व्युच्च्यमथो' ॥

ऊष्मस्पर्शपरस्थे तु लकारश्च[2] तथैव हि ॥ ३६२ ॥

[3]ऊष्मपरे स्पर्शपरे वा सति लकारो द्वित्वं नेयात्। यथा—'मल्हा आलभेत' 'शतवल्शम्' 'कल्प्पाञ्जुहोति' । एवं परेष्विति किम् ? 'बैल्ल्वो यूपः। लकार इति किम् ? 'रुक्क्मम्' ॥

[4]वर्गीयानुत्तमोदूर्ध्वे हल् सवर्णोत्तर एव वा ॥ ३६३ ॥

एकवर्गे भवो वर्गीयः स चासावनुत्तमश्च, स चासावूदूर्ध्वश्च तस्मिन् परे सति तद्वर्गीयो हल् द्वित्वं नापद्यते। यथा - पाङ्क्तः' 'अर्वाग्ध्येनम्' 'तच्छंयोः' 'सरड्ढवै' 'नाम्ना चेद्ध्वयेते' 'यङ्काभयेत' 'संञ्जानानाः' 'शितिकण्ठाय' 'वृजनन्दो हसे' 'आहुस्तम्प्रजाम्' 'पूष्णेड्ग्रिणये'। वर्गीयानुत्तम पर इति किम् ? 'यज्ज्ञस्य'

---

१. प्रथमपरे अचारे वा सति ऊष्मा द्वित्वं नापद्यते। यथा-'अष्टाभ्यः स्वाहा' 'आत्मान-गृंस्पृणोति' 'तद्वर्सन्नह्यति'। एवं पर इति किम् ? 'अदर्शश्श्म ज्योतिः' 'प्रतिष्ठ्ठां वै' 'वायवस्स्थ'। अत्राभिधानप्रथमपरत्वे द्वित्वनिषेधः कथं न स्यात् ? 'मुख्यप्रथमसद्भावे द्वित्वं न स्यात्सदोष्मणाम्' इति शिक्षान्तरवचनं समुच्चिनोति चशब्द इति ब्रूमः। 'दाश्श्य यज्ञम्' इति सर्व०

२. वकारश्चेति पाठः।

३. ऊष्मणि स्पर्शे वा परे सति लकारो द्वित्वं नेयात्। यथा -'मल्हा.' 'शतवल्शम्' 'कल्प्पाञ्जुहोति'। एवं पर इति किम् ? 'कल्ल्याणी' 'ततो बिल्ल्वः' 'खल्ल्वाश्च मे' 'अथो खल्ल्वैन्द्रम्' इत्यादि।

'लकारस्य वकारस्य संयोगे स्वरितो यदि।
तदा संयुक्त एव स्यादसंयुक्तस्ततोऽन्यथा' ॥

इति शिक्षान्तरवचनेन 'बैल्व' इत्यादौ द्वित्वाभावो बोद्धव्यः। लकार इति किम् ? 'रुक्क्मम्। ऊष्मा च स्पर्शश्चोष्मस्पर्शौ। तौ परौ यस्मात् तस्य भावस्तस्मिन् इति सर्व०

४. अत्र बहुव्रीहिसमासमङ्गीकृत्य व्याख्यातं मञ्जरीकारेण।

'आट्ट्णारः' 'सप्रत्नवत्' 'गाप्मानम्' एषां द्वित्वम्। सवर्णोत्तर इति। समानो वर्णस्सवर्णः स चासावुत्तरश्च तस्मिन् परे सति सरूपो वर्णो द्वित्वं नेयात्। यथा– 'त्रिष्टुग्ग्रैष्मी' 'तज्ज्योतिः' 'षण्णवत्यै' 'यत्तन्न' 'अनुष्टुप्प्राणानाम्' 'तम्मा देवाः' 'अयस्मय्यवमा' 'यल्लोहितम्' 'अस्तभ्नाद्द्याम्' 'मय्येवसता'। 'स्पर्शो-दूर्ध्वो यवलोदूर्ध्वो मस्तेषामेत्यतु नासिकम्' इति सानुनासिकस्यापि वर्गीयवत् द्वित्वनिषेधो विज्ञेयः। यथा—'सँय्यत्ताः' 'सँव्वतोऽवरान्' 'इमँल्लोकम्'। सवर्णपरः किम्? 'वाक्वते' 'वषट्ट्थ्स्वाहा' 'कल्ल्याणी'॥

[1]यवहेषु परस्थेषु नकारश्चान्तगस्त्विति ॥ ३६४ ॥

---

१. ङनयोरन्त्ययोरिति पाठं स्वीकृत्य व्याख्यातं मञ्जरीकारेण। अन्ते भवावन्त्यौ। तयोः ङकारनकारयोर्यवहेषु परेषु सत्सु द्वित्वं न स्यात्। यथा—'यद्रियङ्वायुः' 'पराङ्वाव' 'प्रत्यङ्होतारम्' 'निरवपन् यानि' 'तान् यज्ञः' 'शाची३न् यशः' 'एतान् वा अरुणः' 'आक्रान् वाजी' 'उशन् ह वै' 'एतान् होमान्'। यवहेष्विति किम्? प्रत्यङ्ङ्त्यहो भवति' 'अनड्वाञ्च मे'। अन्त्ययोरिति किम्? 'न्यन्न्ये' 'नान्न्ये यान्'। ङनयोरिति किम्? 'वृषण्वान्'। शिक्षान्तरे—

'नकारान्तं पदं पूर्वमन्तस्थासु परासु च।
नकारान्तस्थयोर्मध्ये तत्र वर्णमसंयुतम्॥
नकारान्तं पदं पूर्वं यवहेषु परेषु च।
नकारयवहास्तत्र त्वसंयुक्ताः प्रकीर्तिताः॥
ह्रस्वपूर्वो नकारो यः पदान्तो वपरो यदि।
विशेषं तत्र जानीयाद् द्वित्वमित्यभिधीयते॥
अन्तस्थाद्युदये पूर्वपञ्चमस्तु द्विरुच्यते।
इतरादौ परे तत्र स न चेति स्मृतो बुधैः'॥

इत्यादिवचनबाहुल्येऽपि पाठानुसारेण व्यवस्था आश्रीयते। तदयमत्र सङ्ग्रहः—

प्राप्नुतोऽन्तौ ङनौ द्वित्वं व्यावृहत्रपरौ च रे।
ह्रस्वान्तो वपरो द्वित्वं सर्वत्र योत्तरस्तु ङः॥ इति।

तेन 'सदृङ्ङ्व्यावृत्कामः' 'विष्वङ्ङ्व्याच्र्छत्' 'अस्मान्न्वृणक्तु' 'आसन्निषून्न्हृथ्स्वसः' 'हृथ्स्वसो मयोभून्मयो भून्न्हृथ्स्वसः' 'चतुरोग्रे स्तनान्न्व्रतमुपैति' 'तान्न्रक्षध्वम्' 'रक्षाराजन्न्राजन्न्रक्ष रक्षा राजन्' 'न्यङ्ङ्रश्मिभिः' 'यस्मिन्न्वायुः' 'सदृङ्ङ्य एवम्' 'अर्वाङ्ङ्यज्ञः' 'यज्ञान्न्व्यादिशत्' इत्यादौ द्वित्वम्, तत्प्रयुक्तसंयुतिरपि। अन्यत्र यवहेषु द्वित्वाभावः-असंयुतिरिति विवेकः। इतिशब्दः प्रकारवाची इति सर्वं०।

यश्च वश्च हश्च यवहाः । तेषु परस्थेषु परेषु सत्सु, अन्तं गच्छतीत्यन्तगः, पदान्त इत्यर्थः, नकारश्च द्वित्वं नापद्यते । यथा—'निरवपन् यानि' 'मूर्द्धन्वती' 'एतस्मिन् हि' । तत्परः किम् ? 'जगत्यैनास्विन्न्यशूल्' । अन्तग इति किम् ? 'न्यन्न्ये धिष्णियाः' 'रशनान्न्युनक्ति' 'उत वान्न्वस्य' । नकार इति किम् ? 'प्रत्यङ्ङ्होतारम्' 'वृषण्ण्वान्' । इतिशब्दो निषेधपरिसमाप्ति द्योतयति ॥

नस्यान्तगस्य दीर्घात्तु यवहे हे च हल् परे[1] ॥ ३६५ ॥

परैरेभिर्हि तस्यैव न स्यात्संयुतता तथा ॥ ३६६ ॥

[2]दीर्घात्परस्य पदान्तस्य नकारस्य यवहेषु परेषु सत्सु परैरेतैर्यवहैः तस्य नकारस्य संयुतत्वं न विद्यते । ह्रस्वाद्दीर्घाद्वा परस्य नकारस्यापि हपरे सति, तस्मिन् हकारे व्यञ्जनपरे यदि । यथा—'एवैनान् युनक्ति' 'एतान् वा अरुणः' 'यज्ञान् व्यादिशत्' 'आसन्निषून् हृत्स्वसः' 'आत्मन् ह्यङ्गानि' 'तस्मिन् ह्यात्मानम्' 'तिष्ठन् ह्याश्रुततरम्' 'तिक्तान् ह्येनान्' । अन्तगस्येति किम् ? 'यान्न्येवैनम्' । दीर्घादिति किम् ? 'उदेहि वाजिन्न्यः' 'वाजिन्न्वृषा' । नस्येति किम् ? 'अर्वाङ्ङ्यज्ञः' ॥

स्वरायुक्तस्य वर्णस्य वाचकं नाम कथ्यते ॥ ३६७ ॥

वर्णक्रमोक्तिकाले तु नान्यसंज्ञां समुच्चरेत् ॥ ३६८ ॥

यस्मात् वर्णक्रमोच्चारणकाले कदाचिदपि अचा यस्य वर्णस्य युक्तत्वं न विद्यते तस्य वर्णस्य वाचकं नामोच्यते । वाचकमेव तद्बोधकं भवतीत्यर्थः ।

---

१. यवहेहोर्ध्व हल्परे इति पाठः ।

२. दीर्घात्परस्य पदान्तनकारस्य यवहेषु परेषु परभूतैरेभिर्यवहैस्संयुतता न स्यात् । यथा—'तान् यज्ञः' 'एतान् वै' 'एतान् होमान्' 'तिक्तान् ह्येनान्' इत्यादि । तथा हकारे हल्परे सति तस्य पदान्तस्य नकारस्य संयुतता नैव स्यात् । यथा—'तस्मिन् ह्यात्मानम्' 'तिष्ठन् ह्या श्रुततरम्' 'आत्मन् ह्यङ्गानि' । दीर्घविषये पूर्ववाक्येन ह्रस्वविषयेऽनेन वाक्येन चासंयुतिरिति न पौनरुक्त्यदोषः । नन्विदमनुपपन्नम्—पूर्ववचनेन शिक्षान्तरेण यवहपरस्य सर्वस्यापि नकारस्य द्वित्वं संयुतिः तदभावश्च निर्णीताः किमनेन वचनेनेति चेत्, अत्रोच्यते—पूर्ववचनेन द्वित्वं तदभावश्च निर्णीतौ, न त्वसंयुतिरपि । शिक्षान्तरेणासंयुतिस्तु नादकार्यसाधनं न भवतीत्येतदर्थमेतद्वचनारम्भ इत्यवगन्तव्यम् इति सर्व०

रङ्ग-यम-स्वरभक्त्यनुस्वारविसर्गादीनामित्यर्थः। इतरसंज्ञात्वन्तु न वदेत्। अस्य संहितागमस्वरव्यञ्जनोष्म-प्रग्रह-संयुत–वैकृत–कम्प–मात्रोदात्तादिस्वरधर्म–विराम ह्रस्वादिकमिति यावत्। रङ्गानुस्वारकालं विवृत्तिसंज्ञां चोच्चारयेदिति तु-शब्दार्थः॥

सर्ववर्णान्वदन्त्येवं ज्ञातौ द्वित्वागमौ न तु॥ ३६९॥
ततोऽफलं, फलं प्रोक्तं द्वित्वाद्युच्चारणाद्बुधैः॥ ३७०॥

लक्षणादागतान् सर्वानपि वर्णान् केचिदेवमुच्चारयन्ति। यथा–'द्वे' इति वत् 'उद्वयम्' इत्यत्रापि, उकार दकार वकार अकाराः। अत्र परत्र वर्णलाभ इति न ज्ञायते। एवं 'अर्वाग्ध्येनमिव' 'मेध्या विद्युतः' इत्यादि। तथासति सर्वेषां वर्णानां समत्वात् द्वित्वागमौ न बुद्धौ। किञ्च ततो वर्णक्रमाध्ययनफलमपि नास्तीत्युक्तं विद्वद्भिः। द्वित्वाद्युच्चारणात्तु तत्फलं लभेदिति तैरेवोक्तम्। प्रातिशाख्येऽपि 'प्रकृतिर्विक्रमः क्रमः' (प्रा. २. १२. ६.) इत्यादि। एतत्प्रकरणत्रयं वर्णसंहितेति विज्ञेयम्॥

इति सूर्यनारायणसूराविधानिविरचिते वेदतैजसाख्ये व्यासशिक्षा-
विवरणे द्वित्वनिषेधप्रकरणम्॥२१॥



## अङ्गसंहिताप्रकरणम्॥ २२॥

स्वराणां पूर्वतश्चैव ह्युदात्तादिस्वराः स्मृताः॥ ३७१॥
व्यञ्जनानां तदाप्त्यर्थमङ्गताद्य विधीयते॥ ३७२॥

पूर्वत्र स्वराणामेवोदात्तादिधर्मा उक्ताः। अद्य-इदानीमुदात्तादिस्वरधर्म प्राप्त्यर्थं व्यञ्जनानां स्वराङ्गत्वं निरूपयति। तदङ्गतया व्यञ्जनानां तद्धर्मोऽस्तीति यावत्। ननु कूपः यूपः सूप इत्यादौ व्यञ्जनमेवार्थविशेषबोधकमिति स्वरो व्यञ्जनाङ्गं किन्न स्यात्? उच्यते–व्यञ्जनं केवलमवस्थातुं न शक्नोति,

किन्तु सापेक्षम् । स्वरस्तु निरपेक्षः, केवलस्यापि पदत्वात् । सापेक्षनिरपेक्षयोर्निरपेक्षमेव विशिष्टमाचक्षते प्रेक्षावन्तः । विशिष्टं प्रत्यङ्गत्वमविशिष्टस्यैव । किञ्च स्वरवैशिष्ट्यबोधकमन्यदपि विद्यते–'स्वरास्तु ब्राह्मणा ज्ञेयाः' ।

'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि' ॥

इत्यादि । अत एव

'दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः ।
दुर्बलं व्यञ्जनं तद्वद्धरते बलवान् स्वरः' ॥

इति व्यञ्जनमेव स्वराङ्गमिति ब्रूमः ॥

परस्य व्यञ्जनश्चाङ्गं पूर्वस्याचोऽवसानगम् ॥ ३७३ ॥

स्वरस्य प्रधानतया व्यञ्जनं कदाचित्पूर्वस्याङ्गं कदाचित्परस्याङ्गमिति सन्देहे व्यवस्थापयति—तदङ्गभूतं व्यञ्जनं परस्वरस्याङ्गं भवति । यथा—'देवा वै' 'गावो वै' । पूर्वस्याच इति । अवसानं गच्छतीत्यवसानगम् । पदावसानवर्ति तु व्यञ्जनं पूर्वस्याङ्गं भवति । यथा—'स आभवत्' 'सवितारम्' । अवसानगमिति किम् ? 'तानेव' 'तमाहरत्तेन' इत्यादौ तन्मध्ये विरामाभावात्पूर्वस्वराङ्गत्वं न स्यात् इति ॥

ऋकारे परभूते च रेफः पूर्वाङ्गतामियात्[1] ॥ ३७४ ॥

ऋकारे परे सति रेफः पूर्वाङ्गं स्यात् । यथा—'यामे वात्रिर् ऋद्धिम्' 'तन्नैर् ऋतम्' 'आबभूवुर् ऋतस्य' ॥

अनुस्वारो विसर्गश्च [2]स्वरभक्तिरसंयुतः ॥ ३७५ ॥
योगादि च परायुक्तं पूर्वस्याङ्गं तथा स्मृतम् ॥ ३७६ ॥

---

१. भजेदिति पाठः ।

२. स्वरभक्तिस्तथैव चेति पाठः ।

[१]अनुस्वारो विसर्गः स्वरभक्तिश्चासंयुतो नकारश्च [२]संयोगस्यादिव्यञ्जनञ्च परस्वरेणाङ्गसम्बद्धं व्यञ्जनञ्च पूर्वस्वराङ्गं भवेत्। यथा—'आस्ये तृण ॐ

१. अनुस्वारश्च विसर्गश्च स्वरभक्तिश्च पूर्वाङ्गं भवति। यथा—'आस्ये तृणॐ सर्वा' 'आवः क्षेमे' 'कीर्शा गृध्रः'। एषां 'परायुक्तम्' इत्यनेनैव पूर्वाङ्गत्वे सिद्धे किमन्यैः पृथग्ग्रहणैः? अनुस्वारविसर्गयोः कण्ठोक्तिः व्यञ्जनगौणत्वादिति। व्यञ्जनगौणत्वं कथं प्रतीयते? क्वचिदप्यनयोरन्यवर्णयुक्तत्वाभावादिति ब्रूमः। स्वरभक्तेस्तु बहुविधानात्। असंयुत इत्यनेनासंयुतनकारमात्रस्य न ग्रहणम्, किन्तु असंयुतस्य सर्वस्यापि। अन्यथा 'अस्मिन् यज्ञे' 'पराङ्वाव' इत्यादौ नकारङकारयोस्संयोगाभावात् 'परायुक्तम्' इति वचनं बाधित्वा 'अन्तस्थोदयम्' इति पराङ्गत्वमेव स्यात्। तथा च 'अस्मिन् यज्ञे' 'पराङ्वाव' इत्यादौ नकारङकारयोरनुदात्तत्वाद्यापत्तिः, तच्चानिष्टम्, तथोच्चारणासम्भवात्। किञ्चासंयुतशब्देनासंयुतनकारमात्रस्याभ्युपगमे 'असंयुतश्च नो दीर्घात्' इत्यत्र नकारग्रहणस्य वैयर्थ्यापत्तेः। तदयमर्थः—असंयुतस्सर्वोऽपि वर्णः पूर्वस्याङ्गं भवति। 'अस्मिन् यज्ञे' 'तान् यज्ञः' 'तस्मिन् ह्यात्मानम्' 'यद्रियङ्वायुः' 'पराङ्वाव' इत्यादि। अत्र केचित्—'नस्यान्तगस्य' इत्यस्य विषयभूतस्य नकारमात्रस्य ग्रहणमभ्युपेत्य व्याचक्षते। तदसाधु; पूर्वोक्तदोषसद्भावात्। संयोगादिव्यञ्जनञ्च पूर्वाङ्गं भवति। यथा—'अग्निर्वृत्राणि'। नन्वत्रापि पूर्ववत् 'परायुक्तम्' इत्यनेनैव पूर्वाङ्गत्वे, योगादीति किम् पृथग्ग्रहणेन? 'अन्तस्थोदयम्' इत्यस्य बाधनार्थमिति ब्रूमः। परस्वरसम्बन्धरहितव्यञ्जनञ्च पूर्वस्याङ्गं भवति इति स्मृतम्। यथा—'व्यतिषजे थ्स्त्र्येवास्य' इति सर्व०

२. अत्रेदं बोद्धव्यम्—पूर्वं नकारस्यासंयुतता ३६५, ३६६ तम सूत्राभ्यां विहिता। ततश्चात्र 'असंयुता' इत्यनेन नकारो गृह्यत इत्याशयेनाह—नकारश्चेति। अत्र नकारमात्रस्य ग्रहणं सर्वलक्षणमञ्जर्यां नोरीकृतम्। तदाशयस्तयोरर्थयोस्ततः पूर्वतरस्य चार्थस्य प्रकृतार्थयोश्च व्याख्यानतो विशेषतोऽवगन्तव्यः। तथा चात्र पारिशिक्षा—

'पूर्वस्वराङ्गन्त्ववसानवर्ति भवेत्परायुक्तमसंयुतो नः'

अस्यार्थः—अवसाने वर्तत इत्यवसानवर्ति-विरामावधिभूतं व्यञ्जनम्। तत्तु पूर्वस्वराङ्गं भजते। यथा—'उत वा घास्यालात्' 'स आभवत्' 'प्रसुवाति तान्'। अवसानवर्तीति किम्? 'इमानेव' 'तत्ते रुक्मः' इत्यादौ तन्मध्ये विरामाभावात् पूर्वाङ्गत्वं न स्यादिति। परायुक्तम् परस्वरेणासम्बद्धम्, यस्य व्यञ्जनस्य परस्वरस्य च मध्ये व्यञ्जनान्तरमस्ति तद्व्यञ्जनं पूर्वस्वराङ्गं भवेत्। यथा—'यत्समानैः' 'वाक्त आप्यायताम्'। असंयुतो नः—असंयुक्तो नकारश्च पूर्वस्वराङ्गं भजते। यथा—'महान् ह्येष यदग्निः' 'स एतान् होमाञ्जुहुयात्' इति।

सर्वताते' 'मनः क्षेमे' 'कीर्दृशा गृध्रः' 'तस्मिन् ह्यात्मानम्' 'तान् यज्ञः' 'अग्निर्व्वृत्राणि' 'व्यतिषजेथ्स्त्र्येवास्य'। नन्वेषां 'परत्युक्तम्' इत्यनेनैव पूर्वाङ्गत्वसिद्धेः किमन्यैः ? अनुस्वारविसर्गयोः कण्ठोक्तिर्व्यञ्जनगौणत्वादिति न दोषः। व्यञ्जनगौणत्वमिति कथं प्रतीयते ? क्वचिदप्यनयोरन्यवर्णसंयुक्तत्राभावादिति ब्रूमः। स्वरभक्तेस्तु बहुविधानात्। नकारस्य संयोगाभावेऽपि तन्मध्ये विरामस्यावसानसंज्ञाभावात्पूर्वाङ्गत्वं नास्ति पूर्ववचनेन, परायुक्तभावात् 'अन्तस्थोदयमङ्गं स्यात्' इति पराङ्गत्वञ्च नास्तीत्ययमारम्भः। संयोगादिवर्णस्य तु 'मर्य्यमार्श्वोः' 'अर्व्वासि' इत्यत्र यकारवकारयोः 'अच्पूर्वाद्रादियाद्द्वित्वम्' इति द्वित्वे कृते प्रथमयवकारयोः 'परायुक्तम्' इत्यनेन पूर्वाङ्गत्वं प्राप्तम्, रेफस्य तु 'अन्तस्थोदयमङ्गं स्यात्' इत्यनेन पराङ्गत्वं प्राप्तम्। तच्चाशक्यम्, तथोच्चारणासम्भवात्, अन्यतरबोधे सति किं वा बोध्यमिति सन्देहस्स्यात्। तत्र निश्चायकत्वेन 'योगादि च' इत्युपतिष्ठते॥

**न पूर्वाङ्गं भवेत्स्पर्श ऊष्मणो विकृतिर्यदि ॥ ३७७ ॥**

ऊष्मणो विकृतिः—आदेशरूपस्स्पर्शः न खलु पूर्वाङ्गं स्यात्। अर्थात् पराङ्गमिति विज्ञेयम्, स्वतः स्थानुपशब्दतरात्। यथा—'यच्छ्मश्रुणः' 'इन्थद्वृत्रं वृत्रग्ं ७ँ् इजथच्छ्नथद्वृत्रम्॥

**पराङ्गं प्रचयाद्भक्तिः प्रचयेत्वृपरे[1] च रः ॥ ३७८ ॥**

---

१. त्वृत्परे इति पाठः।

स्वरभक्तेः ऋकारपररेफस्य च सर्वत्र पूर्वाङ्गत्वे प्राप्तेऽनेन पराङ्गत्वं विधीयते। स्वरितात्स्वरभक्तिः तथाभूतरेफश्च यथासङ्ख्यं प्रचये ऊष्मणि ऋकारे च परे सति पराङ्गं स्यात्। अतो ज्ञायते स्वरभक्तिरेफयोरनुदात्तपरत्वे 'भक्तिस्वारात्' इति प्रचयत्वमिति। प्रचयपरत्वे त्वनेनैव प्रचयत्वसिद्धेः। यथा—'पुनर्ह्‌विरसि' 'यद्दर्शपूर्णमासौ' 'इन्द्रो मरुद्भिर्‌ऋतुधा'। एवं पर इति किम् ? 'सदर्‌शतस्य' 'इतवल्‌शम्' 'पुनर् ऋतुनाह' इत्यादि। अत्र दीर्घस्वरितपूर्वयोरनन्त्यायाः प्रचयपरेऽपि 'दीर्घात्स्वारादनन्त्ये' इत्यनया शिक्षया अन्त्याया अपि 'स्वराद्दीर्घात्पदान्तस्थ' इति शिक्षान्तरेण तथा दीर्घपूर्वस्य रेफस्य च 'दीर्घस्वारात्परो रेफः' इति शिक्षान्तरेण च विशेषविधानात् तद्विशेषं परित्यज्येदं वचनं प्रवर्तते। तथा च ह्रस्वस्वरितविषयमेतदिति स्पष्टमवगम्यते इति सर्व०

प्रचयात्परा स्वरभक्तिः परस्वराङ्गं स्यात् प्रचये ऊष्मणि परे सति । यथा–'सहस्रशीर्‌षा' 'तच्चतुर्‌होतॄणाञ्चतुर्‌होतृत्वम्' 'उन्नावेतं धूर् षाहावनश्रू' । प्रचये परे त्विति केचित् । 'पुनर्‌हविरसि' इति प्रातिशाख्यमतानुसारात् । प्रचय इति । प्रचये ऋकारे परे सति रेफश्च पराङ्गं स्यात् । यथा–'ऋषेर् ऋषेः' । प्रचय इति किम् ? 'आबभूवुर् ऋतस्य ॥

अन्तस्थोदयमङ्गं[1] स्यादसवर्णं परस्य च ॥ १७९ ॥

अन्तस्था उदय उत्तरा यस्य तत् । तस्या अन्तस्थाया असवर्णं व्यञ्जनं परस्वरस्याङ्गं स्यात् । यथा–'स्त्रस्य जायते' 'विचिक्ष्युः' 'अद्दश्येनात्स्मर्यै' 'इर्यो भूत्वा' 'ये शुक्लास्स्युः' 'इषे त्वा' । 'असवर्णमिति किम् ? सँय्यत्ताः' 'अकुर्व्वत तैर्व्वैते' । अन्तस्थोदयमिति किम् ? 'वाक्त आ' ॥

[2]ऊष्मण्युद्ध्वँ पराङ्गे तु स्पर्शश्चैव यमास्त्विति ॥ १८० ॥

परस्याङ्गं पराङ्गम् । तस्मिन्नूष्मणि परे सति स्पर्शश्च परस्वराङ्गं स्यात् । यथा–'तथ्सवितुः' 'युख्ष्वा हि' । एवं पर इति किम् ? 'अख्ष्णया' । यमा इति । यमा नासिक्याश्च परस्वराङ्गानि भवेयुः । यथा–'अग्ग्नये' 'पौष्ट्ण्येतेन' 'विष्ट्ण्वनुस्थितः' । अङ्गनिर्णयः कृत इतीति शब्दः ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे अङ्गसंहिताप्रकरणम् ॥ २२ ॥

---

अत्र पारिशिक्षा—

'भक्तिः पराङ्गं प्रचयात्परा चेत्तथा धृते सत्यृपरे च रेफः' इति ।

अस्यार्थः—प्रचयात्परा भक्तिः–स्वरभक्तिः पराङ्गं परस्वराङ्गं स्यात् । प्रचये ऋपरे-ऋकारे परे सति रेफश्च तथा-पराङ्गं स्यात् । यथा—'ऋषेर् ऋषेवँ' । धृत इति किम् ? 'सुतमा बभूवुर् ऋतस्य' ।

१. 'याज्या' इत्यत्र जकारयकारयोर्भिन्नरूपत्वम्, न सवर्णसंज्ञाशङ्का इत्यधिकः पाठः क्वचित् ।

२. स्पर्शस्येति सान्निध्याल्लभ्यते । ऊष्मणि परे सति स्पर्शः परस्याङ्गं भवति स ऊष्मा पराङ्गश्चेत् । यथा–'तथ्सवितुः' 'युक्ष्वाहि' । एवं पर इति किम् ? 'अक्ष्ण्या' । यमा नासिक्याश्च परस्वराङ्गानि भवेयुः । यथा–'अग्ग्नये' 'घ्घ्नन्ति वै' 'आट्टणारः' 'पाप्प्मानम्' इत्यादि । 'पौष्ण्येतेन' 'विष्ण्वनु स्थितः' इत्यादौ यम एव नास्तीति पूर्वमेवोक्तम् । इति शब्दोऽङ्गसमाप्तिं द्योतयति इति सर्व० ।

## स्वरभक्तिप्रकरणम् ॥ २३ ॥

### स्वरोद्ध्वोंष्मणि रेफस्य लस्यापि स्वरभक्तिता ॥ ३८१ ॥

स्वर ऊद्ध्वों यस्मादसौ स्वरोद्ध्वः । स चासावूष्मा च, तस्मिन् स्वरोद्ध्वोष्मणि परे सति रेफस्य स्वरभक्तिता स्वरभाक्त्वम् । स्वरव्यञ्जनात्मकवर्णत्वमिति यावत् । लकारस्याप्येवमेव । यथा 'बर्सम्' 'मल् ह्राः' । ऊष्मपर इति किम् ? 'श्रद्धा वै' 'अर्क्कैर्क्कः' । तस्य स्वरपर इति किम् ? 'वर्षाभ्यः' वर्स्वेभिः' 'निर्ह्यग्निः' । तयोरिति किम् ? 'क्षत्रम्' 'तथ्सवितुः' ॥

### तन्मध्ये ऋत्वलृत्वे च स्वरभक्तिं प्रकल्पयेत् ॥ ३८२ ॥

[1]तन्मध्ये स रेफो मध्ये यस्यासौ तन्मध्यः । रेफगर्भ इत्यर्थः । तस्मिन् ऋकारे द्विस्स्वरभक्तिं प्रकल्पयेत् । एवं तन्मध्ये लृकारेऽपि स्वरभक्तिद्वयं

---

१. तन्मध्ये ऋत्वे लृत्वे इति पदच्छेदः । तच्छब्देन प्रकृतौ रेफलकारौ गृह्येते । भावार्थप्रत्ययः स्वरूपपरः । तदयमर्थः—सः रेफो लकारश्च मध्ये यस्य तस्मिन् ऋकारे लृकारे च द्विधा स्वरभक्तिं प्रकल्पयेत् । ऋकारे लृकारे चैकैकस्मिन् स्वरभक्तिद्वयं प्रकल्पयेदित्यर्थः । तथा चैकमात्रिकस्य ऋकारस्य तादृशलृकारस्य च मध्ये यथासङ्ख्यमर्धमात्रिको रेफः अर्धमात्रिको लकार उभयत्रावशिष्टः ऋकारांशः लृकारांशश्चार्धमात्रिकः । तदुभयञ्च द्विधा विभज्य पादमात्रिकः ऋकार आद्यावयवः । इतरस्तु उत्तरावयवः, लृकारांशोऽप्येवमेव योजनीयः । एवञ्च स्वरभक्तिः ऋकारलकारस्वरूपज्ञानसापेक्षेति मन्तव्या । तथा च शिक्षा—

'व्यञ्जनस्वरभक्तीनां कालस्स्यादर्धमात्रिकः ।
ऋकारल्कारयोर्मध्ये तथा रेफलकारयोः ॥
स्वरोत्तरोष्मणः पूर्वरेफस्य स्वरभक्तिता ।
हशोत्तरो लकारश्च प्राप्नुयात्स्वरभक्तिताम् ॥
ऋकारस्य स्वरूपं तद्बुध्वा बोद्धुं हि शक्यते ।
स्वरभक्तिमतो विद्यादृकारमिह विस्तरात् ॥
ऋकारस्य स्वरूपं हि शिलष्टं पादचतुष्टयम् ।
पादेषु तेषु विज्ञेयावादावन्ते स्वरात्मकौ ॥

प्रकल्पयेत्-सम्पादयेदित्यर्थः। तथा चात्रेयशिक्षायाम् 'ऋकारल्कारयोर्मध्ये तथा रेफलकारयोः' इत्यत्रापि रलयोरर्धमात्राया उक्तत्वादाद्यन्तस्वरांशयोः प्रत्येकमणुमात्रत्वात् स्वरभक्तेरर्धमात्राया उक्तत्वाच्चैकमात्र ऋकारभावे स्वरभक्तिरिति वर्णद्वयं जातम्, एवं लृकारेऽपि। अनेन कल्पनाशब्देन पूर्वस्वरयोरलोप इति वक्ष्यते॥

हपरे तु हलन्ता स्यात्स्वरभक्तिस्तु संवृता॥ ३८३॥

हकारपरे सति हलन्ता व्यञ्जनान्तेति ऋकारस्य पूर्वभाग उच्यते। तत्कथम्? तत्र ऋकारे प्रथमस्याणुमात्रस्य स्वरात्मकत्वाद्द्वितीयाणुकस्य रेफे सति व्यञ्जनत्वाच्च। शिक्षान्तरेऽप्येवमेव 'रेफस्य चादिभूतं हि पादं पूर्वेण योजयेत्' इति। स्वरस्य भक्तिरवयव इत्यर्थः। स्वरपादान्वितत्वात्स्वरभक्तिरित्युच्यते। इयं स्वरभक्तिस्संवृता-संवृतकरणा भवति। एतद्वर्णद्वयस्य प्रत्येकप्रयत्नं तुशब्दो निवर्तयति। एवं लृकारेऽपि। यथा—'बर्हिः' 'मल्हाः'॥

अजन्ता शषसोर्ध्वे च विवृता समुदीरिता॥ ३८४॥

शषसपरे अजन्ता-स्वरान्तेति ऋकारस्योत्तरभाग उच्यते। कुतः? एत तृतीयाणुकस्य रेफे सति व्यञ्जनत्वाच्चतुर्थाणुकस्य स्वरत्वाच्च 'स्वरात्मकेन पादेन चोत्तरेणोत्तरं तथा' इति च। एषा स्वरभक्तिर्विवृता-विवृतकरणा स्यादित्युक्ता। एवं लृकारेऽपि। यथा—'स्वस्तिः पर्शुर्वेदिः' 'आपपूर्षम्बरः' 'वर्षति' 'बर्सम्' 'शतवल्शम्'॥

---

अणू रेफस्य मध्ये द्वौ विज्ञेयौ व्यञ्जनात्मकौ।
रेफस्य चादिभूतं हि पादं पूर्वेण योजयेत्॥
स्वरात्मकेन पादेन ह्युत्तरेणोत्तरं तथा।
स्वरपादान्वितौ भागौ स्वरभक्तिरितीरितौ॥
हकारे पूर्वभागस्स्यादुत्तरः शषसेषु च।
हकारे संवृतां विद्याद्विवृतामितरत्र तु॥
पूर्वस्वरस्य चाल्पत्वमित्वमुत्वमिति त्रयम्।
एतत्सर्वं विसृज्यैव स्वरभक्तिं समुच्चरेत्॥ इति॥

एवञ्च स्वरभक्तेरर्द्धमात्रत्वविधानादृकारं द्विधा विभज्य ऋकाररेफात्मैका अर्द्धमात्रिकैका, रेफर्कारात्मिकान्या। स्वरपादान्वितत्वात्स्वरभक्तिरित्यन्वर्थसंज्ञा। एवमेकस्मिन् ऋकारे लृकारे च स्वरभक्तिद्वयं प्रकल्प्योत्तरवचनेन विषयव्यवस्था क्रियत इति सर्वं॰

स्वरभक्तिः करेणू रो होदूर्ध्वो लः कर्विणी भवेत् ।। ३८५ ।।

हरिणी शषसोर्ध्वो रो लकारो हारितोच्यते ।। ३८६ ।।

हपरो रेफः करेणुस्वरभक्तिरिति स्मृता। 'बर्हिः'। हपरो लकारः कर्विणी स्वरभक्तिरिति। 'मल् हाः'। शषसपरो रेफो हरिणी स्वरभक्तिस्स्यात्। 'दर्शपूर्णमासौ' 'वर्षवृद्धम्' 'बर्सम्'। शषसपरो लकारो हारिता स्वरभक्तिरित्युच्यते। एतत्सम्प्रदायविद्भिरिति शेषः। 'सहस्रवल्शाः'[1] ।।

दीर्घात्स्वाराद्‌नन्त्या च स्वाराद्भक्तिः पृथग्भवेत्[2] ।। ३८७ ।।

स्वरिताद्दीर्घात्स्वरात्परा अनन्त्या पदमध्यस्था या स्वर भक्तिः सा पृथक् स्वतन्त्रा स्यात्। यथा—'तेनार्हति, 'स शीर्षा, 'कोर्हति,। स्वारादिति किम्? 'पापमकार्षम्, 'चत्वार आर्षेयाः'। अनन्त्येति किम्? 'वस्तोर् हविष्मती'। ह्रस्वात्स्वरितात् परा स्वरभक्तिश्च पृथक् स्यात्। यथा—'यद्दर्शपूर्णमासौ' 'पुनर्हविरसीत्याह' ।।

प्रत्येकस्वरभाग्यश्च न भक्तिर्निहते च हे ।। ३८८ ।।

[3]प्रत्येकं स्वरमुदात्तादिकं भजतीति प्रत्येकस्वरभाक्। पूर्वोत्तरस्वराभ्या-

---

१. 'सहस्रवल्शाः'। अत्र 'हरिणी शषसोर्ध्व' इति षपरायाः स्वरभक्तेर्हरिणी संज्ञाविधानेऽपि शिक्षान्तरे 'या तु हंसपदा नाम सा तु रेफषकारयोः' इति विशेषविधानाद्रेफषकारयोर्योगे हंसपदेति च संज्ञा इति सर्व०

२. दीर्घात्स्वरितादनन्त्या-पदमध्यस्था या स्वरभक्तिः सा पृथक्-स्वतन्त्रा स्यात्। यथा— 'तेनार्हति' 'विशीर्षा' 'कोर्हति'। स्वारादिति किम्? 'बार् हस्पत्यꣳशितिपृष्ठम्' 'आर्षेयाः प्रार्षेयाः, 'ऋषिमार्षेयम्,। अनन्त्येति किम्? 'वसतीवरीर्होतृचमसम्' 'अनश्रूधूर्षाहौ' इति सर्व०

३. प्रत्येकं स्वरमुदात्तादिकं भजतीति प्रत्येकस्वरभाक्। पूर्वोत्तरस्वराभ्यामन्यस्वरभागित्यर्थः। स वर्णः पृथक्—स्वतन्त्रस्स्यात्। सान्निध्यात्पृथगिति लभ्यते। यथा—'इन्द्रियायर्षिभ्यः' 'विधायर्षिरवोचत्' 'अरुणाः काण्डर्षयः' 'ऋतस्य धूर् षदम्' 'सहस्र शीर्षन्देवम्' 'स दर्शतस्य' 'शतवल्शं विरोह' 'तस्मात्' 'धियः' इत्यादि। 'यद्रियङ्' 'ब्रह्मण्वन्त इति ब्रह्मण्०वन्तः' 'अश्मन्' 'राजन्' 'वायव्यग् ꣳ श्वेतम्' इत्यादौ नादानुस्वाराभ्यां पूर्वस्योच्चवद्भावविधानात् तयोरेव स्वातन्त्र्येण स्वरितत्वविधानाच्च तावुभौ स्वतन्त्र-

न्यस्वरभागित्यर्थः। स वर्णः पृथक् स्यात्। सान्निध्यात्पृथगिति लभ्यते। यथा—'इद्रिन्यायरषिभ्यः' 'विधायरषिरवोचत्' 'ऋतस्य धूर्षदम्' 'अरुणाः काण्डर्षयः'

स्वरिताविति ज्ञेयौ। एवम् 'वस्तोर्हविष्मती' 'वसतीवरीर्होतृचमसम्' 'तन्नैर्ऋतम्' 'ऋषेर् ऋषेर्वे' इत्यादौ शिक्षान्तरेण पूर्वस्य स्वरितस्योच्चवत्वम्, स्वरभक्तिरेफयोस्स्वरितत्वम्, अनया शिक्षया स्वातन्त्र्यञ्चेति। उक्तान्येतान्यप्युदाहरणानि भवितुमर्हन्ति। प्रत्येकस्वरभागिति किम्? 'सहस्रशीर्षा' 'किग्ंस्विदासीत्'। न भक्तिर्निहते च हे इति। परभूते हकारे निहते—अनुदात्ते सति स्वरभक्तिर्न पृथक्—न स्वतन्त्रा। किन्तु पूर्वाङ्गमिति पूर्वमेवोक्तम्। यथा—'धीतिभिर्हितः' 'एतद्बर्हिर्ह्येषः'। अत्र स्वातन्त्र्यनिषेधादुत्सर्गशास्त्रेण पूर्वाङ्गत्वमवशिष्यते। न हि कदाप्यङ्गभूतो वर्णः स्वातन्त्र्यं विनाङ्गिस्वरं विजहाति। तथा च स्वातन्त्र्ययोग्य एव वर्णः 'भक्तिस्वारात्' इत्यनेन प्रचयो भवति। स्वातन्त्र्याभावेऽङ्गिस्वरमेव प्राप्नोति। एवञ्च सति 'धीतिभिर्हित' इत्यादौ स्वातन्त्र्याभावात्पूर्वाङ्गत्वेन स्वरितत्वम्। 'ब्रह्म इत्यार्षम्' 'पापमकार्षम्' इत्यादौ—

'याय काण्ड विधायोद्ध्वर्वमृषिभ्यो ह्यृषयो ह्यृषिः।
इत्यास्र शीमकापूर्वमृषञ्चेति स्वतन्त्रता'॥

इत्यारण्यकशिक्षावचनेन स्वातन्त्र्यञ्चेति बोध्यम्। किञ्च 'धृतवदृपरे च र' इत्यस्य नियमाभ्युपगमात् विरामस्थस्य स्वरितात् परस्य व्यञ्जनस्य प्रचयत्वं स्वातन्त्र्यञ्च द्रढयति चशब्दः। तथा च 'मर्कटः' 'क्षिप्रश्येनस्य' 'अस्थन् यज्ञकृतः' इत्यादौ विरामसद्भावात् प्रचयत्वं स्वातन्त्र्यञ्च सिद्धं भवति। नन्वेवमपि 'धीतिभिर्हितः' इत्यादौ 'दोषावस्तोर् हविष्मती' इतिवत् प्राकृता वैकृता चेति किं न स्यात्? उच्यते—दीर्घपूर्वाया अन्त्याया एव स्वरभक्तेः 'प्राकृता वैकृता च' इत्यनेन ग्रहणमिति 'संयुतोर्ध्वं' इत्यत्र पूर्वमेव सूचितम्। तदमयमत्र सङ्ग्रहः—

'पूर्वाङ्गत्व—पराङ्गत्व—स्वतन्त्रत्व—विभेदतः।
स्वरभक्तिस्त्रिधा प्रोक्ता त्रैविध्यञ्च विविच्यते॥
स्वाराद्ध्रस्वाच्च या भक्तिः पराङ्गं प्रचये परे।
नीचे स्वतन्त्रा प्रचया पूर्वाङ्गं निहते च हे॥
स्वारे दीर्घे तु यानन्त्या स्वतन्त्रा प्रचया भवेत्।
निहते प्रचये वापि पूर्वाङ्गमितरत्र तु॥

'सहस्रशीर्षन्देवम्' 'स दर्शतस्य' 'शतवल्शम्' 'ब्रह्मण्वन्त इति ब्रह्मण० वन्तः' 'अश्मन्' 'वायव्यᳪ श्वेतम्' 'तस्मात्' 'धियः'। प्रत्येकस्वरभागिति किम्?

---

अन्त्या यदि भवेत्सैव स्वर्यते पूर्व उच्चवत्।
आद्यपूर्वादि विहितास्तिस्रोऽपि स्वरभक्तयः॥
स्वतन्त्रास्ता उच्चनीचस्वारा ज्ञेयाः क्रमाद्बुधैः।
इत्यामकेति पूर्वा चेत् स्वतन्त्रारण्यके मता॥
स्वतन्त्रस्वरभक्तीनां कालस्स्यादेकमात्रिकः।
प्रत्येकस्वरभाक्त्वाच्च निर्देशादङ्गुलौ पृथक्॥
इतरास्त्वर्धमात्रास्स्युरिति वेदविदो विदुः।
व्यञ्जनं स्वारपूर्वश्चेद्विरामे प्रचयं भवेत्॥
स्वतन्त्रं तच्च विज्ञेयं पूर्वाङ्गन्त्वविरामगम्।
ह्रस्वस्वाराच्च रेफश्चेदृकारे निहते परे॥
स्वतन्त्रः प्रचयो ज्ञेयः पराङ्गं प्रचये परे।
दीर्घस्वारादन्त्यभक्तिर् ऋपरो रेफ एव च॥
निहते प्रचये वापि स्वर्यते पूर्व उच्चवत्।
अनुस्वारश्च नादश्च दीर्घान्तो यवहोत्तरः॥
ङनौ ह्रस्वात्सषोपेतौ दीर्घाद्भक्तिः पदान्तगा।
दीर्घादिति परे रेफः स्वरितग्राहिणः पृथक्॥
अनुस्वारादयस्सस स्वर्यन्ते पूर्व उच्चगाः।
पृथस्वरत्वादेतेऽपि स्वातन्त्र्यार्हा न संशयः॥
स्वतन्त्रेषु च वर्णेषु द्वयोर्निर्देश इष्यते।
यत्स्वरा स्वरभक्तिस्स्यान्निर्देश्या च तदङ्गुलौ॥
स्वारभाग्यदि भक्तिस्स्यादनुस्वारोऽपि वा तदा।
उच्चवत्पूर्वमूर्ध्वञ्च ह्यनामिकान्तरान्त्ययोः॥
पूर्वेण निर्दिशेदन्यं स्वतन्त्रं नैव निर्दिशेत्।
स्वतन्त्रेतरवर्णे यः पूर्वस्य च परस्य वा॥
अङ्गतां प्राप्य तस्यैव स्वरं भजति नान्यथा।
एवं यो लक्षणं बुध्वा शिष्याणामपि बोधकः॥
स एव वेदविच्छ्रेष्ठस्स एवाचार्य उच्यते'॥ इति सर्व०॥

'सहस्रशीर्षा' 'किम्ंस्विदासीत्' । न भक्तिरिति । नीचे हकारे परे सति स्वरभक्तिर्न पृथक्, किन्तु पूर्वाङ्गमित्यर्थः । यथा—'धीतिभिर्हितः' । भक्त्यन्याव-

अत्र पारिशिक्षा—

'उदाहरिष्ये स्वरभक्तयस्ताः क्रमात्करेण्वादि च हारितान्तम्'

स्वरभक्तीनां लक्ष्यप्रदर्शनं करोमीति प्रतिजानीतेऽनेन । ताः पूर्वोक्तास्स्वरभक्तयः करेण्वादि करेणुस्वरभक्तिप्रभृति हारितान्तम्–हारितास्वरभक्तिपर्यन्तं क्रमात्–पूर्वोक्तक्रमेणो-दाहरिष्य इत्यर्थः ।

'बर्हिर्यजत्यर्हति गार्हपत्यं करेणु मल्हा इति कर्विणी स्यात् ।
सहर्षभा हंसपदा सुवर्षा दर्शश्च पर्शुर्हरिणी च बर्सम्' ॥

संज्ञाकरणस्य तूपयोग उच्यते—वर्णक्रमोच्चारणकाले तत्तन्नाम्ना वक्तव्येत्येतदर्थं संज्ञाकरणमुक्तम् । अथोदाहरणानि लक्ष्यन्ते बर्हिरित्यादिना—'बर्‌हिर्यजति' 'अर्हति' कोऽर्‌हति सहस्रम्' 'गार्‌हपत्यम्' एतानि करेणुस्वरभक्त्युदाहरणानि । मल्हाः-'मल्‌हा आलभेत' इति कर्विणी स्यात्-कर्विणीस्वरभक्त्युदाहरणं स्यात् । सहर्षभा—'सहर्‌ष-भेत्याह' 'सुवर्षाम्–दिवि मूर्धानं दधिषे सुवर्‌षाम्' इत्यादीनि हंसपदास्वरभक्त्युदा-हरणानि । दर्शः–'दर्‌शश्च पूर्णमासश्च' पर्शुः–'पर्‌शुर्वेदिः' बर्सम्–'यज्ञस्यैव तद्बर्‌सम्' इत्यादीनि हरिणी–हरिणीस्वरभक्त्युदाहरणानि ।

'तद्बर्समित्यत्र तु हस्तिनी वा ऋतस्य धूर्षेति तथा स्वतन्त्रा ।
सहस्रवल्शाश्शतवल्श हारिता एवञ्च सप्त स्वरभक्त्युदाहृताः' ॥

'तद्‌बर्‌सम्' इत्यत्र स्वरभक्तिर्हस्तिनी वा पक्षान्तरेण हस्तिनी संज्ञा स्यात् । ऋतस्य धूर्षेति । 'ऋतस्य धूर्‌षम्' इत्यत्र स्वतन्त्रा स्वरभक्त्युदाहरणं स्यात् । 'सहस्रवल्‌शाः' 'शतवल्‌शं विरोह' इत्यत्र हारिता हारितास्वरभक्तिः । एवमुक्तप्रकारेण सप्त स्वर-भक्ति–स्वरभक्तय इत्यर्थः । अत्र स्वरभक्तय इति वक्तव्ये स्वरभक्तीत्यार्षत्वादिति विज्ञेयम् । उदाहृताः–उदाहृताः भवन्ति ॥

'दीर्घाच्च ह्रस्वात्स्वरितादनन्त्या पृथग्भवेद्भक्तिरसंहिता च'

दीर्घात्स्वरितात्परानन्त्या-अपदान्ता असंहिता भक्तिः स्वरभक्तिः पृथक् प्रत्येकं स्यात् । यथा—'सशीर्‌षाणमेव' 'यच्छीर्‌ष्णीशीर्‌षक्तिमान्', कोर्‌हति सहस्रम्' 'यद्गा-र्‌हस्पत्यः' 'तेनार्‌हति' । स्वरितात्परेति किम् ? 'चत्वार आर्‌षेयाः प्राश्नन्ति' ।

सानप्रचयवर्णो न पृथगिति चकारार्थः । 'उभयोर्ल्लोकयोः' । अत्र रेफः पूर्वाङ्गम्भवेति विज्ञेयम् ।।

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षा-
विवरणे स्वरभक्तिप्रकरणम् ।। २३ ।।

---

## स्थानकरणप्रयत्नप्रकरणम् ।। २४ ।।

**वायौ चरत्युरस्यन्तर्मन्द्र उद्भवति ध्वनिः ।। ३८९ ।।**
**कण्ठे च मध्यमो ज्ञेयः शीर्षे तारः स्वशक्तितः ।। ३९० ।।**

देहस्थे वायावुरसि-उरस्थाने अन्तः-अभ्यन्तरे चरति समीरणाभिघाते सतीत्यर्थः । तदा ध्वनिः-स्वरः शब्द उद्भवति । स मन्द्रसंज्ञस्स्यात् । शम्भुशिक्षायामप्युक्तम्—

'मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।।' इति ।।

---

अनन्त्येति किम् ? 'दोषावस्तोर् हविष्मती घृताची' । ह्रस्वात्स्वरितात्परा स्वरभक्तिश्च प्रत्येकं स्यात् । पुनर्हविरसीत्याह' 'यद्दर्शपूर्णमासौ' ।।

'पृथक्स्वरं यो भजतीह वर्णः पृथक्च भक्तिर्निहते न होदृर्ध्वे ।।

पृथक्स्वरः-प्रत्येकस्वरः तं पृथक्स्वरम् उदात्तादिकं यो वर्णो भजति—पूर्वोत्तरस्वराभ्यामन्यस्वरभागित्यर्थः । स वर्णः पृथक् प्रत्येकं स्यात् । यथा—'अश्मन्' 'वायव्यग् ॐ श्वेतम्' 'शतवल्शम्' 'स दर्शतस्य' 'सहस्रवल्शाः' 'सहस्रशीर्षन्देवम्' 'अरुणाः काण्डर्षयः' 'ऋतस्य धूर्षदम्' 'विधायर्षिरवोचत्' 'इन्द्रियावर्षिभ्यः' । स इति किम् ? 'किग् ॐ स्विदासीत्' । नीचे निहते होदृर्ध्वे हकारे परे सति भक्तिः न पृथक्, किन्तु पूर्वाङ्गमिति पूर्वमेवोक्तम् । 'वीतिभिर्हितः । भक्त्यन्यानवसानप्रचयो वर्णो न पृथगिति चकारार्थः । 'उभयोर्ल्लोकयोः ।। इति सर्व०

इतोऽधिकध्वनिः मध्यमसंज्ञस्स्यात्कण्ठे उच्चरितस्सन् । अतोऽधिकध्वनिस्तार-संज्ञस्स्याच्छिरस्युच्चरितस्सन् । स्वशक्तेः-स्वशक्तित इति[1] ॥

उच्चार्यते त्रिभिस्तैस्तु यावदध्ययनं क्रमात् ॥ ३६१

[2]यावत्पर्यन्तो वेदभागोऽधीयते तावत्पर्यन्तं पूर्वोक्तैस्त्रिविधैः मन्द्रमध्यम-तारसंज्ञिकैर्ध्वनिभिः क्रमादिति ज्ञातव्यः । तत्कालाध्यायमनुवाकमनुवाकद्वयं वा भागत्रयं मत्वा पूर्वभागं मन्द्रध्वनिनोक्त्वा विश्रमं कृत्वा ततो मध्यमेन द्वितीयम्, तारध्वनिना तृतीयञ्चेति यावच्छब्दार्थः । एकस्मिन्नुच्छ्वासेऽनेकध्वनिमाक्षिपति-तुशब्दः । अनेन प्रतिप्रश्नस्य ध्वनित्रयमावश्यकमित्युच्यते ॥

[3]नादः श्वासो हकारार्कौ कण्ठेऽल्पे विवृतेऽधिके ॥ ३६२ ॥

'ध्वनिः स्थानं च करणम्' इति विज्ञेयत्वेन विधानादयमारम्भः । प्रकृति-शब्दत्रये[4] एकैकस्य चातुर्विध्यमुच्यते-'नादः श्वासो हकारार्कौ' इति । एषां तावल्लक्षणमाह—अल्पे सङ्कुचिते कण्ठे यश्शब्दः क्रियते स नादसंज्ञो भवति । विवृते विस्तृते कण्ठे यश्शब्दः स श्वाससंज्ञो भवति[5] । एतत्संवृतविवृताभ्याम-धिकयोः क्रमात् हकारार्काविति संवृतविवृतयोर्मध्यमप्रकारे कण्ठे यश्शब्दः स हकारसंज्ञः, विवृतादधिके कण्ठे यश्शब्दः सोऽर्कसंज्ञश्चेत्यर्थः । एतद्ध्वनिचतुष्टयं

---

१. मञ्जरीकारस्सूत्रं वेदतैजसवद्व्याख्यायान्ते लिखति—

स्वशक्तित इति ल्यब्लोपे पञ्चमी । स्वशक्तिमवलम्ब्येत्यर्थः । अत्रोरोपेक्षया कण्ठस्थानस्य शब्दाधिक्यजनकत्वान्मन्द्रादधिकध्वनिरिति लभ्यते । एवं तारेऽपि । अतः 'सप्त वाचकस्थानानि भवन्ति' ( प्राति० २.११.४ ) 'उपांशुध्वाननिमदो पब्दिमन्मन्द्रमध्यमताराणि' ( प्राति० २.११.५ ) इत्यनेन न विरोध इति ।

२. यावदध्ययनम् अनुवाकरूपो वा प्रश्नरूपो वा यावान् वेदभाग उच्चार्यते पठ्यते तावान् विभज्य पूर्वोक्तैस्तैर्मन्द्रादिभिस्त्रिभिर्ध्वनिभिरुच्चारणीयः । मन्द्रादयस्त्रयो ध्वनयः प्रात-स्सवनमाध्यन्दिनसवनतृतीयसवनबोधका अपि भवन्ति । एकस्मिन् सवने सवनान्तर-ध्वनिं निवारयति तुशब्दः । अनेन प्रतिप्रश्नं ध्वनित्रयमावश्यकमिति ज्ञायते इति सर्व०

३. नादश्वासहकारार्का इति पाठः ।

४. प्रकृतिभूते मन्द्रादिध्वनित्रये इति सर्व०

५. संवृतादधिके कण्ठे हकारः, विवृतादधिके कण्ठे यश्शब्दः सोऽर्कसंज्ञो भवतीति योजना । अधिक इत्यविशेषेण विधानादुभयत्र सम्बध्यते इति सर्व०

वर्णानामकारादीनां प्रकृतिरुपादानकारणमिति विज्ञेयम् । नादप्रकृतयः केचिद्वर्णाः, श्वासप्रकृतयोऽन्ये, हकारप्रकृतयोऽपरे, अर्कप्रकृतय इतरे । यथा–मृत्प्रकृतयो घटशरावादयः, यथा वा तन्तुप्रकृतयश्च पटाः ॥

**अज्घोषा नादतो जाता हचतुर्था हकारजाः ॥ ३६३ ॥**

नादतः-नादात् ध्वनेः अचः घोषवन्तश्चोत्पन्नास्स्युः[१] । हकाराद् ध्वनेर्जाता इति हकारजाः हकारश्च चतुर्थाश्च ॥

**प्रथमाः श्वासतोऽन्येऽर्कादघोषाश्च ततो यमाः ॥ ३६४ ॥**

श्वासतः-श्वासात्प्रथमाः-प्रथमं जाताः, अर्कादध्वनेः अन्ये अघोषास्स्युः । एषामघोषाणां विसर्गसहचरित्वादीष[illegible]रणं स्यादिति मन्तव्यम् । ततश्चतुर्भ्यो ध्वनिभ्यः श्वासार्कनादहकारेभ्यः प्रथमद्वितीयतृतीयचतुर्थवर्णा इव तत्तत्संज्ञत्वात्क्रमाच्चत्वारो यमा जाताः ॥

**कण्ठो वक्त्रादिमध्यान्तं दन्तमूलान्तनासिकम्[२] ॥ ३६५ ॥**

**ताल्वोष्ठमुरः स्थानानि वर्णानां करणान्यधः ॥ ३६६ ॥**

[३]वर्णानामकारादीनां कण्ठादिदशस्थानानि भवन्ति । अधः ओष्ठजिह्वादिमध्यान्तानि करणानि स्युः । क्रियन्त इति करणानि ॥

**उवर्णप्रकृतेरोष्ठ्यौ दीर्घौ स्त औत्परस्य ॥ ३६७ ॥**

उवर्णः प्रकृतिर्यस्य स उवर्णप्रकृतिः ओकार औकारश्चेत्यर्थः । 'ओकारौकारयोश्शेष उकारः परिकीर्तितः' इति शिक्षान्तरेऽप्युक्तत्वात्[४] ओकारस्यौकारो-

---

१. अचो घोषवन्तश्च जाता उत्पन्ना इत्यर्थः । अज्घोषा इत्यत्र घोषशब्दस्य अर्श आदित्वादच् प्रत्ययः इति सर्व०

२. कण्ठवक्त्रादिमध्यान्तदन्तमूलान्तनासिकम् इति पाठः ।

३. वर्णानामकारादीनां कण्ठवक्त्रादि-वक्त्रमध्य-वक्त्रान्त-दन्तमूलदन्तान्त-नासिका-ताल्वोष्ठोरांसि स्थानानि भवन्ति । उक्तेषु स्थानेषु यथायोग्यमधरोत्तरत्वेन भागद्वयं कृत्वाधो भागाः करणानि भवन्ति । किञ्चोत्तरत्र विशेषोक्तावपि अधोभागकरणमेकं विशेषविहितमप्यन्यदेतदिति बोध्यम् । विशेषानुक्तौ अधोभाग एक एव करणमित्येतदर्थमधोग्रहणम् इति सर्व०

४. ओकारस्य औकारस्य चाकारोकारात्मकत्वात् परभूतस्योकारस्योवर्णेति वर्णोत्तरत्वग्रहणात्तस्य ह्रस्वदीर्घप्लुतरूपस्येत्येतत्स्वरपञ्चकस्योष्ठौ दीर्घौ उन्नतौ च भवतः । यथा– 'स्रुचौ प्रोर्णोति, ऊत्यश्याम, पशू३र्न' इति प्रातिशाख्येनैकीभवति ।

तरभागस्य उवर्णेति वर्णोत्तरग्रहणात् तस्य ह्रस्वदीर्घप्लुतरूपस्येत्येतत् स्वरपञ्चकस्य ओष्ठौ दीर्घौ-उन्नतौ भवतः। यथा—'स्रुचौ प्रोर्णोति' 'ऊत्यश्याम' 'पशू ३ न्' इति ॥

अव्यञ्जनस्वराणाश्चादौ कण्ठ इतीरितः[1] ॥ ३९८ ॥

केवलस्वराणां प्रथमतः कण्ठः स्थानमिति स्मृतः। यथा—अ इ उ इत्यादि। केवलेति किम्? 'गावो वै' ॥

ओष्ठताल्ववर्णोवर्णे व्यस्तसंवृतमैत्यपि ॥ ३९९ ॥

[2]अवर्णश्च इवर्णश्च अवर्णोवर्णम्, तस्मिन्। ओष्ठौ च तालुनी च ओष्ठतालु। प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (पा. सू. २. ४. २) इत्येकवद्भावः। एतत्क्रमात् व्यस्तसंवृतं स्यात। अत्र विभज्य विनियोगो विज्ञेयः। अवर्णे उच्चार्यमाणे ओष्ठौ विवृतौ भवताम्, इवर्णे उच्चार्यमाणे तालुनी संवृते स्यातामिति। एवं स्थानम् अधःकरणमिति गृहीत्वा तं वर्णं यथायोग्यमुच्चारयेदित्यर्थः। एतदादिसर्ववर्णानाम् उक्तान्यस्थानानि प्रतिध्वनयो भवन्तीत्यपिशब्दार्थः। यत्र यत्र विशेषविधानान्नासिकोच्यते, तत्र तत्र नासिकास्थानमेव न स्यादित्युक्तम्। ऐत्यपीति। ऐति-ऐकारे कार्ये सान्निध्याल्लब्धमोष्ठतालु व्यस्तसंवृतं स्यात् ॥

औति चोष्ठौ स्त औत्यल्पाधिकावेत्योष्ठतालु च ॥ ४०० ॥

[3]औति-औकारे कार्ये ओष्ठौ व्यस्तसंवृतौ स्तः। व्यस्तसंवृतौ चकारोऽनुकर्षति। अत एवानयोरैकारौकारयोरादौ अकारश्च शेषौ क्रमादिकार उकार

---

१. उदीरित इति पाठः।

२. अत्र मञ्जरीकारेण विशेषोऽभिहितः—'ऐकारे उच्चार्ये सान्निध्याल्लब्धम् ओष्ठतालु व्यस्तसंवृतं स्यात्। अत्र 'अवर्णेनात्युपसंहृतमोष्ठहनु नातिव्यस्तम्' (प्राति० १. २. १२) इति ह्रस्वेऽवर्णे ओष्ठयोः हन्वोश्च ईषन्न्यूनात्युपसंहृतत्वम्। दीर्घप्लुतयोरीषन्न्यूनातिव्यस्तत्वमिति प्रातिशाख्येन विशेषविधानात् तदविरोधेन वाक्यार्थो नेयः। एवम्—'तालौ जिह्वा मध्यम्' (प्राति. १. २. २२) इति।

३. अत्र मञ्जरीकारेण 'अकारार्धमैकारौकारयोरादिः' 'इकारोऽध्यर्धः पूर्वस्य शेषः' 'उकारस्तूत्तरस्य' 'ओष्ठोपसंहार उवर्णे' इत्यादिप्रातिशाख्यसूत्राण्यवलम्ब्य सूत्रमिदं व्याख्यातम्।

इति च प्रातिशाख्येऽप्युच्यते। एवम् औकारान्तसाम्येन 'उवर्ण प्रकृतेरोष्ठौ' इति सम्बन्धेन चोवर्णस्य ओष्ठौ संवृतावेव स्थानमित्युच्यते। तस्मादस्य नाग्रहणशङ्का। ओतीति। ओकारे कार्ये ओष्ठौ अल्पाधिकौ संवृतविवृतौ स्तः। एतीति। एकारे कार्ये ओष्ठताल्वल्पाधिकं स्यात्। सान्निध्यादोष्ठस्य संवृतोक्तत्वादनयोरेकारौकार-योरादावकारः पादमात्र इत्युच्यते। तच्छेषयोरिकारोकारयोर्विवृतत्वमित्युच्यते, उच्चारणवशात्। कालनिर्णयशिक्षायामप्युक्तम्—

'ऐकारौकारयोरादावकारोऽप्यर्धमात्रिकः।
इवर्णोवर्णयोश्शेषौ स्यातामध्यर्धमात्रिकौ' ॥ इति।

अत एव 'एचस्सन्ध्यक्षराणि' इत्युक्तम् ॥

कवर्गादिषु जिह्वादिमध्यान्तोष्ठेन चोपरि ॥ ४०१ ॥

कवर्ग आदिर्येषान्ते कवर्गादयः। तेषूच्चार्यमाणेषु वर्णान् क्रमाज्जिह्वादि-करणैः उपरि–ऊर्ध्वप्रदेशेषु स्पर्शयेदित्यर्थः। अयमर्थः–कवर्ग उच्चार्यमाणे जिह्वामूलेन वर्णान् ऊर्ध्ववक्त्रमूले प्रापयेत्। चवर्गे कार्ये जिह्वामध्येन वर्णान्[1] ऊर्ध्वस्थाने स्पृशेत्। परत्र विशेषविधानात् टवर्गं हित्वा तवर्गे कार्ये जिह्वाग्रेण वर्णान् ऊर्ध्व-दन्तमूलेषु स्पृशेत्[2]। पवर्गे कार्येऽधरोष्ठान्तेन वर्णानुत्तरोष्ठेन स्पृशेत् ॥

टवर्गे वक्त्रमध्ये ळे जिह्वाग्रेणोपरि स्पृशेत् ॥ ४०२ ॥

टवर्गे कार्ये जिह्वाग्रेण वर्णान् वक्त्रविवरोपरिभागे स्पृशेत्। किं कृत्वा? योग्यत्वात् जिह्वाग्रमावेष्ट्य। एवं ळकारे च ॥

मध्यान्ताभ्याश्च तालौ ये रेफे जिह्वाग्रमध्यतः ॥ ४०३ ॥

यकारे कार्ये चकारज्ञापितजिह्वाया मध्यान्ताभ्यां तालौ स्पृशेत्। रेफे कार्ये जिह्वाग्रमध्येनोपरिदन्तपङ्क्तेरुपरिष्टात् बर्स्वस्थाने स्पृशेत्[3] ॥

लकारे दन्तमूलेषु [4]जिह्वाग्रेणोपरि स्पृशेत् ॥ ४०४ ॥

---

१. ऊर्ध्वे स्थाने, ऊर्ध्वं सन्धिना, ऊर्ध्ववक्त्रमध्ये स्पर्शयेदिति च पाठाः।

२. ऊर्ध्वदन्तमूलेषु वक्त्रान्ते स्पर्शयेत् इति पाठः।

३. उपरिष्टादोष्ठ्यस्थाने स्पृशेदिति पाठः।

४. स्पर्शयेत्प्रत्यगेव हि इति पाठः।

लकारे कार्ये जिह्वाग्रेणाभ्यन्तरे उपरि दन्तमूलेषु स्पृशेत्, अवयवसम्बन्धात् । रेफलकारयोः स्थानकरणे ऋवर्णलकारयोरप्युच्येते । केवलयोस्तु कण्ठस्थानञ्च भवत्येव ।

**वे चोष्ठान्तेन दन्तेषु स्पर्शस्थाना य [1]ऊष्मकाः ॥ ४०५ ॥**

वे वकारे कार्येऽधरोष्ठान्तेनोत्तरदन्ताग्रेषु स्पृशेत् । अग्रेष्विति कथं लभ्यते ? स्थानोक्तवचने 'दन्तान्तम्' इत्यतदर्थमेवोक्तत्वात् । स्पर्शस्थाना य ऊष्मका इति । ऊष्माणः स्पर्शस्थाना इति तत्तत्स्थानेषूच्चारणीया भवन्ति । यथा जिह्वामूलीयः कवर्गस्थाने, शकारः चवर्गस्थाने, षकारः टवर्गस्थाने, सकारस्तवर्गस्थाने, उपध्मानीयः पवर्गस्थाने । एवं पञ्चसूष्मसूक्तेषु हकारोऽवशिष्टः ॥

**हकारश्च विसर्गश्च कण्ठस्थानावितीरितौ ॥ ४०६ ॥**

हकारो विसर्ग इत्यनयोः कण्ठः स्थानं स्यात् । कण्ठस्याधोभागः करणमित्युच्यते 'वर्णानां करणान्यध' इति विद्यमानत्वात् । एतयोरेकस्थानत्वात् हकारस्यापि किञ्चिद्वायुसहितोच्चारणमुच्यते[2] ॥

**प्रयत्नश्चोष्मणां व्यस्त इणोऽन्येषामचां भवेत् ॥ ४०७ ॥**

इण इति । इवर्ण उवर्णश्चेत्यर्थः । आभ्यामन्येषां स्वराणामूष्मणाञ्च प्रयत्नो विवृतस्स्यात् । प्रयतनं प्रयत्नः-स्थानकरणसम्बन्धः । ह्रस्वस्य केवलस्याप्यकारस्य किञ्चिद्विवृतत्वमिति[3] चकारार्थः ॥

**केवलानाञ्च सर्वेषामत्यल्पस्पृष्टता स्मृता ॥ ४०८ ॥**

सर्वेषामवर्णवर्णादीनाम् अव्यञ्जनानां स्वराणाञ्च चकाराकृष्टप्रयत्नस्याल्पतरस्पृष्टत्वं स्यात् ॥

---

१. 'यमौष्मिकाः' इति पाठं स्वीकृत्य मञ्जरीकारो व्याचख्यौ । 'ऊष्मकाः' इति पाठे 'य' कारो 'नामैकदेशे नामग्रहणम्' इति न्यायेन यमानां बोधक इति वेदतैजसकारस्याशयः ।

२. हकारस्यापि क्वचिद्वायुसहितोच्चारणमुच्यत इति क्वचित्पाठः ।

३. 'स्वराणामूष्मणाञ्चैव प्रयत्नो विवृतस्स्मृतः ।
संवृतत्वमकारस्य विशेषोऽयं विधीयते' ॥
इति शिक्षान्तरसमुच्चायकश्चकारः ।

**स्पृष्टत्वं स्पर्शसंज्ञानां परेषां किञ्चिदुच्यते ॥ ४०९ ॥**

**स्पर्शसंज्ञानाम्—ककारादिमकारान्तानां स्पर्शानां स्पृष्टत्वं स्थानकरणयोस्सम्यक् स्पर्शनं भवति। परेषामिति। स्पर्शेभ्यः परेषाम् अन्तस्थानां हकारान्योष्मणाञ्च ईषत्स्पृष्टता स्यात्। ननूष्मणां स्पर्शस्थानकरणे भवत इत्युक्ते किञ्चित्स्पर्शनमिति कथमुच्यते ? करणस्य [1]विवृतत्वादनयोर्भेदः ॥**

**अतिस्पृष्टो द्वितीयेषु चतुर्थेषु च तत्समः ॥ ४१० ॥**

**द्वितीयेषु वर्णेषु प्रयत्नः स्पृष्टतरस्स्यात्। चतुर्थेषु वर्णेषु द्वितीयवर्णप्रयत्नसमः प्रयत्नस्स्यात्। समशब्देन किञ्चिन्न्यूनत्वं प्रतीयते। तस्माच्चतुर्थानामपि किञ्चिद्वायुसहितोच्चारणं स्यात्। हकारविसर्गयोः स्थानकरणयोः स्पृष्टत्वं न स्यादेव ॥**

**[2]हकारं तत्र नासिक्यमुत्तमोत्तरमेव च ॥ ४११ ॥**

**[3]उत्तमपरं हकारं नासिक्यम्—नासिकायामुद्भवं नासिक्यम् तं नासिक्यं विदुः। यथा—'गृह्णाति' 'अन्हां केतुः' 'जिह्मम्' ॥**

**अन्तस्थापरमित्यत्र [4]उरस्यश्च विदुर्बुधाः ॥ ४१२ ॥**

---

१. विवृतत्वादिति ब्रूम इति पाठः।

२. हकारं तन्तु नासिक्यम् इति पाठः।

३. च शब्देनोत्तरवाक्ये गृहीतमौरसपदमुत्कृष्यते। तदयमर्थः—उत्तमोत्तरं हकारं नासिक्यमौरसञ्च बुधा विदुरित्यन्वय इति व्याख्यायोदाहरणानि तान्येव मञ्जरीकारो ददाति।

४. औरसञ्चेति पाठः। अत्र मञ्जरीकारो लिखति—अन्तस्थापरन्तु हकारमुरोमात्रस्थानं विदुः। तथा च शिक्षा—

'हकारमौरसं विद्यादन्तस्थासु परासु च।
उत्तमेषु परेष्वेवं नासिकत्वमिहाधिकम्' ॥ इति ॥

किञ्च मपरेऽन्तस्थापरे च हकारे शिक्षान्तरेऽपि विशेषः। यथा—

'नासाभ्यां नोत्सृजेद्वायुमत्यन्तं हमसङ्गमे।
न वदेदुरसात्यन्तमन्तस्थाभिश्च सङ्गमे' ॥ इति ॥

यथा—'वित्ताह्येनान्' 'उत्सन्दुदुह्रे' 'ह्लादयते ज्वलतः' 'जिह्वासन्धानम्' 'जिह्मं तस्य'। एवं परमिति किम् ? 'जुहोति' अत्र कण्ठमात्रम्।

अन्तस्थापरम् हकारमौरसमाहुः। यथा—'वित्ताह्येनान्' 'उत्सं दुह्लते' 'ह्लादयते' 'तान् ह्वयति'। तत्परः किम्? 'जुहोति' कण्ठ्यत्वमत्र ॥

विज्ञेया नित्यनासिक्या यमानुस्वारपञ्चमाः ॥ ४१३ ॥

यमाश्चानुस्वारश्च पञ्चमाश्च नित्यनासिक्याः नासिक्यस्वभावा भवन्तीति ज्ञातव्याः, न तु निमित्तत इत्यर्थः। तत्साहचर्येण नित्यशब्देन चानुस्वारस्य वर्णस्य सर्वस्याप्यनुनासिक्यधर्म उच्यते। अन्यथा—'तदाद्यर्धगकारस्स्यात्तच्छेषमनुनासिकम्' इति शिक्षान्तरवचनेन तु 'स ꣳ शितम्' इत्यत्रानुस्वारस्य द्विमात्रकालस्योक्तत्वात्तत्रगकारस्यैकमात्रः, अनुनासिकस्यैकमात्र इति कालविशेषाश्रयत्वादत्र वर्णद्वयं स्यात् ॥

अजन्तस्था हकाराश्च निमित्तेन तु कीर्तिताः ॥ ४१४ ॥

अच्—स्वरः, अन्तस्थाः, हकारश्चैते वर्णा निमित्तेनैव नासिक्याः। सानुनासिका इत्यर्थः। यथा—सुश्लाकाँ४' 'सय्यँत्ताः' 'त्रोल्लोँकान्' 'सँव्वतः' 'अह्लाँम्' निमित्तेनेति किम्?[1] 'यर्.हि' ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे स्थानकरणप्रयत्नप्रकरणम् ॥२४॥



१. अत्राजन्तस्था हकाराणां पूर्वोक्तमेव स्थानम्, नासिकास्थानन्त्वधिकमिति मञ्जरीकारः।

## प्लुतप्रकरणम् ॥ २५ ॥

**अकारान्तः प्लुतो यश्चेदनुनासिक उच्यते ॥ ४१५ ॥**

अन्तः पदान्तोऽकारः प्लुतो यदि सोऽनुनासिकस्स्यात् ॥

**अमत्रध्वनितुल्यश्च रङ्गसंज्ञ इतीर्यते ॥ ४१६ ॥**

[1]कांस्यध्वनिना समो रङ्गसंज्ञ इत्युच्यते ॥

---

१. कांस्यध्वनिसमत्वे रङ्गस्य प्रमाणतया शिक्षाश्लोकाः मञ्जरीकारेणोदाहृताः—

'रङ्गप्लुते व्याघ्रशब्दः पूर्वभागे विधीयते ।
मात्राद्वयन्तु तत्रैव तथा निरनुनासिकम् ॥
मूर्धस्थाने तृतीयांशः कांस्यध्वनिसमस्तथा ।
कम्पः श्लिष्टस्तथाचैव मात्रिकासहितस्तथा ॥
चरमांशस्तु नासिक्ये तथैव च बिलद्वये ।
निस्सृतांशस्तु तत्रैव मात्रिकासहितस्तथा ॥
एवं रङ्गप्लुताः प्रोक्ताश्चतुर्मात्रास्समीरिताः ।
प्लुतोऽवर्णः पदान्तस्थो नासिक्यो रङ्गसंज्ञिकः ॥
कांस्यध्वनिसमं रङ्गं हृदयादुत्थितं वदेत् ।
पञ्चरङ्गाः प्लुता दीर्घाश्चत्वारस्तैत्तिरीयके ॥
श्लोकाँ सुमङ्गलाँ यद्भ्राँ उपहूताँ ममाँ प्लुताः ।
दीर्घास्ताँ इमि देवाँ उ स्वाँ अहम्ममृवाँ अव ॥
तेषामन्तेषु नासिक्यं रङ्गसंज्ञमितीर्यते ।
यथा सौराष्ट्रिका नारी तक्राँ इत्यभिभाषते ॥
एवं रङ्गाः प्रयोक्तव्या खेचरा इव खेदया ।
रङ्गवर्णं प्रयुञ्जीयान्नो ग्रसेत्पूर्वमक्षरम् ॥
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ।
हृदये मात्रिको मूर्ध्नि अर्धमात्रस्ततः परम् ॥
नासिकायां तथार्धञ्च रङ्गस्यैवं द्विमात्रता ।
हृदयादुत्तरे तिष्ठन् कांस्येन सममुच्चरन् ॥

श्लोकाँ गलाँ ममाँ हूताँ यद्ध्राँ एवेति च प्लुताः ॥ ४१७ ॥

सुश्लोक-सुमङ्गल-मम-उपहूत-यद्ध्र, एषु पदेष्वन्त्यस्वराः पञ्च रङ्गाः प्लुतास्स्युरन्तोदात्तास्सन्तः। यथा—'सुश्लोकाँ ४, सुमङ्गलाँ ४, यशो ममाँ ४, 'उपहूताँ ४' 'यद्ध्राँ ४'। उदात्ता इति किम् ? 'तनु वो मम' 'उपहूताधेनुः' ॥

दीर्घा देवाँ उ ताँ इम्यमृवाँ अ स्वाँ अहं कठे ॥ ४१८ ॥

एषु चत्वारो दीर्घास्स्वरा आरण्यके काठके रङ्गसंज्ञास्स्युः। यथा—'देवाँ २ उपप्रैस्सप्तभिः'। उपेति किम् ? 'ब्रह्मचर्येण तपसैव देवाः'। 'निधन्वेवताँ २ इमि'। इमीति किम् ? 'दधन्वेवता इहि'। 'ममृवाँ २ अवाहः' 'स्वाँ अहम्' 'पुनर्म्मनः'। काठक इति किम् ? 'देवानुपगा इदमहम्' 'स्वाँ॰अहम् दृशानः'। एवम्—

'पञ्चरङ्गाः प्लुता दीर्घाश्चत्वारस्तैत्तिरीयके।
प्रोक्तास्तस्माद्दीर्घरङ्गस्थाने केवलानुस्वारः ॥ इति। शिक्षान्तरम्-
ऋघ्नशान्तिश्शासरूपोद्ध्र्वेऽस्योपप्रैदहं पुनः।
इम्यवाहाः परे न स्यादनुस्वारोऽत्र केवलः' ॥ इति न प्रसरति ॥

पत्नीवाश्चेतव्याः कार्याश्चित्यारभ्याः प ता उ च ॥ ४१९ ॥
होतव्यां सत्थराजांश्च सृज्यां प्राश्यांश्च मीयताम् ॥ ४२० ॥
कर्तव्या सहस्रामद्राक्सोमाः क्रामाश्च हा इति ॥ ४२१ ॥
ब्रह्मान् त्वं द्विपदां होषां स्थेया अग्ना इवत्यगान् ॥ ४२२ ॥

---

मार्दवेन द्विमात्रञ्च जिघन्वाँ इति दर्शनम्।
मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ तथा ॥
सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम्।
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ॥
सम्यग्वर्णप्रयोगेन ब्रह्मलोके महीयते।
रङ्गे स्वरे च मात्रैका प्रत्येकं रङ्गदीर्घयोः ॥
रङ्गस्वरे च द्वे मात्रे तथा तत्प्लुतरङ्गयोः।
रङ्गप्लुतश्चतुर्मात्र इत्युक्तो याजुषे मते ॥
स्वाराः कम्पाश्च रङ्गाश्च ये यत्कालास्स्वभावतः।
वर्धन्ते प्रोच्यमानास्ते क्षिप्रयत्नेऽपि वक्तरि ॥ इति।

हावरत्नीश्छिनत्ती च जुहवानी च गच्छती ॥ ४२३ ॥

एती लाजीञ्छाचीन् सर्वे त्वन्तोदात्ता ≍ प्लुता इमे । ४२४ ॥

एते सर्वे श्लोकादि शाचीनन्ता अन्तोदात्ताः प्लुता इति विज्ञेयाः। यथा—'पत्नीवा ३ स्सजूः' 'न्यङ्ङग्निश्चेतव्या ३ः' 'वायव्यः कार्या ३ः' 'न विचित्या ३ इति' 'नान्वारभ्या ३ इति'। यज्ञवत्ताविति। 'न होतव्या ३ मिति' 'सत्यराजा ३ न्' 'उत्सृज्या ३ न्न' 'प्राश्या ३ न्न प्राश्या ३ मिति' 'प्रचातुर्मास्ययाजी मीयता ३ न्न प्रमीयता ३ मिति' 'द्वादशारत्नीरशना कर्तव्या ३ त्रयोदश' 'सहस्रा ३ मिति'। सेति ह्रस्वेन किम्? 'साहस्रञ्चिन्वीत' 'अद्रा ३ गित्याह' 'सोमा ३ न' 'इयद्द्वादश विक्रमा ३ इति' 'आत्मन् हा ३ इत्याह्वयत्' 'ब्रह्मा ३ न्त्वᳪराजन्' 'द्विपदा ३ इति' 'माहौषा ३ मिति' 'नोपस्थेया ३ इति' '[illegible] ३ इ' 'भदत्यगा ३ नग्नीत्' 'हा ३ वुहा ३ वुहा ३ वु' 'त्रयोदशारत्नी ३ रिति' 'सा न छिनत्ती ३ इति' 'जुहवानी ३ सा' 'कश्चन गच्छती ३' 'सहस्रतम्यन्वेती ३' 'लाजी ३ ञ्छाची ३ न्'। अन्तोदात्ता इति किम्? 'पत्नीव इत्याह'। 'न दिवय-ग्निश्चेतव्य इति' 'उत्सृज्यमित्याहुः' 'सहस्रᳪसम्पाद्य' 'ब्रह्मन् त्वमसि' 'द्वादशा-रत्नी रशना भवति' 'क इमच्छैतीति' इत्यादौ मा भूत्। एवमादिविशेषणेन किम? मन्दधियां सम्यक प्लुतस्थानदर्शनमस्त्विति ॥

पत्या इति गृहा इ त्वी उत्ताना इत्यवेरपाः ॥ ४२५ ॥

सोमपा असोमपा द्वावश्नुता उवतिष्ठिपाय् ॥ ४२६ ॥

सावित्रान्न वेत्थाद्वौ व्यमग्निहोत्रान्न चेति च ।। ४२७ ॥

अवेत्योवभृथा ना द्वौ रम्यः पशूश्शृतं हवीः ॥ ४२८ ॥

[1]स्थेयोऽग्नीर्धस्विदासीद्द्वावस्तु ही इव विन्दती॥ ४२९ ॥

एते प्लुता विशेषेण विज्ञेयाः। यथा–'प्राजापत्या३ इत्याहुः'। इतीति किम्? 'ते प्राजापत्या आग्नेयौ' 'गृहा ३ इ न'। इ इति किम्? 'गृहा भवन्तु'। 'त्वी३इत्य-ब्रवीत्'। पदोक्ते पदमिति न्यायात् 'रभीयाᳪसमिव कृत्वी' इत्यत्र प्लुतत्वं न भवति। 'उत्ताना३इति वयसाम्'। इतीति किम्? 'उत्तान आङ्गिरसः'। ननु 'उत्ताना३ः' इत्यत्र मध्यमस्वरस्य प्लुतत्वं किं न स्यात्? उच्यते–सर्वेषां पदाना-

---

१. स्थेयोग्नीश्च इति पाठः।

मन्त्यस्यैव प्लुतत्वदर्शनात् । तर्हि 'गृहा३इ' 'यज्ञपता३उ' इत्यादावप्यन्त्यस्वरस्य किं न स्यात् ? सुतरां परिहारः–अवर्णप्लुतस्वरमिति । 'अवेरपा३ इत्याह' । अवेरिति किम् ? 'केनाप इति' । 'सोमपा ३ असोमपा ३' इति निगदव्याख्याताः । द्वाविति किम् ? 'सोमपा बाहुशर्धी' । 'कश्चित्थसमश्नुता३उ' । उ इति किम् ? 'वाममश्नुतः पुमान्' । 'यज्ञं प्रत्यतिष्ठिपा३यज्ञपता३उ' । 'वेत्थ सावित्रा३न्न वेत्था३इति' । द्वाविति किम् ? 'सावित्रञ्जुहोति' । 'होतव्यमग्निहोत्रा३न्न होतव्यामिति' । व्यमिति किम् ? 'अग्निहोत्रञ्जुहोति' । न इति किम् ? पदद्वयमेकत्र वर्तते, तत्पूर्वयोः प्लुतत्वमिति ग्रहणेऽपि तद्दाढर्यायायमारम्भ इति केचित् । 'अवेत्योवभृथा३ना३इति' । द्वाविति किम् ? 'अवभृथोयानि' 'आङ्गिरसायान इत्याह' 'मित्रन्न ईम्' । 'अन्वारभ्यः पशू३र्न' । रभ्य इति किम् ? 'अग्ने पशुर्नयवसे' । 'शृतँहवी३शशमितरिति' । शृतमिति किम् ? 'अथ तद्धविरिति' । 'उपस्थेयोऽग्नी३र्न' । स्थेय इति किम् ? 'अग्निर्नाभिमृशे' । 'अधस्विदासी३दुपरिस्विदासी३त्' । द्वाविति किम् ? 'किंस्विदासीत्' । 'अस्तुही३इत्यब्रूताम्' । अस्त्विति किम् ? किम ? 'न हीमे यजुषा' । इ इति किम् ? 'स्तुहि श्रुतम्' इति केचित् । 'नत्वाभीरिव विन्दती३' । इवेति किम् ? 'याभ्य एवैनं विन्दति' ॥

नकं त्रिपञ्चाशदूर्ध्वं चतुर्णां दशमाः प्लुताः ॥ ४३० ॥

न कञ्चनेत्यनुवाके त्रिपञ्चाद्वाक्येभ्य ऊर्ध्वं परतः चतुर्णां वाक्यानां प्रदेशे दशमस्वराः प्लुता इति विज्ञेयाः । यथा–'अहमस्मि प्रथमजा ऋता३स्य' 'पूर्वं देवेभ्यो अमृतस्य ना३भायि' 'यो मा ददाति स इदेवमा३वाः' 'अहमन्नमन्नमदन्तमा३द्मि' । अत्र किम ? 'तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्' 'अहं विश्वं भुवनमभ्यभवाम्' ॥

[1]नवदशाज्झलो ळश्चाप्यनुस्वारौ विसर्गजौ ॥ ४३१ ॥
चतुर्भक्तियमाश्चेति वर्णाष्षट्षष्टिरीरिताः ॥ ४३२ ॥

नव दश अजिति स्वराः । तेषामुक्तान्येवोदाहरणानि । शेषवर्णान् तृतीयग्रन्थ उदाहरन्ति । यथा–'देवाँ२उपप्रैत्' इति दीर्घरङ्गः । 'सुश्लोकाँ४' इति प्लुतरङ्गः । 'पङ्क्ति पुनन्ति ओम्' इति प्रणववर्णः । व्यञ्जनशेषस्यापि, 'एतावा

१. नवदशाचो हलश्च द्व्यनुस्वारौ विसर्गळौ इति पाठः ।

अपामनूज्झावर्यः' । ळकारः स्वाध्यायब्राह्मणे 'देवहेळनम्' 'मेळितो मोग्धि' इति । पितृमेधे—'नळं प्लवम्' इति । नारायणे—'एकनीळम्' इति च । द्वावनुस्वारौ—तं घ्नन्तीति केवलः । 'सꣳशितमित्यत्र गकारसंयुतः । विसर्गस्मरणात् स च तस्माज्जायेते इति विसर्गजौ, तौ च जिह्वामूलीयोपध्मानीयौ । यथा—'मनः क्षेमे' 'य ᳲ कामयेत' 'य ᳲ पाप्मना' । चतस्रो भक्तयः चत्वारो यमाश्चेति । भक्तयश्च यमाश्च भक्तियमाः । चत्वारश्च ते भक्तियमाश्च चतुर्भक्तियमाः । अनेनैव क्रमेण याजुर्वैदिकवर्णानां षट्षष्टिसंख्या तत्तल्लक्षणादुदाहरणाच्च विस्पष्टं ज्ञातव्या ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे प्लुतप्रकरणम् ॥ २५ ॥

## ओष्ठ्यप्रकरणम् ॥ २६ ॥

[1]मध्ये वकारेऽनुस्वारे विरामे संयुते स्थिते ॥ ४३३ ॥
अप्यौकारे परे व्यक्तौ द्विरोष्ठ्याविति निश्चितौ ॥ ४३४ ॥

ययोरुन्नतयोरोष्ठ्यस्वरयोर्मध्ये वकारादिके स्थिते सति ओष्ठ्यस्वरात्परत्रौकारे केवलौष्ठ्यस्वरे वा स्थिते तत्र द्विरौष्ठ्यौ कर्तव्यौ । द्वितीयोष्ठ्यस्य पुनः प्रयत्नः कर्तव्य इत्यर्थः । यथा—'बाहुवोर्बलम्' 'योꣳशुं गृह्णाति' 'देवतानामृच्छतु' 'योमैतस्यै' 'मन्युर्होता वरुणः' 'मेदसा स्रुचौ प्रोर्णोति' 'अथो ओषधीषु' । एतत्स्थलषट्कादितरत्र बहूनामपि सकृदोष्ठ्यमिति विज्ञेयम् । यथा—'कुसुकबिन्दः' इत्यादि ॥

संयुतश्चोष्ठ्यमध्ये हो विसर्गादुत्तरश्च पः ॥ ४३५ ॥
तालुभ्यां वायुमापूर्य माण्डूकोष्ठ्यः परस्स्मृतः ॥ ४३६ ॥

ओष्ठ्ययोस्स्वरयोर्मध्ये हकारो व्यञ्जनसंयुक्तश्चेत्तालुभ्यां पवनमापूर्य द्वितीय ओष्ठ्यः कर्तव्यः । अत एव स माण्डूकोष्ठ्य इत्युक्तः । तथौष्ठ्ययोर्मध्ये

---

१. वे वाप्यनुस्वारे, वे चाप्यनुस्वारे इति पाठः ।

विसर्गात्परतः पकारो यदि वर्तते च । यथा—'समग्रासो जुह्वो जातवेदः' । संयुत इति किम् ? 'जुहुयात्' 'शतायुः पुरुषः' । विसर्गादिति किम् ? 'उत्पूतशुष्मम्' 'सुपूर्णा पुनः' । ओष्ठ्ययोर्मध्य इति किम्? 'अह्रुतमसि' 'पुंसः पुत्रान्' ॥

स्पर्शयोस्संयुते[1] यत्र पाठे चावसरे यदि ॥ ४३७ ॥

आदेरीषच्छ्रुतिर्ज्ञेया विरामे मस्य चैव हि ॥ ४३८ ॥

पाठे अवसरे-अध्ययनकाले यत्र प्रदेशे स्पर्शयोरन्योन्यं संयुते-संयोगे सति तयोरादेः स्पर्शस्य ईषच्छ्रुतिः—किञ्चिच्छ्रवणं सम्भवेत् । तथावसाने मकारस्य च । यथा—'युङ्क्ते' 'याच्ञा' 'यज्ञस्य' 'आट्णारः' 'तमुत्करे' 'आप्नोति' 'सुमतीनाम्' । अत्र किम् ? 'क्षत्रं विश्वतः'[2] ॥

विरामे वर्ग्यपूर्वस्य प्रयत्नः क्रियते पृथक् ॥ ४३९ ॥

विरामे-अवसाने, वर्गे भवो वर्ग्यः, तस्मात्पूर्वः तस्य सवर्गीयस्य वर्णस्य पृथक्प्रयत्नः क्रियते, तथा पूर्ववर्णप्रयत्नस्यायोग्यत्वात्[3] । यथा—'रुक्काम इति रुक्० कामः' 'तत्' 'ते' 'अनुष्टुबित्यनु० स्तुब् प्राणानाम्' 'तं प्रत्नथा' । अवसान इति किम् ? 'रुक्कामः' [4]'तस्मा देवाः' ॥

[5]ओमः पवर्ग ऊर्ध्वे च न प्रयत्नः पृथक्तथा ॥ ४४० ॥

अवसाने ओङ्कारस्य पवर्गे परे सति तत्र मकारस्य पृथक्प्रयत्नो नेष्यते । यथा—'ओम् पूर्णापश्चात्' । ओम इति किम् ? 'पशुं पशुपते ते' ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये
व्यासशिक्षाविवरणे ओष्ठ्यप्रकरणम् ॥ २६ ॥

---

१. संयुतिर्यत्र पाठस्यावसरे इति पाठः ।

२. क्षत्रं विश्वतः, अत्र गार्ग्यगोपालयज्वना वैदिकाभरणव्याख्याने 'सवर्णासवर्गीयपरः' ( प्राति. २.२.२३.) इत्यस्य विषयभूतस्यैव स्पर्शस्येषच्छ्रुतिरिति व्याख्यातमिति सर्व०

३. विरामेण बाधनादिति सर्व०

४. अविरामे विद्यमानस्य वर्ग्यपूर्वस्य पृथक्प्रयत्नो न कर्तव्य इत्येतदर्थोऽयमारम्भ इति सर्व०

५. 'विरामे वर्ग्यपूर्वस्य' इति पृथक्प्रयत्ने प्राप्ते तन्निषिध्यते । विरामे विद्यमानस्य ओमो मकारस्य पवर्गे परे पृथक्प्रयत्नो नेष्यते । यथा—ओं पूर्णापश्चात्' 'ओं पाकयज्ञम्' । ओम इति किम् ? 'पशुं पशुपत इति पशु० पते' । प्रणवान्ते पवर्गोर्ध्व इति विरामप्राप्तिः इति सर्व०

## कालनिर्णयप्रकरणम् ।। २७ ।।

**चाषोक्त एकमात्रस्स्याद्वायसेन द्विमात्रिकः ।। ४४१ ।।**

**मयूरेण त्रिमात्रश्च जानीयात्काललक्षणम् ।। ४४२ ।।**

चाषो वन्यः काकः । तेनोक्तशब्द एकमात्रस्स्यात् । वायसेन ग्राम्येण काकेनोक्तो द्विमात्रः, मयूरेण शिखिनोक्तश्शब्दस्त्रिमात्रः । एतत्क्रमान्मात्रादिकालनिर्णयः प्रत्येतव्यः ।।

**कालोऽतिसूक्ष्मकोऽणुः स्यान्मात्रार्द्धं व्यक्तमात्रिकम् ।। ४४३ ।।**

अल्पतरो विदिताविदितयोर्मध्यमप्रकारः कालोऽणुः पादः मात्रा पादमात्रः चतुर्थभागस्स्यात् । यथा—'यस्ते' । अत्र सकारस्याणुः । व्यक्तमात्रः कालो नकुलशब्दकालोऽर्द्धमात्रस्स्यात्, यथा—'ग्राव्णः' । अत्र वकारस्यार्धमात्राकालः[1] ।।

**अङ्गुलिस्फोटनं[2] यावान् तावान् कालस्तु मात्रिकः । ४४४ ।।**

[3]यावानङ्गुलिस्फोटनकालो निमेषकालस्तावान् मात्राकाल इति विज्ञेयम् । 'अनदत' । एवं कालपरिमाणं ज्ञातव्यम् ।।

**[4]हल्युक्तं हलुत्तरं तदणुमात्रं प्रकीर्तितम् ।। ४४५ ।।**

व्यञ्जनपरम्-व्यञ्जनयुक्तं व्यञ्जनं पादमात्रं प्रयुज्यते । यथा—'विश्वफ्स्न्या' । हल्युक्तमिति किम् ? 'यत्, तत् न' ।।

---

१. मञ्जरीकारस्सूत्रमिदं वेदतैजसवद्व्याख्याय शिक्षावचनं प्रदर्शयति—तथा च शिक्षा—'चतुर्भिरणुभिर्मात्रा परिमाणमिति स्मृतम्' इति, शिक्षा चैवमाह—'चाषो रौत्येकमात्रं हि द्विमात्रं वायसोऽब्रवीत् । शिखी रौति त्रिमात्रन्तु नकुलस्त्वर्धमात्रिकम्' इति ।

२. स्पर्शनमिति पाठान्तरम् ।

३. चाषरुतकालस्य सुखेन निर्णेतुमशक्यत्वान्मन्दधियामप्याशु अवबोधनार्थमयमारम्भ इति मञ्जरीकारः ।

४. हलुत्तरं हले वैतत् इति पाठः

विरामे वर्णयोर्मध्ये ह्यणुकालोऽप्यसंयुते[1] ॥ ४४६ ॥

संयोगव्यतिरिक्तवर्णयोः प्रत्येकभूतयोर्मध्ये पादमात्रो विरामः, तूष्णींभूतः कालस्स्यात् । यथा 'यो वै पवमानानाम्' 'एतान् होमान्' । असंयुत इति किम् ? 'साक्षात्क्षुधम्' ॥

हलो भक्तिर्विसर्गोऽन्तो ह्रस्वान्नो यवहोत्परः ॥ ४४७ ।

स्पर्शोद्ध्वो वोऽर्धमात्रास्तेऽवसाने लस्त्रिपादता ॥ ४४८ ॥

हलो व्यञ्जनानि, स्वरभक्तिः, विसर्गश्च ह्रस्वात्परः पदान्तो यवहपरो नकारश्च, स्पर्शपरो वकारश्चैते वर्णा अर्धमात्राकालास्स्युः । यथा—'वाक्' 'ऋताषाट्' 'यत्' 'अनुष्टुप्' 'बर्सम्' 'शतवल्शम्' 'आवः क्षेमे' 'ते देवा अब्रुवन् यो नः' 'ओमन्वती' 'उशन् हवै' । अन्त इति किम् ? 'न्यन्ये' 'अन्वह' । तत्परः किम् ? 'एवास्मिन् रेतः' 'विभूदाव्न्ने' । स्पर्शपरः किम् ? 'वायव्यम्' । व्यञ्जनत्वाविशेषात् पूर्वतरवचनेनाणुत्वे प्राप्ते स्वरभक्त्यादीनां पुनर्ग्रहणमर्धमात्राकालसं[illegible]र्थमिति । तर्हि विसर्गस्य संयोगाभावादर्धमात्रत्वेऽपि कथं पुनर्गृह्यते ? [2]पाणिनीयेऽन्तः [illegible] ब्रूमः । अवसान इति । अत्र ल इति षष्ठ्येकवचनम् । अवसाने लः—लकारस्य त्र्यणुत्वं स्यात् । यथा—'वाल्' इति । अवसान इति किम् ? 'वालिति' ॥

विसर्गान्तेऽर्धमात्रस्स्याद्विरामः क्षपरेऽपि[3] च ॥ ४४९ ॥

विसर्गान्ते विरामोऽर्धमात्रस्स्यात् क्षपरे सति । यथा—'आवः क्षेमे' 'मनः क्षेमे' । क्षपर इति किम् ? 'य꣡कामयेत' ॥

---

१. असंयुत इत्युक्त्या संयुतव्यतिरिक्तयोर्व्यञ्जनयोरेव ग्रहणे न्याय्ये 'यो वै पवमानानाम्' इत्यज्झलोर्मध्यः कथं विषयः स्यात्, उच्यते—व्यञ्जनयोर्मध्य एव विरामाभिप्राये शिक्षाकारो 'विरामो वर्णयोः' इति न ब्रूयात् । किन्तु 'विरामस्य हलोर्मध्य' इत्येव ब्रूयात् । अतो वर्णशब्दस्वारस्यादेवासंयुत इति प्रसज्यप्रतिषेध इत्यनुसन्धेयमिति सर्वं

२. 'हयवरट्' सूत्रमहाभाष्ये—'अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यानम्' इत्युक्तत्वात् ।

३. सतीति पाठः ।

संयुतोद्ध्वे [1]च पूर्वत्र द्विरोष्ठ्येऽप्यौवयोस्तथा । ४५० ॥

संयोगे परे पूर्वश्च विरामोऽर्धमात्रस्स्यात् । यथा 'तद्रुद्रस्य' 'अङ्क्तौ न्यङ्क्तौ' 'तस्मिन्ह्यात्मानम' । असंयुतात्परो विरामोऽर्धमात्रः । द्विरोष्ठ्य इति ।[2] द्विरोष्ठ्ये यद्यौकारवकारयोरधश्चार्धमात्र इति । अयमर्थः—अनयोः पूर्वत्रौष्ठ्यस्वरे स्थिते सति तन्मध्ये ओष्ठ्यवर्णसव्यञ्जनौकारयोर्मध्ये विरामश्चौष्ठ्यवर्णोत्तरसहितवकार-योर्मध्ये विरामश्चेति । यथा—'तनुवौ' 'आबभूवुः' । अत्र किम् ? 'धावति तौ' 'अच्छावोचः' । ननु क्षस्य संयुतत्वात्पूर्वेणैव सिद्धत्वादनारम्भोऽस्तु, आरभ्यमाणे तु पुनरुक्ततया गौरवं भवेत् । मैवम्; आरब्धमेवैतत् । कुतः ? विसर्गक्षकारयोर्मध्ये विरामस्यार्धमात्राधिककालस्य स्फुरितत्वादिति ब्रूमः ॥

पिपीलिका दीर्घसमे च मध्यमा सवर्णता पाकवती पदैक्ये ॥ ४५१ ॥

दृष्टाचिवत्सानुसृतिस्त्वसाम्येऽप्यधोऽणुमुख्यास्तु विरामकालाः ॥ ४५२ ॥

दीर्घयोस्समः दीर्घसमम् । सवर्णदीर्घावित्यर्थः । तत्र दृष्टा अच्परा विवृत्तिः पिपीलिकासंज्ञा स्यात् । अस्याः पूर्वो विरामोऽणुस्स्यात् । यथा—'वा आह्रिय-माणायाम्' 'अमुष्मा आहवनीयः' 'मनुष्या आञ्जते' 'ते एनमभि' 'पूर्ण एवैनम्' 'अथो ओषधीषु' । समदीर्घयोः किम् ? 'वा ऐन्द्रवायव' । अत्र संहितायां सवर्णत्वाभावात् । मध्यमेति । द्वयोरचोस्सवर्णत्वञ्चेत् तत्र व्यक्तिर्मध्यमा स्यात् । अस्याः पूर्वो विरामोऽर्धमात्रस्स्यात् । यथा—'परियात अर्य' 'य आत्मानम्' 'यो वा अपात्मानम्' 'अस्तु ही ३ इत्यब्रूताम्' 'चक्षुषी इति' । पूर्वं पूर्वमिति न्यायादेवं संभवति । 'बाहू उपस्तुत्यम्' । सवर्णयोरिति किम् ? 'ते अस्मिञ्जवम्' 'उग्रं वचो अपावधीम्' । पाकवतीति । पदैक्ये-एकोच्चारणपदे असवर्णा व्यक्तिः पाकवती स्यात् । अस्याः पूर्वो विरामः पादोनमात्रस्स्यात् । यथा—'प्र उगम्' 'उक्थ उक्थे' 'पुर एता' । एकोच्चारणपद इति किम् ? 'द्वे इति वाव' । 'प्रजा इति

---

१. तु इति पाठः ।

२. द्विरोष्ठ्यमध्ये संयोगे सति 'संयुतोदूर्ध्वे' इत्यर्धमात्रिको विरामस्सिद्धः । तत्र द्विरोष्ठ्य मध्ये वकारमात्रसद्भावे तथोत्तरोष्ठ्ये औकारे ततः पूर्वमेकव्यञ्जने वा स्थिते सति तत्र च संयोगाभावादप्राप्तोऽर्धमात्रिकविरामः द्विरोष्ठ्योऽप्यौवयोः' इत्यनेन बाध्यते । तदयमर्थः-द्विरोष्ठ्ये औकारवकारसद्भावे संयोगाभावेऽपि अर्धमात्रिको विरामस्स्यात् । शिष्टं वेदतैजसवत् ।

प्र० जाः' 'सुश्लोकाँ ४ इति सु० श्लोकाँ४' 'देवा इति देवाः' इत्यादावपि पाकवती-संज्ञा प्रापणार्थमिति । पूर्वं पूर्वमिति न्यायात् 'अमी इति' इत्यादावेतद्व्यक्तिर्न[1] पठ्यते । वत्सानुसृतिरिति । उभयोरसवर्णत्वे सति सवर्णदीर्घाभ्यामितरा व्यक्ति-र्वत्सानुसृतिरित्यभिधीयते । अस्याः पूर्वो विरामो मात्रिकस्स्यात् । यथा—'लोक इन्द्रः' 'त एनं भिषज्यन्ति' । 'व्यक्तिरजेव ह्रस्वा चेत्तथा वत्सानुसारिणी' इति केचित् । यथा—'ता उप' 'अग्नाइ इत्याह' 'ते अग्रे' 'वचो अप' आभ्यश्चतसृभ्यो व्यक्तिभ्योऽधः विरामा अण्वादयस्स्युः । अत एव क्रमात्तत्र तत्रोक्तम् ॥

[2]स्वरोदये त्वनुस्वारो भवेदध्यणुमात्रिकः ॥ ४५३ ॥

स्वारपरोऽनुस्वारोऽधिकोऽणुर्यस्य सोऽध्यणुः, स चासौ मात्रिकश्च-अधिक-पादमात्रः सपादमात्रस्स्यात् । यथा 'स्वाँ अहम्' ॥

*विरामश्च तयोर्मध्ये वैशेषिका विदीर्घयोः ॥ ४५४ ॥

---

१ 'अमी इति' इत्यादौ तु पूर्वं पूर्वमिति न्यायान्मध्यमैवेति सर्व० ।

२ स्वारोदयस्त्वनुस्वार इति, स्वरोदये ह्यनुस्वार इति च पाठः ।

* अत्र मञ्जरीकारः 'तदयमर्थः' इत्यादिना विषयदार्ढ्याय शिक्षाश्लोकान् उदाजहार—

'द्वयोरचोरसन्धिस्तु विवृत्तिरिति कथ्यते ।
पञ्चधा भिद्यते सा च नामतश्च विरामतः ॥

समयोर्दीर्घयोर्मध्ये पादमात्रा पिपीलिका ।
सवर्णद्वयमध्यस्था मध्यमा त्वर्धमात्रिका ॥

असवर्णपरा या सा पदैक्ये पाकवत्यपि ।
पादोना स्यादसाम्ये तु वत्सानुसृतिरित्यपि ॥

तत्कालस्त्वेकमात्रस्स्यादथ वैशेषिकोच्यते ।
विदीर्घयोरनुस्वारस्वरयोर्मध्यगा च या ॥

वैशेषिका सा विज्ञेया भवेदध्यणुमात्रिका ॥ इति ॥ शिक्षान्तरे तु—

ह्रस्वादिवत्सानुसृतिरन्ते वत्सानुसारिणी ।
पाकवत्युभयह्रस्वोभयदीर्घा पिपीलिका ॥

दीर्घोच्चस्वारयोर्मध्ये विसर्गो न भवेद्यदि ।
सावर्ण्यं यदि तत्र स्याद्विवृत्तिस्तु पिपीलिका ॥

पूर्वोक्तदीर्घमध्ये तु विसर्गो यत्र दृश्यते ।
सा मध्यमेति विज्ञेया विवृत्तिर्वेदवित्तमैः ॥

तयोरनुस्वारपरस्वरयोर्मध्ये विरामश्च[1] पारिशेष्यात्तयोरसमानदीर्घयोर्मध्ये विरामश्च सपादमात्रस्स्यात्। उभयत्र दृष्टा व्यक्तिः वैशेषिकसंज्ञा स्यात्। यथा–'विद्वाꣳ ऋतून्' 'त्वा एकविꣳशः' 'वा ऐन्द्रवायवः' 'द्यावापृथिवी आण्डौ ये अस्मे अस्मे' 'नो एषाम्'। 'ये अस्मे अस्मे' इत्यत्र वैशेषिकसंज्ञाया न मुख्यत्वम्। कुतः? एतल्लक्षणासम्भवात्, किन्तु स्फुरितत्वम्। उदाहरणन्त्वाभासतया दर्शितम्॥

प्रणवान्ते पवर्गोद्र्ध्वेऽवग्रहस्यान्त एव च॥ ४५५॥
वाक्यान्ते तु विरामश्च सार्धमात्रः प्रकीर्तितः॥ ४५६॥

प्रणवान्ते विरामोऽध्यर्धमात्रः स्यात् पवर्गे परे सति। तथा अवग्रहस्यावसाने विरामश्च सार्धमात्रः, तथा वाक्यान्ते विरामश्च। यथा–'ओम् १½ पाकयज्ञमिति पाक १½ यज्ञम्' 'द्वाभ्याम् १½' 'द्वि प्रतिष्ठो हि १½' 'वसुभ्यस्त्वा १½'॥

---

सवर्णादीर्घयोः पूर्वाद्विसर्गे स्वरितो न चेत्।
प्रोक्ता सोभयदीर्घीति विवृत्तिर्वेदपारगैः॥
सवर्णदीर्घयोः पूर्वाद्विसर्गो यत्र दृश्यते।
सवर्णदीर्घा सा ज्ञेया परतः स्वरितो न चेत्॥
विदीर्घयोरनुस्वारस्वरयोर्मध्यवर्तिनी।
वैशेषिका विवृत्तिस्स्यादेवमष्टौ विवृत्तयः॥ इति॥

अत्रेदमुच्यते—अस्यां व्यासभगवत्प्रणीतायां शिक्षायां विवृत्तेः पञ्चधैव भेदाभ्युपगमात्त-द्विरुद्धोऽष्टधा भेदः कल्पयितुं न शक्यः, किन्तु 'वत्सानुसारिणो'ति 'विवृत्तिष्षोढा भिद्यत' इति युक्तं वक्तुम्। तथा च 'आप उन्दन्तु' 'लोक इन्द्र क्रतुम्' 'त एनं भिषज्यन्ति' इत्यादौ वत्सानुसृतिः। 'ता उप' 'अग्ना३ इत्याह' इत्यादौ वत्सानुसारिणीति। किञ्च 'ऋग्विरामः पदविरामो विवृत्तिविरामस्समानपदविवृत्तिविरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण' (प्राति. २. १०. १३.) इति समानपदविवृत्तिविराम-स्यार्धमात्रत्वविधानात्कथमत्र पादोनमात्रत्वमिति। अत्रोच्यते—'प्र उगम्' 'अग्ना ३ इ' 'गृहा ३ इ' 'यज्ञपता ३ उ' इत्यादौ समानपदस्थत्वाद्विवृत्तेः प्रातिशाख्येनार्धमात्रत्वम्। 'उक्थ उक्थे' 'द्वे इति' 'धेनू इति' 'धिय इति धियः' इत्यादौ विवृत्तेः समानपदस्थत्वा-भावेऽपि एकपदत्वादनया शिक्षया पादोनमात्रत्वमिति न विरोधः। वत्सानुसारिण्या मात्रिको विराम इति शिक्षान्तरमत्र प्रसरति इति सर्वं॰।

१. पारिशेष्यात्तयोरनुस्वारपरस्वरयोर्मध्ये विरामः सपादमात्रस्स्यात्, असमानदीर्घयोर्मध्ये विरामस्सपादमात्रस्स्यात्, असमानदीर्घयोर्मध्ये विरामश्च इति पाठान्तरम्।

पदप्रणवयोर्नित्यं विरामस्स्याद्द्विमात्रिकः ॥ ४५७ ॥

पदञ्च प्रणवश्च पदप्रणवौ, तयोः पदप्रणवयोः पवर्गान्यवर्णपरप्रणवावसाने पदावसाने च विरामो नित्यं द्विमात्रस्स्यात्। यथा—'ओम् २ युञ्जानः २' प्रथमम् २' 'मनः २, तत्त्वाय २' 'सविता २' 'धियः २' 'अग्निम् २' 'ज्योतिः २' 'पशून् २, पाहि २' 'यज्ञस्य २'। पदकालेऽर्धानुवाकयोर्विरामश्च द्विमात्र एवेति नित्यशब्दार्थः। एवं क्रमकाले जटाकाले च, पदसम्बन्धात् ॥

द्रुताद्धल् स्वरसम्बन्धे तयोस्तत्स्वरकालवत् ॥ ४५८ ॥

व्यञ्जनस्वरयोस्सम्पर्के एकोच्चारणे सति द्रुतात् –त्वरितात् तयोर्हल्स्वर-योरुभयोरपि तत्स्वरकालवत् तस्य स्वरस्य काल एव स्यादित्यर्थः। यथा—रसं प्रति रसलिङ्ग इवेति बोध्यम्। एकमात्रसहितो द्विमात्रस्त्रिमात्रो वा। यथा—'वसवः' 'वायावेवास्य' 'माहौषा३मिति'। द्रुतादिति किम्? हलोऽर्धमात्र इति व्यर्थं स्यादिति ब्रूमः। तर्ह्युच्चारणकालो युक्त इति चेत्—लोके अधिकः विरोधिनमधिकमेव बाधते, भूषणत्वात, कदाचिदपि नाल्पम् इति न्यायात। तथैवात्रोच्चारणकालेन व्यञ्जनस्फुटत्वाभावात् इति ॥

अनुस्वारो द्विमात्रस्स्याद्रेफोष्मसु परेषु च ॥ ४५९ ॥

[1]रेफे ऊष्मसु च परेषु सत्स्वनुस्वारो द्विमात्रस्स्यात। यथा—'सꣳशितं मे' 'भुजिꣳहुवे' 'ज्योतीꣳषि कुरुते' 'ऋतूꣳर् ऋतुपते' 'उपाꣳशुपात्रेꣳशुम्' 'सꣳरराणाः' 'शोꣳसा मोदः' ॥

[2]संयुतोच्चार इत्येष एकमात्रः प्रकीर्तितः ॥ ४६० ॥

---

१. ह्रस्वात्परोऽनुस्वारो द्विमात्रस्स्यात् रेफे ऊष्मसु च परतः। ह्रस्वादिति कथं लभ्यते? 'मात्राद्द्विमात्रोऽनुस्वारः' इति शिक्षान्तरे ह्रस्वात्परस्यैवानुस्वारस्य द्विमात्रत्वविधानात् तस्यानुपपत्यभावात् ह्रस्वात्पर इति व्याख्यातम् इति सर्व०

२. मञ्जरीकारेण 'संयोगे परभूते चेदेकमात्र इति स्मृतः' इति सूत्रपाठं स्वीकृत्य तत्सोदा-हरणं व्याख्यायोक्तम्—'अत्रेदमनुसन्धेयम्—ह्रस्वपूर्वस्यानुस्वारस्यासंयोगे परे द्विमात्रत्वम् संयोगे परे एकमात्रत्वमिति। कुत एवमिति चेत्—दीर्घपूर्वस्य सर्वस्याप्यनुस्वारस्य शिक्षान्तरेणैकमात्रत्वविधानात्। अतो न कस्यचिदपि लक्ष्यस्य बाधः' इति।

संयुतोत्तरे–संयोगाक्षरे परे सति अनुस्वार एकमात्रस्स्यात्। यथा—'सगुंश्रवाह' 'श्रीगुंस्तृचान्' 'तपूगुंष्यग्ने' 'तं घ्नन्ति' 'संज्ञानम्' 'परमात्मं सरूपम्' इत्यत्रापि केवलत्वादेकमात्रो विज्ञेयः ॥

स्यातां सोर्ध्वे खथोर्ध्वे च ङनौ ह्रस्वाद्द्विमात्रिकौ ॥ ४६१ ॥

'सकार ऊर्ध्वो यस्मात्सः सोर्ध्वः तस्मिन् सकारपरे खकारे थकारे वा परे सति ङनौ-ङकार-नकारौ ह्रस्वात्परौ द्विमात्रौ भवेताम्। यथा–'सहङ्खसमानैः' 'हव्यवाहुंसमिन्त्से'। सोर्ध्व इति किम्? 'अहङ्खनामि वः' 'परिपन्थिनः'। ह्रस्वादिति किम्? 'प्राङ्खसोमः 'तान्थ्सुब्धान्' ॥

षपरा नित्यखथोर्ध्वे हकारे हल्परे तथा ॥ ४६२ ॥

सान्निध्यात् ह्रस्वात्परौ ङनौ द्विमात्रौ स्तः षकारपरे संहितासम्बन्धे खकारे थकारे च वा परे सति। यथा—'प्रत्यङ्खषडहः' 'षष्ठेऽहन्नहन्थ्षष्ठे' 'जायेरन्थ्षट् च'। अनित्यखथोर्ध्व इति किम्? 'प्रत्यङ्खषेति' 'वर्च इदङ्क्षत्रम्' अत्रापि। ह्रस्वात्परौ ङनौ द्विमात्रौ स्तः हकारे परे, तस्मिन् हकारे व्यञ्जनपरे यदि[2]। यथा–'आत्मन् ह्यङ्गानि' 'तस्मिन् ह्यात्मानम्'। हकारे हल्पर इति किम्? 'आत्मन् हा ३ इत्याह्वयत्' ॥

असंयुतश्च नो दीर्घान्मात्रिको यवहोत्तरे ॥ ४६३ ॥

दीर्घात्परोऽसंयुतो नकार एकमात्रस्स्याद्यवहे परे। यथा–'तान् यज्ञः' 'एतान् वै' 'एतान् होमान्'। अत्रास्य नादसंज्ञाभाव इत्ययमारम्भः[3] ॥

---

१. मञ्जरीकारः—सकार ऊर्ध्वो याभ्यां तौ सोर्ध्वौ, खश्च थश्च खथौ, सोर्ध्वौ च तौ खथौ च सोर्ध्वखथौ, तावूर्ध्वौ यस्मात्तस्मिन् स्थल इत्यर्थः। सर्वत्रापि निमित्तकार्यभाजोः सप्तमीप्रथमाभ्यां निर्दिष्टयोरन्वयासम्भवे एवमेव योज्यमिति।

२. ङकारस्यासम्भवान्नकारमात्रस्य ग्रहणमिति सर्व०

३. मञ्जरीकारः वेदतैजसवद्व्याख्याय लिखति—अत्रासंयुतस्त्वेकमात्र इत्येतावतैव सिद्धे किमन्यैः? अस्यां शिक्षायां नकार एवासंयुत इति परिभाषणात्। अत्रोच्यते—एतच्छिक्षाकारैश्शिक्षान्तरमवलम्ब्यैवमुक्तमिति ज्ञायते। शीक्षान्तरे तु दीर्घपूर्वस्य वपरस्यापि ङकारस्यासंयुतिविधानात् तद्व्यावृत्यर्थं नकारग्रहणम्। 'पराङ्वाव' इत्यादावसंयुतिविधानेऽपि 'हलो भक्तिः' इत्यर्धमात्रत्वं बोध्यम्। 'हलुत्तरम्' इति तुन

**ह्रस्वान्नादो द्विमात्रस्स्यादन्यत्राप्येकमात्रिकः ॥ ४६४ ॥**

ह्रस्वात्परो नादोऽवसाने उत्तमो द्विमात्रस्स्यात्। यथा–'युङ् असि' 'अक्रामन्-न-वः' 'तं-ते'। इतरस्थले-ह्रस्वपूर्वादन्यस्थले नाद एकमात्रस्स्यात्। यथा–'पराङ्-एतत्' 'तेन-तान्' 'ब्रह्मा३न्'॥

**केवलप्रणवे तु स्यात्स्वरस्सार्द्ध[1]द्विमात्रिकः ॥ ४६५ ॥**

'प्रत्येकप्रणवे स्वर ओकारोऽध्यर्द्धद्विमात्रस्स्यात्॥

---

प्रवर्तते, संयोगाभावात्। तथा चानया शिक्षया शिक्षान्तरेण वा स्वभावेन वा यद्यद-संयुतं व्यञ्जनं तत्सर्वमप्यर्धमात्रिकमिति पर्यवस्यति। अत एव 'विरामे व्यञ्जनस्यैव' इत्यत्र 'जनान् यातयति' 'तस्मिन् ह्यात्मानम्' इत्यादौ नकारस्य नादसंज्ञाभ्युपगमात् दीर्घपूर्वस्य यवह्परस्य नकारस्यैकमात्रत्वसिद्धेर्न तदर्थोऽयमारम्भः, अपि त्वसंयुतस्य सर्वस्यापि व्यञ्जनस्यार्धमात्रत्वप्रापणार्थमयमारम्भः। किञ्चासंयुतस्य व्यञ्जनस्य यद्येकमात्रत्वं स्यात्तर्हि अस्यैव नकारस्येति नियमविधिरपि भवितुमर्हतीति।

१. मञ्जरीकारोऽत्र प्रणवस्वरकालनिर्णयविषये विशेषं दर्शयति–केवलप्रणवे प्रत्येकप्रणवे य ओकारस्सः सार्धद्विमात्रिकः। ओकारस्याध्यर्धद्विमात्रत्वे मकारस्य 'हलो भक्तिः' इत्यर्ध मात्रत्वे त्रिमात्रिको भवति। अस्मिन्विषये सर्वसम्मतशिक्षायां विशेषस्स्मर्यते–

'प्रारम्भकश्चतुर्मात्रो वेदस्थस्स्यात्तदर्धकः।
अध्यायान्त्योऽनुवाकान्त्यः कर्माद्यश्च त्रिमात्रिकः॥
प्रारम्भाद्याः क्रमान्नादा मात्राणुद्व्यणुमात्रिकाः'। इति।

प्रारम्भकः–अध्यायारम्भे विहितः प्रणवश्चतुर्मात्रो भवति। अत एव मूलशास्त्रे 'ओमभ्यादाने' (पाणि० सू० ८.२.८७) अभ्यादनमारम्भः, तत्र प्रणवस्वरः प्लुतो भवतीति। तथैव कालनिर्णये–

तृतीयषष्ठनवमस्वरेष्वन्तेष्वृगर्धयोः ॥
त्रिमात्रत्वं प्रयोगे तु त्रिषु सन्ध्यक्षरेष्वपि।
स्वाध्यायारम्भशेषस्य प्रणवस्य स्वरस्य च॥
अध्यायस्यानुवाकस्यान्ते स्यादर्धतृतीयता।
ऋगन्तस्य च सन्धानेऽवसाने मात्रिकोऽधिकः॥ इति॥

अयमर्थः—तृतीयषष्ठनवमस्वरेषु अवर्णेवर्णोवर्णान्त्यस्वरेष्वित्यर्थः। ऋगर्धयोरन्तेषु ऋगन्तेऽर्धान्ते चेत्यर्थः। प्रयोगे यज्ञादिप्रयोगे त्रिषु सन्ध्यक्षरेषु स्वाध्या-

यारम्भशेषस्याध्यायारम्भ उपदिष्टस्य प्रणवस्वरस्य च त्रिमात्रत्वम्। ओकारस्य त्रिमात्रत्वे 'ह्रस्वान्नादो द्विमात्रस्स्यादन्यत्राप्येकमात्रिकः' इति मकारस्यैकमात्रत्वम्। तथा च 'प्रारम्भकश्चतुर्मात्रः' इति सङ्गतो भवति। यथा—'ओ३ म् १इषेत्वा'। 'ओ ३म्१ब्रह्मसन्धत्तम्' इत्यादि। 'केवलप्रणवे तु स्यात्स्वरस्सार्धद्विमात्रिकः' इति यदुक्तं तत्रोच्यते—प्रातिशाख्ये 'ओकारन्तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते' (प्राति० २.६.१) इति, एके आचार्याः प्रणवे विद्यमानमोकारमर्धतृतीयमात्रमुपदिशन्ति। ओकारस्य सार्धद्विमात्रत्वे मकारस्य 'ह्रस्वार्धकालं व्यञ्जनम्' (प्राति० १.१.३७) इत्यर्धमात्रत्वम्। 'अध्यायान्त्योऽनुवाकान्त्यः कर्माद्यश्च त्रिमात्रिकः' इति, 'अध्यायस्यानुवाकस्यान्ते स्यादर्धतृतीयता' इत्यनयोर्विषयः। अध्यायान्त्यो यथा—'ऋतुभिः कल्पयाति ओ२। म्।' 'समुद्रो बन्धुः ओ२। म्।' 'ऋध्नोत्येतेन ओ२। म्।' 'विवर्तने विवर्तने जुहोति ओ२। म्।'। अनुवाकान्त्यो यथा—'भूर्भुवस्सुवरग्न ओ२। म्।' 'भूर्भुवस्सुवरन्नमो२।म्।' भूर्भुवस्सुवर्महरो२। म्।' 'भूर्भुवस्सुवश्छन्द ओ२। म्।' 'पङ्क्ति पुनन्ति ओ२। म्। कर्माद्यो यथा—ओ२। म्। तथ्सवितुः ओ२। म्।'। 'वेदस्थस्स्यात्तदर्धकः' इति। वेदस्थः प्रणवोऽध्यायारम्भचातुर्मात्रिकप्रणवार्धकालो भवतीत्यर्थः। अस्मिन् प्रणवे मकारः परसंयोगादिर्विज्ञेयः। यथा—'ओं शान्तिश्शान्तिश्शान्तिः ओं भूः' इत्यादि। तथा च कालनिर्णये—

'समकारे तु वेदस्थप्रणवस्य द्विमात्रता।
स्वरमात्रं द्विमात्रं वा व्यञ्जनन्त्वणुमात्रिकम्॥ इति॥

'ओमिति ब्रह्म' 'ओ मापो ज्योती रसः' इत्यादावविकृतासंयुक्तमकारस्य श्रवणात् तस्यैवार्धमात्रत्वयोग्यतया ओकारस्याध्यर्धमात्रत्वम्, मकारस्यार्धमात्रत्वमिति 'समकार' इत्यादिनोक्तम्। 'स्वरमात्रं द्विमात्रम्' इति। यत्र वेदस्थप्रणवे मकार आदेशवशाद्वर्णान्तरं भवति तत्रौकारस्य द्विमात्रत्वं मकारस्थानिकव्यञ्जनस्य पादमात्रत्वम्। अत एव 'व्यञ्जनन्त्वणुमात्रिकम्' इति व्यञ्जनशब्दो गृह्यते। अन्यथा 'मकारस्त्वणुमात्रिकः' इत्येव वक्तुं शक्यते। यथा—'ओ२—न्तद्ब्रह्म' 'ओ२—ञ्जनः' इत्यादि। 'प्रारम्भकश्चतुर्मात्रः' इत्यारभ्याध्यायादिवेदस्थाध्यायान्त्यादित्रये च विहिते चतुर्द्वित्रिर्मात्राकाले प्रणवे क्रमान्नादा एकमात्रिकाणुमात्रिकद्व्यणुमात्रिककाला भवन्तीत्यर्थः।

'तस्तरीकरणादौ तु स्वरमात्रस्य दीर्घता' इति। तस्तरीकरणं नामाध्ययनमध्ये स्वाध्यायादन्येन सह भाषणम्, आदिशब्देन जपहोमादयो गृह्यन्ते। तत्र विहिते प्रणवे ओकारस्य द्विमात्रत्वम्; मकारस्यैकमात्रत्वम्। उदाहरणन्तु स्पष्टम्।

'ध्यानार्थस्यावसाने तु भवेन्नादोऽर्धमात्रिकः' इति । अत्र 'स्वरमात्रस्य दीर्घता' इत्यनुवर्तते । मुमुक्षोर्ध्यानादौ विहितस्य प्रणवस्य स्वरमात्रस्य दीर्घतेत्यर्थः । अन्यत्स्पष्टम् । तस्यैव मुमुक्षोर्ध्यानावसाने तु प्रणवस्य स्वरमात्रस्य दीर्घता, नादस्यार्धमात्रिकत्वम् । तथा च ध्यानावसानस्थः प्रणवस्सार्धद्विमात्रिक इत्यर्थः ।

'ऋगन्तस्य च सन्धानेऽवसाने मात्रिकोऽधिकः' इति । ऋगन्तस्य प्रणवस्य ऋगन्तरेण सन्धाने पूर्ववाक्यस्थमर्धतृतीयतेत्येतदनुषज्यते । तथाभूतः 'प्रणवः त्रिमात्र इति पूर्वमेवोक्तम् । यथा–'देवाञ्जिगाति सुम्नयो३मग्न आयाहि' । अस्यैव प्रणवस्यावसाने ओकारस्यार्धतुरीयमात्रत्वम् मकारस्यार्धमात्रत्वम् । यथा–'अपां रेतांसि जिन्वतो३।म्' । 'सन्देवत्रावभूवथो३।म्।' । ह्रस्वदीर्घप्लुतव्यतिरिक्तादोकारात् परस्य मकारस्य विशेषविधानाभावेऽर्धमात्रत्वमिति सार्वत्रिकी क्लृप्तिः ।

तदयमत्र सङ्ग्रहः—

'अध्यायादौ प्रणवे स्वरस्त्रिमात्रोम एकस्स्यात् ।
अनुवाकाध्यायान्ते कर्मादौ च त्रिमात्रिकः प्रणवे' ॥

सार्धद्विमात्र ओत्स्यात्तस्यान्त्यो मोऽर्धमात्रिको ज्ञेयः ।
वेदस्थे तु प्रणवे समकारेऽध्यर्धमात्र ओकारः ॥

मश्चार्धमात्रिकस्स्यादाहृत्यायं द्विमात्रिकः प्रणवः ।
तस्मिन्नेव प्रणवे पादन्यूनद्विमात्र ओकारः ॥

मस्संयुक्ताद्यश्चाणुमात्रिकस्सर्वसम्मतेनोक्तम् ।
प्रणवे वेदस्थे मश्चादेशवशादिहान्यथाभूतः ॥

अणुमात्रिकस्स ओच्च द्विमात्र ओमध्यणुद्विमात्रस्स्यात् ।
स्वाध्यायपाठमध्ये लौकह्यं भाषणस्य चाद्यन्ते ॥

प्रणवो विहितस्तत्र द्विमात्र ओत्स्यादन्य एकमात्रस्स्यात् ।
एवं वेदस्थस्य प्रणवस्येह त्रिधा विभेदस्स्यात् ॥

वेदविषयोऽयमेवं प्रणवष्षोढा विभिद्यते निखिलः ।
यज्ञर्गन्तप्रणवस्य च सन्धानेऽनुवाकवत्कालः ॥

अस्यैव त्ववसाने सार्धतुरीयः स्वरोऽर्धमात्रो मः ।
ध्यानादौ तु प्रणवे स्वरो द्विमात्रो म एकमात्रस्स्यात् ॥

ध्यानान्तप्रणवे तु स्वरो द्विमात्रोऽर्धमात्रिको मश्च ।
प्रणवस्वरूपमेवं बुध्वोपदिशेद्य एष आचार्यः ॥
इह चामुत्र च लोके भूसुरसुरपूजितश्चिदालम्बः ॥ इति ॥

मकारान्तो यजुष्युच्चस्स्वरिता[१] ओन्तदादिषट् ॥ ४६६ ॥

स ओकारो मकारान्तो यदा, तदा प्रणवसंज्ञ इत्युच्यते। एवमात्रेयशिक्षायामप्युक्तम्। किमिति?

'अदुकारमकाराश्च ज्ञेयास्सन्ति सदात्र तु।
तस्मात्सर्वश्चतुर्मात्र ओमिति प्रणवस्स्मृतः'॥ इति।

सोऽयं प्रणवो यजुर्वेदे उदात्तः कर्तव्यः। यथा—'ओम् दिवा एतस्य। येभ्यश्चैनत्प्राहुः ओम्'। 'पङ्क्ति पुनन्ति ओम्'। केवल इति किम्? 'ओन्तद्ब्रह्म' 'ओम्भूः' इत्यादीनां द्विमात्राकाल एव। ओन्तद्ब्रह्मेत्यनुवाक आदयष्षडोङ्काराः स्वरिता भवेयुः। यथा—'ओन्तद्ब्रह्म' इत्यादि। आदिषडिति किम्? 'सुवरोम्'॥

[२]अजेकद्वित्रिमात्रास्त्रिरेको द्विश्चैकगो द्विगाः ४६७॥

[३]'अवर्णेवर्णकोवर्णा' इति क्रमात्स्वरा एकद्वित्रिमात्रास्स्युः। तदादिवर्णाः—अकारेकारोकारलृकारश्चैकमात्रा इत्यर्थः। यथा—'उदित् कृषति' 'अक्लृप्तस्य क्लृप्त्यै'। मध्यमस्वराः—आकारेकारोकारऋकाराः। अन्त्याश्चत्वारः—एकारैकारौकारौराश्च द्विमात्राः। यथा—'गा वो वा एतदित्यादि। अवर्णेवर्णोवर्णानामन्तास्त्रयस्स्वरास्त्रिमात्रास्स्युः। यथा—'यज्ञपता ३' 'श्रृतꣳहवी ३ श्शमितः' 'पशू ३ र्नान्वारभ्या३' इति॥

---

१. स्वारास्स्युस्त्वोन्तदादिषट् इति पाठः।

२. अच एकद्वित्रिमात्रा इति पाठः।

३. 'अवर्णेवर्णकोवर्णाः' इति गृहीतानां स्वराणां क्रमेण मात्राकालोऽनेन निर्णीयते। अच् त्रिः एकद्विमात्रस्स्यात्। त्रिरित्यनेन अवर्णेवर्णकोवर्णानां त्रयाणां ग्रहणम्। अवर्णादिषु प्रत्येकमेकैकगणो ह्रस्वदीर्घप्लुतभेदेन त्रेधा विभिद्यत इत्यर्थः। एको द्विरित्येकशब्देनानन्तरोक्त ऋवर्णो गृह्यते। सः द्विः—एकद्विमात्रस्स्यादित्यर्थः। एकग इत्यत्र चशब्दान्वादिष्टैकशब्देन लृकारो गृह्यते। स लृकार एकगः—एकमात्रां गतः। एकमात्रिक इत्यर्थः। द्विगा इति। लृकारादनन्तरभूता एकारादयश्चत्वारो द्विगाः—द्विमात्रिका इत्यर्थः। क्रमेणोदाहरणानि यथा—'अग्ने तेजस्विन्' 'आप उन्दन्तु' 'यज्ञपता३विति'। 'इषे त्वा' 'ईमिन्द्रासु' 'श्रृतꣳहवी३श्शमितः'। 'उत्सन्न यज्ञः' 'ऊर्ध्वा अस्य' 'पशू३र्न'। 'ऋतवो वै' 'दश होतॄणाम्'। 'अक्लृप्तस्य क्लृप्त्यै'। 'एतद्ब्राह्मणानि' 'ऐन्द्रश्चरुम्' 'ओमासः' 'औदुम्बरेण' सर्व०

१

—

[1]त्रिमात्रत्वं विरामस्य ऋगन्तेऽर्धान्त एव च ॥ ४६८ ॥

अर्धस्यान्तोऽर्धान्तस्तस्मिन् विरामस्त्रिमात्रस्स्यात्, ऋगन्ते च। यथा--'अग्ने त्वन्नो अन्तमः३' 'उत त्राता शिवो भव वरूथ्यः३'। 'तं त्वा'॥

होता यक्षदिति त्वन्ते देवं बर्हिश्च पञ्चमे ॥ ४६९ ॥

[2]सहाम्भसि पितृप्रश्न ऋक्स्याद्वाङ् निधनेन चेत् ॥ ४७० ॥

[3]होता यक्षदादिष्वनुवाकेषु अन्त्यभवेत-ऋग्विरामस्त्रिमात्रस्स्यादित्यर्थः। यथा-'सङ्कथे वामस्य ३' 'वर्ष्मन्दिव इडस्पदे वेत्वाज्यस्य होतर्यज ३'। अन्त इति किम्? 'होतायक्षत्समिधेन्द्रम' इत्यादौ माभूत। पञ्चमे-देवम्बर्हिरित्यत्र। यथा-'वीताद्यजं३' 'देवी ऊर्जाहुती इषम्'। सहप्रश्ने यथा-'मामित३' 'देवा जीवनकाम्या यत्'। अम्भस्य पार इति प्रश्ने यथा-'जीवनञ्च दिशो दश३' 'मानोहिꣳसीत्'। पितृप्रश्ने यथा-'प्रयताभिरक्ता३' आसीदताम्। 'यज्ञस्य सन्ततिरसि' 'अविषन्नः पितुम्' 'दक्षिणासु नीयमानासु' इत्यादीनामन्ते विरामश्च त्रिमात्र एवेति केचित्, तद्वद्विश्रमाधिक्यादिति। 'वाङ्न आसन् नसोः प्राणः' 'निधनपतये नमः' इत्यनुवाकयोरेष विरामो न स्यात्। किन्तु वाक्यत्वात्सार्धमात्र एवेति॥

काण्डप्रश्नानुवाकान्ते दशाष्टपञ्च मात्रिकाः ॥ ४७१ ॥

[4]काण्डादीनां समाप्तौ विरामकालाः क्रमाद्दशादिमात्रा भवेयुः। काण्डान्ते यथा-'जनदुस्त्रियासु ओम् १०, ओं वायव्यग्ꣳ श्वेतम, यूयं पात स्वस्तिभिस्सदानः ओम्१०' 'ओं अग्निर्नः पातु कृत्तिकाः'। प्रश्नान्ते यथा-'ऋतुभिः कल्पयाति ओम् ८, ओं आप उन्दन्तु ओं शान्तिश्शान्तिश्शान्तिः ओम् ८, ओं शन्नो वातः

१. त्रिमात्रता विरामस्य; त्रिमात्रिको विराम इति च पाठः।

२. सहाम्भस्येति पाठः।

३. अत्र मञ्जरीकारेण 'संहिताग्रन्थे विद्यमानानामृचां द्विधा विभागः, पारक्षुद्रादौ चतुर्धा विभाग इति नियमः। यत्र द्विधा विभागस्तत्र पूर्ववचनेन त्रिमात्रिको विरामः, यत्र च चतुर्धा विभागस्तत्र 'वाक्यान्ते तु विरामश्च' इति सार्धमात्रिको विराम इत्येवं प्राप्तेऽभिधीयते' होतायक्षदितीति' अवतरणिकां दत्वा व्याख्यातस्सूत्रसन्दर्भः।

४. काण्डशब्देनाष्टकादयोऽपि गृह्यन्ते सर्व०।

पवताम्' । अनुवाकान्ते यथा—'पशून् पाहि ५, यज्ञस्य' । 'अनुख्यात्यै' ५, धिष्णिया वै, सुवा न इन्दुः ५, जातवेदसे ।

ग्रन्थानां परिपूर्णे तु त्रिगुणः काल उच्यते ॥ ४७२ ॥

[1]ग्रन्थानां समापने विरामः तत्काण्डविरामत्रिगुणकालः, त्रिमात्र इत्यर्थः। यथा-'योनिस्समुद्रो बन्धुः ओम् ३०' 'ओं ब्रह्मसन्धत्तम्' ॥

[2]ह्रस्वस्स्यादेकमात्रस्य द्विमात्रस्य तु दीर्घता ॥ ४७३ ॥
त्रिमात्रस्य प्लुतोऽचां हि पादो मात्राचतुर्थकः ॥ ४७४ ॥

अचां स्वराणामेकद्वित्रिकालाः उक्ताः । एकमात्राकालस्वरस्य ह्रस्वसंज्ञा स्यात् । यथा—'उदित् कृषति'। द्विमात्रस्वरस्य दीर्घसंज्ञा स्यात् । यथा—'कार्ष्णी' । त्रिमात्रस्वरस्य प्लुतसंज्ञा स्यात् । यथा—'त्वी ३ इत्यब्रवीत्' । एकमात्रे चतुर्णां भागानां प्रत्येकमंशः पादसंज्ञस्स्यात्, अणुसंज्ञश्च । यथा—'व्रतम्' । अत्र वकारस्य कालः ॥

वर्णानामेकद्वित्रिमात्राकाला उक्ताः । मात्रादिनिर्णयोपयोगिनीं वृत्तिं दर्शयितुमाह—

शीघ्रं विलम्बितं मध्यं तिस्रो वाक्यस्य वृत्तयः ॥ ४७५ ॥
कालान्यता च यद्वृत्तौ तदा कर्मान्यता भवेत् ॥ ४७६ ॥

[3]वाचो वृत्तयो व्यापारास्तिस्रो भवन्ति । शीघ्रं—त्वरितम्, विलम्बितम्—

---

१. ग्रन्थानां परिपूरणे-समापने इति सर्व० ।

२ ह्रस्वस्स्यादेकमात्रश्चेदिति पाठः ।

मात्रायाश्चतुर्थांशः पादमात्रिको भवति । अणुमात्रिक इति पर्यायनाम । तथा च शिक्षा-'चतुर्भिरणुभिर्मात्रा परिमाणमिति स्मृतम्' इति । तदनुसारेण 'हलुत्तरं हलेवैतदणुमात्रं प्रकीर्तितम्' इत्यादि प्रयोगोवेदितव्य इति सर्व०

३. वर्णानां मात्राकालोपयोगिवृत्तिं दर्शयितुमाह—शीघ्रमिति । वाक्यस्य वेदवाक्यस्य शीघ्रं-शीघ्रोच्चारणम्, विलम्बितम्—विलम्बितोच्चारणम्, मध्यम्-सामयेनोच्चारणमिति तिस्रो वृत्तयः—त्रयो वाग्व्यापारा बोध्याः । कालान्यता भवेत् । वृत्ताविति जात्येकवचनम्,

कालविलम्बश्च, मध्यमम्—तयोर्मध्यमप्रकारश्चेति । अत्रैकैकव्यापारादकारादीनां वर्णानां कालान्यत्वञ्चेत्तदा कर्मान्यत्वम्-अन्यवर्णोच्चारणत्वं भवेत् ॥

प्रयत्नात्कालतश्चोक्तास्तद्वर्णा उद्भवन्ति हि ॥ ४७७ ॥

[1]उक्तात्प्रयत्नात्स्थानकरणाद्युच्चारणात्तद्वर्णा उद्भवन्ति । अनेनास्य वर्णस्य तस्य वर्णस्य च सवर्णत्वमसवर्णत्वञ्चेत्युच्यते । हि यस्मात्कारणादेतत्

---

यदित्यव्ययम् । पूर्वोक्तायामेकैकस्यां वृत्तौ कालान्यता यदि विलम्बिता द्रुता मध्या वाचस्तिस्रो हि वृत्तयः ।

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् ॥

इति यस्मिन् काले या वृत्तिर्विहिता तस्मिन्नेव काले ततोऽन्या वृत्तिराश्रिता चेत्तदा कालान्तरविहितवृत्याश्रयणात् कर्मान्यता भवेत् । कर्म च क्रिया-वाग्व्यापारः । तस्य भेदो भवेत् । ततश्च शास्त्रातिलङ्घनप्रयुक्तदोषस्स्यादित्यर्थः । यद्वा—'कालान्यता च यद्वृत्तौ तदा वर्णान्यता भवेत्' इति पाठे तु तस्मिन् वृत्तित्रये निर्णीतकालेषु स्वरेषु विशेषविधानेन कालान्यता चेत्तदा तस्य वर्णस्य वर्णान्यत्वं स्यात् । यथा—सन्ध्यक्षरेषु द्विमात्रत्वं नियतम्, तथापि प्रणवस्थस्य ओकारस्य 'केवलप्रणवे तु स्यात् स्वरस्सार्धद्विमात्रिकः' इत्यादिबहुविधानात्तस्य वर्णान्यत्वं स्यात् । अत एव संज्ञाप्रकरणे 'ओदौप्रङ्क्षौ क्रमादोम्योत्' इति प्रणवस्थस्यौकारस्य पृथक् ग्रहणम् । इदमपि कालप्रयुक्तवर्णान्यत्वं स्वरेष्वेव न व्यञ्जनेषु । तदुक्तं प्रातिशाख्ये—'परिमाणाच्च पञ्चमात्' (प्राति. २. ११.२) इति । तथा च स्वरेषु कालाभेदप्रयुक्तवर्णान्यत्वाभ्युपगमात् प्रणवस्थ ओकारः रङ्क्षौ चेति स्वरत्रयमधिकमभ्युपेत्य 'नव दशाज्झलो ळश्च' इत्यचामेकोनविंशतिसंख्या सङ्गता भवति । 'षोडशादितस्स्वराः' ( १.१.५. ) इति प्रातिशाख्ये स्वराणां षोडशसंख्या तु तस्मिन् ग्रन्थे मात्रावैषम्याविधानादित्यनुसन्धेयम् ।

१. अत्र प्रयत्नशब्देन स्थानकरणप्रयत्ना उच्यन्ते, प्रयत्नस्योभयसम्बन्धित्वात् । अयमर्थः—उक्तात्स्थानकरणप्रयत्नात्तद्वर्णाः ककारादयः ते वर्णा उद्भवन्ति—उत्पन्ना भवन्ति । तथा कालतः परिमाणाच्चाकारादयः स्वरा उद्भवन्ति । एतेन व्यञ्जनानां सत्यपि कालभेदे वर्णान्यत्वं न भवतीत्ययमर्थः 'परिमाणाच्च पञ्चमात्' ( प्राति. २. ११. २. ) इत्यस्य व्याख्याने गार्ग्यगोपालयज्वना स्फुटीकृतः ॥

प्रयत्नसाम्यं न तु वृत्तिसाम्यम्। यद्वा कालान्मात्रिकस्य वर्णस्य मात्रिकवर्ण इत्यादिवृत्तिसाम्यमेतत् ॥

तदभावे वर्णाभावस्सम्यग्ज्ञेयं द्वयं ततः ॥ ४७८ ॥

[1]अत्र तत्प्रयत्नाभावे तु वर्णोच्चारणमेव नास्ति, किन्तु जन्तुध्वनिमात्रमेव। तद्वृत्त्यभावे तु केवलप्रयत्नेन स्वरस्य दीर्घादिकं न भवति। द्वितीयवृत्तिपाठे तु ह्रस्वाद्यल्पकालवर्णाभावः ॥

मध्यमां वृत्तिमाश्रित्य[2] चैवं कालास्सुनिश्चिताः ॥ ४७९ ॥
प्रातिशाख्यादिषु ह्यत्र वृत्तिस्सैव समाश्रिता ॥ ४८० ॥

यस्मात्कारणात्प्रातिशाख्ये लक्षणशास्त्रे च नानाशिक्षासु च मध्यमां वृत्तिमाश्रित्य कालास्सुनिश्चिताः, कालादीनां मात्रादीनां निर्णयः कृत इति अत्र सैव वृत्तिरस्माभिरपि समाश्रिता ॥

इति सूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षा-
विवरणे कालनिर्णयप्रकरणम् ॥ २७ ॥



१. तदभाव इति तच्छब्देन प्रकृतौ प्रयत्नकालौ गृह्येते। तत्र प्रयत्नाभावे वर्णा न जायन्ते, किन्तु जन्तुवद्ध्वनिमात्रमेव। तथा कालाभावे 'ओष्ठताल्ववर्णेवर्णे व्यस्तसंवृतमेत्यपि' इत्यादाविकारादेः सत्स्वपि स्थानकरणप्रयत्नेषु मात्राकालानाश्रयणे ह्रस्वदीर्घप्लुतभेदेन वर्णान्यत्वं न भवति। ततः कारणात् प्रयत्नः कालश्चेत्येतद्द्वयं सम्यग्ज्ञेयम्। सर्वः०

२. आलम्ब्य एवं कालाः, वृत्तिस्साप्यवलम्बिता, वृत्तिस्सैवावलम्बिता इति च पाठः।

## उच्चारणफलप्रकरणम् ॥ २८ ॥

**न विश्रमश्चैकपदे प्रोन्न्यानिस्सुविसम्परम्[1] ॥ ४८१ ॥**

एकपदस्य मध्ये विश्रमो न कर्तव्यः । यथा–'ऋतुस्था यज्ञा यज्ञियेन' । परिगणनायामिङ्ग्यपदस्याप्येकपदत्वादवग्रहान्ते विश्रमो न कार्यः । यथा–'बाहुभ्यामिति बाहु भ्याम्' 'अफ्स्वित्यप् सु' इत्यादि । अनेन पदान्ते विश्रमः प्राप्तः, तस्य क्वचिदपवादमाह-प्र, उत्, नि, आ, निः, सु, वि, सं, एतेभ्यः परमूर्ध्वं न विश्रमः कार्यः, पदकूटत उत्तरपदेन संहिता यदि यथा–'तं तेन प्रगाहते' 'स्वायुषोदोषधीनाम्' 'कर्षतिन्यन्ये' 'भवन्त्वा प्रजा म आ मा' 'तन्निरवपत्' 'मालुभित्थाः' 'विपाजसा' 'वि ज्योतिषा' 'समित ॐ सङ्कल्पेथाम्' । उत्तरपदेन संहितेति किम् ? 'मर्त्येष्वा-त्वम' 'वीडयस्व सु' 'अम्ब धृष्ण' इत्यादीनां नित्यावसानत्वाद्विश्रमस्य मुख्यस्थाने सत्येव निषेधो न भवति[2] ॥

**च न ह्यु वा स्म ह त्वीं वैन्वेतेभ्योऽधश्च कूटतः ॥ ४८२ ॥**

च, न, हि, उ, वा, स्म, ह, तु, ईम्, वै, नु एतेभ्योऽधः–पूर्वतो न विश्रमः कार्यः पदसमूहतः पूर्वपदेन संहिता चेत् । यथा –'वाजश्च प्रसवश्च' 'संवदेत न सहासीत' 'यच्चिद्धि ते' 'तस्मा उ हव्यम्' 'यज्ञपतिर्वा' 'न ह स्म वै' 'त्वँ ह यत्' 'इति ते तु' 'इत्याहोतेम्' 'प्रजा वै पशवः' 'वसतु नु नः' । पूर्वपदेन संहितेति किम् ? 'कामं यजेत' 'नासोमयाजी' ॥

**व श्रीर्देधया उच्चास्स्थापितव्यास्स्वरं गताः ॥ ४८३ ॥**

वकारश्च श्रीश्च देकारश्च धकारश्च धकारश्च यकारश्च एते वर्णाः स्वरंगताः स्वरपरा उदात्ताः स्थापितव्याः, पुनरारम्भयोग्यत्वात् । यथा–'वसवस्त्वा' 'श्रीर्हि मनुष्यस्य' 'देव सवितः' 'धर्मयाते' 'धृष्टिरसि' 'यदेकादशेऽहन्' । स्वरपरा इति किम् ? 'वायुरसि' 'देवा वै' ॥

**नैवं तृतीयसम्बन्धाः प्रयोगान्तर इत्यपि ॥ ४८४ ॥**

---

१. सुविसम्परे इति पाठः ।

२. कूटत इत्युत्तरवचनादुत्कृष्यत इति चशब्दार्थः सर्व०

तृतीया अनुवाकाः प्रश्नाश्च, तृतीयसम्बन्धाश्चेति तद्द्विगुणत्रिगुणादयः षष्ठनवमद्वादशादय इत्यर्थः। ते न स्थापितव्याः प्रयोगमध्ये-तत्कर्मविनियोगमध्ये रुद्र-पशुबन्ध-पितृसूक्तस्थलमध्येऽपि। यथा—'विवा एष इन्द्रियेण' 'वसवस्त्वा धूपयन्तु' 'ये वाजिनं परिपश्यन्ति'। हिरण्यवर्णा इति घोषवत्वात् केचिदुदाहरन्ति। रुद्रप्रकाशकमन्त्रस्थले यथा—'द्रापे अन्धसः'। पशुबन्धस्थले यथा—'प्रह्रियमाणाय' इत्यादि 'वरुणेनास्य' इति पर्यन्तम्। तत्र यथा—'वा एतत्पशुम्'। पित्रनुवाके यथा—'यत्कामास्ते' 'योस्य कौष्ठय जगतः'। अशुभशब्दादयोऽपि न स्थापयितव्या इत्यपिशब्दार्थः। 'वसिष्ठो हतपुत्रः' 'यथा वै पुत्रो जातो म्रियते' 'वध्यं प्रपन्नम्' ॥

युक्तोर्ध्वं व्यञ्जनान्तश्च दीर्घं गुर्वितरल्लघु ॥ ४८५ ॥

युक्तः-संयोग ऊर्ध्वो यस्मात्तदक्षरञ्च, व्यञ्जनमन्तं यस्य तदक्षरञ्च दीर्घमक्षरञ्चैतत्सर्वमक्षरं गुर्विति जानीयात्। यथा—'सर्वस्य' 'अभरत्' 'सँशितम्' 'धियः' 'देवा वै'। अन्यदक्षरं लघु इति विज्ञेयम्। यथा—'जनयति' ॥

तत्त्रिस्त्रिरक्षराश्चैव गणा इति बुधैस्स्मृताः ॥ ४८६ ॥

तत्—गुरु लघु इति यदुक्तं तत्—तत्र त्रिस्त्रिरक्षराणि अचो येषान्ते गणसंज्ञास्स्युः। यथा—गावो वै, वदति इत्यादि।

त्रिलो नः स्वस्त्रिगुरुर्मो भूरादौ केन्दू यभौ शुभम् ॥ ४८७ ॥
द्यौस्तोऽन्ते सोऽनिलस्तापं [१]मध्येऽग्न्यर्कौ रजौ क्रमात् ॥ ४८८ ॥

त्रिलः त्रीणि लघूनि यस्य सो नः—नगणसंज्ञः। अस्य गणस्य स्वः-स्वर्गोऽधिदेवतेति वर्णिता। यथा—भवति। त्रिगुः—त्रीणि गुरूणि यस्य सो मः-मगणः। तस्य भूः-भूमिः अधिदेवता स्यात्। यथा-गावो वै। एतत्पद्धत्यनुसारेण क्रमादादौ लगौ यभौ। आदि लघुर्यगणः, आदिगुरुर्भगणश्चेत्यर्थः। केन्दू-कञ्च इन्दुश्च केन्दू। कमुदकं यगणस्याधिदेवता, इन्दुश्चन्द्रो भगणस्याधिदेवता। यथा यगणः-इषे त्वा, यथा भगणः—धावति। अन्ते लघुर्यस्य सः तः-तगणः। अस्य गणस्य द्यौराकाशोऽधिदेवता। यथा—द्वे वाव। एते नगणादयः पञ्च शुभं ददुः। ननु तगणस्यैतद्वचनफले वाच्ये पूर्ववचनफलं कथमुपयुज्यते? पृथक्करणादिति ब्रूमः। अन्ते

१. मध्येऽग्नीनौ इति पाठः इनस्सूर्यः।

तृतीयाश्च चतुर्थाश्च क्षत्रजातय ईरिताः । ४९६ ॥

उत्तमाश्चैवमन्तस्था वैश्या हि परिकीर्तिताः ॥ ४९७ ॥

[1]अनुस्वारो विसर्गश्च ह्यूष्माणोऽवरजास्स्मृताः ॥ ४९८ ॥

स्पष्टोऽर्थः । अत्र विशेषस्यानुक्तत्वादेते [2]चतुश्चत्वारिंशन्मूलवर्णा इत्युच्यन्ते । जातिविवेकस्य प्रयोजनं वक्ष्यति ॥

यदन्यजातिरुच्येत तत्तत्संहारको भवेत् ॥ ४९९ ॥

यद्यज्जातीयानां वर्णानामुदात्तादिस्वराणाञ्चान्या जातिरुच्यते-अन्यथोच्चारणे सति तत्तज्जातिसंहारको भवेत्-तत्प्रयुक्तदोषभाक्स्यादेवेत्यर्थः । शिक्षान्तरेऽपि—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्' ॥इत्यादि॥

[3]यज्जात्युच्चारणे तेषां तज्जातिपरिरक्षणम् ॥ ५०० ॥

येषां यज्जातिस्तज्जात्युच्चारणे सति तेषां वर्णानाम् उदात्तादिस्वराणां तदुक्तजातिपरिरक्षणं सम्यक्तद्वर्णोच्चारणं कुर्यादित्यर्थः । अनेन तद्वेदफलं लभेदिति यावत् ॥

वर्णोच्चारण [4]इत्यत्र समग्रं लक्षणं स्मृतम् ॥ ५०१ ॥

न्यूनातिरेकराहित्यं [5]ब्रह्म भक्तिर्यथोच्चरेत् ॥ ५०२ ॥

स्पष्टोऽर्थः । शम्भुशिक्षायामप्येवमेव वर्णितम् । यथा—
'व्याघ्री यथा हरेत्पुत्रं दंष्ट्राभ्यां न च पीडयेत् ॥
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत्' ॥ इति ॥

---

१. 'शूद्रास्स्युश्शषसा हश्च ह्यनुस्वारो विसर्गजः' इति मञ्जरीकारसंमतः पाठः ।

२. मञ्जरीकारः 'स्वराश्च प्रथमाश्चैव' इत्यविशेषेणोक्तत्वाद्दीर्घप्लुतयोरपि ग्रहणेन मूलवर्णानां चतुश्चत्वारिंशत्संख्यां न स्वीकरोति ।

३. सूत्रात्पूर्वम् 'अन्यथा' इति पाठः क्वचित् ।

४. वर्णोच्चारणविषये इति पाठः ।

५. ब्रह्मभक्त्या इति पाठः ।

प्रातिशाख्येऽपि —

नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदीरयेत् ।
पयः पूर्णमिवामत्रं हरन् धीरो यथामति ॥ इति ॥
( प्राति० २. ५. ८. )

सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः ॥ ५०३ ॥
एतद्युक्तः पठेद्वेदं स वेदफलमश्नुते ॥ ५०४ ॥

वर्णः सुव्यक्तः—स्थानकरणादिनियमेन सम्यगुच्चरितः । [1]किञ्च पदानां यक्तश्छेद इत्यर्थः । सुस्वरः—उदात्तादिस्वराणां नासादिदोषराहित्यम्, धैर्यम्—

---

१. यद्वा सुव्यक्तः पदच्छेद इत्यर्थः । सुस्वरः—उदात्तादिस्वराणां सुशब्देन नासादिदोषराहित्यम्, धैर्यमव्यग्रता, तच्चित्तत्वम्—तद्वेदाधीनत्वम्, इत्यध्येतुश्चत्वारो गुणा विहिताः । एवं विधः पुरुषो यस्सः वेदफलम् इति पूर्ववद्व्याख्याय मञ्जरीकारः प्रकृतविषयोपष्टम्भकतया कानि चन वचनानि प्रदर्शयति—तथा पुराणेऽपि—

'विद्यानामुत्तमा विद्या वेदविद्या समीरिता ।
अतस्तद्दातुरस्यैव लाभस्स्वर्गापवर्गयोः ॥
विद्यानाञ्च परा विद्या ब्रह्मविद्या समीरिता ।
अतस्तद्दानतो राजन् सर्वदानफलं लभेत् ॥ इति ।

देवीपुराणेऽपि—

वेद एव द्विजातीनां साधनं श्रेयसः परम् ।
अतोऽस्याध्यापनाभ्यासात्परं ब्रह्माधिगच्छति ॥
तमेव शीलयेत्प्राज्ञश्शिष्येभ्यस्तं प्रदापयेत् ।
तदभ्यासप्रदानाभ्यां तत्त्वं ब्रह्माधिगच्छति ॥ इति ।

तथाह याज्ञवल्क्यः—

सर्वधर्ममयं ब्रह्म प्रधानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम् ॥
यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम् ।
वेद एव द्विजातीनां साधनं श्रेयसः परम् ॥
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
वेदविद्याविहीनस्य विद्याजालं निरर्थकम् ।
कण्ठरज्जुविहीनायाः कामिन्या इव भूषणम् ॥
अशिक्षितानां वेदेषु शास्त्राभ्यासो निरर्थकः ।
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ॥ इति ।

**अव्यग्रता, तच्चित्तत्वम्-तद्वेदे लीनत्वम् इत्यध्येतुः चत्वारो गुणा विहिताः । एवंविधः पुरुषो वेदफलमश्नुते । एवं शम्भुशिक्षायामपि—**

**'सुतीर्थं सुव्रतं शुद्धं साम्नाय्यं सुप्रतिष्ठितम् ।**
**सुस्वरेण सुवक्त्रेण ब्रह्मलोके महीयते' ।। इति ।।**

---

महाभारते—

यो ब्रूयाच्चापि शिष्येभ्यो धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां स तुल्यफलमश्नुते ।। इति ।

ब्रह्मपुराणे—

न तत्कल्पसहस्रेण गदितुं शक्यते फलम् ।
यद्वेददानादाप्नोति स्वल्पादपि महामते ।। इति ।

विष्णुधर्मोत्तरेऽपि—

वेददानादवाप्नोति सर्वयज्ञफलं नरः ।
उपवेदप्रदानेन गन्धर्वैस्सह मोदते ।। इति ।

भविष्योत्तरपुराणे—

अपुत्रो लभते पुत्रमधनो लभते धनम् ।
सदाध्ययनसंयुक्तः परे ब्रह्मणि लीयते ।। इति ।

स्कान्दपुराणे—

संहितापाठमात्रेण यत्फलं प्रोच्यते बुधैः ।
पदे तु द्विगुणं विद्यात्क्रमे तु च चतुर्गुणम् ।।
वर्णक्रमे शतगुणं जटायान्तु सहस्रकम् ।
अध्यायादौ तु यत्प्रोक्तं त्रिरावृत्या तु योजयेत् ।।
अध्यायान्ते तथा प्रोक्तमृषिभिश्शौनकादिभिः ।
मध्यस्थानां पदानान्तु षडावृत्त्या तु योजयेदिति ।।

आनुशासनिकपर्वणि नारदस्तोत्रे—

संहितायाश्च सर्वस्यां स्थितस्योपस्थितस्य च ।
पदद्वयक्रमस्यापि जटायाश्च स पारगः ।। इति ।

वेदाङ्गान्युच्यन्ते—

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।
छन्दसां लक्षणञ्चेति षडङ्गानि विदुर्बुधाः ।।
अनुपदञ्चानुपदं छन्दोभाषासमन्वितम् ।
मीमांसान्यायतर्काश्च उपाङ्गानि विदुर्बुधाः ।।

प्रातिशाख्येऽपि—

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम्॥ इत्यादि।

देवीपुराणे—

सन्ध्या स्नानं जपो होमः स्वाध्यायः पितृतर्पणम्।
वेद एव द्विजातीनां साधनं श्रेयसः परम्॥
अतोऽस्याध्ययनाभ्यासात्परं ब्रह्माधिगच्छति॥ इति।

**अध्यायस्य मुखे चान्ते भूत्वा विद्वानतन्द्रितः॥ ५०५॥**
**संरक्षणाय वेदानामोङ्कारं तूच्चरेत्सदा॥ ५०६॥**

वेदस्योपक्रमावसानयोः गायत्र्यादीनाञ्च रक्षायै अप्रमत्तस्सन् प्रणवमुच्चरेत्। सम्यक्पठेदित्यर्थः। तथा शिक्षान्तरमपि—

'वेदस्योपक्रमे विद्वानवसानेऽप्यतन्द्रितः।
उच्चरेत्प्रणवं ब्रह्मरक्षायै छन्दसां स्फुटम्॥
प्रणवं सम्पुटं कृत्वा गायत्रीं वेदमुच्चरेत्'॥ इति।

अनेन ध्वनिवत्प्रतिप्रश्नस्यैष नित्यविधिरित्युच्यते॥

वैपरीत्ये दोषमाह—

**स्रवत्यादावनुक्ते च तस्यान्ते तु विशीर्यते॥ ५०७॥**

वेदस्यादौ प्रणवेऽनुक्ते सति वेदः स्रवति, समापनेऽनुक्ते तु शिथिलस्स्यात्। तस्मात्प्रयत्नेन प्रणव उच्चार्य इत्यर्थः॥

**आद्यन्तप्रणवौ तस्य स्यातामङ्गानि वै ततः॥ ५०८॥**

---

प्रथमा व्यासशिक्षा च लक्ष्मीशिक्षा द्वितीयिका।
भारद्वाजी तृतीया च शिक्षारण्या तुरीयिका॥
पञ्चमी शम्भुशिक्षा च षष्ठी चापिशली तथा।
सप्तमी पाणिनेः शिक्षा अष्टमी कौहली तथा॥
वासिष्ठी नवमी चैवं नव शिक्षाः प्रकीर्तिताः।
यो जानाति भारद्वाजशिक्षामर्थसमन्विताम्॥
स ब्रह्मस्थानमाप्नोति गृहमेधी गृहं यथा॥ इति।

एवं विधान्यन्यान्यपि सन्ति वचनानि तथापि विस्तरभयान्न लिख्यन्त इति। सर्व०।

'तस्मात्कारणाद्वेदस्याद्यन्तोक्तप्रणवावेव तस्य वेदस्याङ्गानि शिरःप्रभृतीनि भवेताम् ॥

संहितापदसन्धीनां वर्णानां लक्षणान्यपि ॥ ५०९ ॥
छन्द आदीनि शास्त्राणि ह्युपाङ्गानि विदुर्बुधाः ॥ ५१० ॥

संहितालक्षणं भारद्वाजशिक्षातो विज्ञेयम् । पदस्य लक्षणम्—

समानसन्धिर्विलङ्घ्यं नवोध्वोऽवर्णिनोत्तरम् ।
प्रग्रहस्सर्वसन्धिश्च इङ्ग्याद्यानिङ्ग्यलक्षणम् ॥
ह्रस्वादेश उदात्तत्वं पदस्य लक्षणं स्मृतम्' ॥ इति ।

हल् विसर्जनीयाच् स्वराणां सन्धेर्लक्षणम् । वर्णानां ध्वन्यादिलक्षणं छन्दः-कल्प-व्याकरणादीनि शास्त्राणि चोपाङ्गानि-तत्समीपाङ्गानि स्युरित्यर्थः ॥

ध्वनिः स्थानञ्च करणं प्रयत्नः कालता स्वरः ॥ ५११ ॥
देवता जातिरेतैश्च वर्णा ज्ञेया विचक्षणैः ॥ ५१२ ॥

अत्र ध्वन्यादीनां जात्यपेक्षयैकवचनम् । एवं नादादिध्वनयः, कण्ठादि-स्थानानि, जिह्वामूलीयादिकरणानि, ईषत्प्रकृष्टादिप्रयत्नाः, अण्वादिकालाः, गुरु लघु चेति, उदात्तादिस्वराः । प्रथमादीनां वाय्वादयोऽधिदेवताः, स्वरादीनां ब्राह्मणादिजातयश्चेति एतैर्धर्मैर्वर्णा विज्ञेया इत्युक्तम् ॥

यजुर्वेदः पिङ्गलाक्षः कृशमध्यो बृहद्गलः ॥ ५१३ ॥
बृहत्कपोलः कृष्णाङ्घ्रिस्ताम्रः काश्यपगोत्रजः ॥ ५१४ ॥

---

१. मञ्जरीकारोऽत्र कानिचन प्रमाणानि निर्दिशति—

आद्यन्तप्रणवौ नित्यौ यथाहरिपदं तथा ।
सविसर्गं हरिपदं प्रणवात्पूर्वमिष्यते ॥
हरिपदे विसर्गस्य न सन्धिः प्रणवोत्तरे ।
विसर्गस्यार्धमात्रत्वं विरामो मात्रिकः स्मृतः ॥
वत्सानुसृतिसंज्ञा च विवृत्तेरिष्यते बुधैः ।
तस्मात्परश्चतुर्मात्रस्त्रिमात्रः प्रणवः क्रमात् ॥
आदौ हरिपदं सर्वमुदात्तञ्चेष्यते बुधैः ।
अन्ते रिशब्दस्वारस्स्याद्विसर्गः प्रचयः स्मृतः ॥
ओमो नित्यनुदात्तत्वं सर्वत्र प्रोच्यते तथा ।
प्रमाणं लक्षणं यद्वच्छिष्टपाठस्तथैव च ॥ इति ।

इत्येवं साङ्गोपाङ्गं वेदस्वरूपं यो जानीते स पूतो भवति ॥

लक्षणेन विनाध्यायं यः पठेदपि सर्वदा ॥ ५१५ ॥
नैव तत्फलमाप्नोति स विप्रस्सुजनोऽपि हि ॥ ५१६ ॥

स्पष्टम् ॥

संहितापदवर्णानां कालादीनाञ्च लक्षणम् ॥ ५१७ ॥

तत्तत्स्वरूपमुक्तम् । वर्णलक्षणमिति वर्णसंहिताङ्गसंहितालक्षणस्थानमित्यर्थः ॥

हल् विसर्गाच्स्वराणाञ्च सन्धेर्लक्षणमेव च ॥ ५१८ ॥
एतानि सम्यगष्टौ च विदित्वा लक्षणानि यः ॥ ५१९ ॥
अध्यायं स पठत्येव द्वितीयं ब्रह्म कथ्यते ॥ ५२० ॥

स्पष्टम् ॥

संहिताञ्च पदं वापि क्रमञ्चैव जटां पठन् ॥ ५२१ ॥
लक्षणज्ञस्तदाप्नोति ब्रह्मज्ञानं हि शाश्वतम् ॥ ५२२ ॥
वेदामृतं पिबेद्यस्तु स तस्माद्भूसुरो भवेत् ॥ ५२३ ॥
एवञ्च व्यासशिक्षाविद्भूसुरेन्द्रस्स कथ्यते ॥ ५२४ ॥
श्रीमत्परब्रह्मनुपूर्णचित्तश्रीव्यासकण्ठस्थितान्च शिक्षाम् ।
एतामभिज्ञः प्रयतः पठेद्यस्सर्वानभीष्टांश्च समश्नुते वै ॥ ५२५ ॥

इति व्यासाचार्यविरचिता शिक्षा समाप्ता ॥

श्रीशान्तरङ्गिणा व्यासशिक्षाया भाष्यमुत्तमम् ।
वेलिमिकन्यापूर्जातसूरावधानिना कृतम् ॥

इति श्रीवेलिमिकन्यापूर्जातसूर्यनारायणसूरावधानिविरचिते वेदतैजसाख्ये व्यासशिक्षाविवरणे उच्चारणफलप्रकरणम् ॥ २८ ॥

समाप्तोऽयं ग्रन्थः ॥



# व्यासशिक्षा—सूत्रार्धसूची *



* सूत्रार्धसंख्यैव दत्ता न तु पृष्ठसंख्या ।

सूत्रार्धसूची समाप्ता ।